॥ श्रीरस्तु ॥

श्रीमद्वेदान्तदेशिकग्रन्थमालायां

[वेदान्तविभागे द्वितीयसम्पुटम्]

# मीमांसापादुका, सेश्वरमीमांसा, न्यायपरिशुद्धिः, न्यायसिद्धाञ्जनं च ॥


पर्यवेक्षकः परिष्कारकश्च

श्रीकाञ्ची प्रतिवादिभयङ्करमठाधीश जगद्गुरु

गादि श्रीकृष्णमाचार्यस्वामी, तथा

॥ श्रीकाञ्ची प्रतिवादिभयङ्करः अण्णंगराचार्यः ॥



प्रकाशनादि सर्वाधिकारी :

विद्वान् अ. संपत्कुमाराचार्यः, M. A.

२९, सौथ माडवीधी, कञ्जीवरम् ।

[इदमेव पुस्तकप्राप्तिस्थानम्]

मदरास्—लिबर्टी मुद्रणालये सम्मुद्यत ।

1940

Price : 3—0—0] ॥ मूल्यं रूप्यत्रयमात्रम् ॥ [Postage Extra.

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

## [ वेदान्तविभागे द्वितीयसम्पुटम् ]

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्ताचार्यविरचिता

# ॥ मीमांसापादुका ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

यस्य श्रीर्नित्यहृद्या निरुपधिगृहिणी नन्दति च्छन्दवृत्त्या यस्यापत्यं प्रजेशप्रभृति विहरणं यस्य विष्वक्परार्थम् ।
लीलाभोगापदेशव्यतिभिदुरमिदं यस्य विश्वं विभूतिः सत्तासिद्धानुकम्पानिधिरवतु स नस्सप्तलोकीगृहस्थः ॥ १ ॥

यस्मादस्माभिरेतद्यतिपतिकथितप्राक्तनप्रक्रियोद्यत्कर्मब्रह्मावमर्शप्रभवबहुफलं सार्थमग्राहि शास्त्रम् ।
तं विष्वग्भेदविद्यास्थितिपदविषयस्थेयभूतं प्रभूतं वन्देयात्रेयरामानुजगुरुमनघं वादिहंसाम्बुवाहम् ॥ २ ॥

वेद्यं वेदैरशेषैर्विधितदितरयोर्विश्वमाज्ञापयन्तं धर्मैराराधनीयं पितृसुरमुखतश्शाश्वतं धर्ममेकम् ।
साङ्गाधीताक्षरौघस्वरससमुदितापातधीजातरागान्मीमांसेमह्यनन्तं व्यवहितवपुषं कञ्चुकैरुज्झितं च ॥ ३ ॥

निर्दोषाध्यक्षसिद्धं कथककुहनयापह्नवार्हं न किंचिन्न्यायैः कस्यापि क्लृप्तिः कथमपि न भवेदन्यथासिद्धिमद्भिः ।
निर्बाधान्नापि वाक्यादवगतमनृतं निश्चितेऽप्यान्यपर्ये त्रिस्थूणेऽस्मिन्प्रमाणैस्स्थिरमतिभवने माति मीमांसितोऽर्थः ॥ ४ ॥

मीमांसेत्येकमेतच्छ्रुतिविषयनयस्तोमसंग्राहि शास्त्रं षट्काध्यायांघ्रिभेदैर्भिदुरतरतनुस्सा त्रिभिः काण्डभेदैः ।
सङ्गत्या च त्रयाणां क्रमनियतिरपि स्यादिहौचित्यवत्या विंशत्या लक्षणैः खल्वियमवयविनी वृत्तिकारोपदिष्टा ॥ ५ ॥

विद्यास्थानानि चत्वार्यगणिषत पृथग्वेदरूपत्वसाम्ये द्वे चाप्यन्ये विभक्ते ह्युपपदघटितं बृंहणत्वं दधाने ।
मीमांसाशास्त्रसाम्येऽप्यत इह घटते भिन्नविद्यापदत्वं मैवं मन्वादिभिस्तत्पृथगनुपठनाभावतस्तत्प्रहाणात् ॥ ६ ॥

काले कौमारिलादिष्वधिकबहुमतौ कस्त्वदिष्टं ग्रहीता कस्मै रोचेत पूर्वश्रुतहृतमनसे क्लृप्तिरन्येति चेन्न ।
स्वीकुर्वन्त्यसदुक्तं स्वमतगुणतिरस्कारकप्रत्यनीकं प्रत्यग्विद्याधुरीणप्रथितबहुमहावंशजाता महान्तः ॥ ७ ॥

किंचित्केनापि दृष्टं प्रतिहतविषयं तेन तत्ते च तैस्तैर्द्वे चोपादायिषातां द्वितयमपि सदित्यप्रमत्तो न वक्ता ।
इत्थं सत्येकभक्तैरितरपरिहृतौ न व्यवस्थानसिद्धिः प्रत्येतव्यं तदर्थ्यं पटुतरमतिभिः प्राक्तनं नूतनं वा ॥ ८ ॥

शिष्याचार्यौ विरुद्धं न तु मतमधुना साधयन्तौ प्रसिद्धौ स्वाभीष्टाच्छास्त्रमन्यत्सुरसचिवमुखैः कल्पितं किं न विद्मः ।
तस्माद्ब्रह्मज्ञजैमिन्युपरचितमिदं त्याज्यमेतन्निरीशं मैवं व्याघातहानौ मुनिवचसि मुधा बाह्यवद्दृष्टिदौस्स्थ्यम् ॥ ९ ॥

सूत्राणामैदमर्थ्यं स्वरसगतिवशात्सम्प्रदायाच्च सिध्येद्दृढीयोभिः प्रमाणैः क्वचन बहुशिरःप्रत्ययश्शान्तिमेति ।
सन्दिग्धे वाक्यशेषप्रभृतिरभिदधे निर्णयोपायभूतष्षड्भिस्तात्पर्यलिङ्गैरपि खलु निखिलं दुर्णयं निर्णयन्ति ॥ १० ॥

सूत्रोक्तं नूनमन्यद्विदुरथ च मिथो व्याहतं वृत्तिकाराः प्राज्ञैर्नारायणार्यैस्तदिह विदधिरे सम्मतास्सूत्रभेदाः ।
सामाचार्योक्तिरेषा समरमुखगता तत्र सत्सङ्गृहीतेर्नत्वा नुत्वैनमाह द्रमिडगुरुरपि ब्रह्मविद्वाक्यभाष्यम् ॥ ११ ॥

आदौ कृत्स्नप्रतिज्ञा ह्यधिगमसुभगा धीसमाधायकत्वात्कर्माश्लिष्टां प्रतिज्ञामपि खलु घटयेत्तन्त्रमावर्तनं वा ।
यद्वा भागप्रतिज्ञाप्रणयनफलिता कृत्स्नचिन्ताप्रतिज्ञा त्रेधाऽपि ह्यत्र सौवी गतिरियमुदिता सूत्रकृद्भावविद्भिः ॥ १२ ॥

सूत्रे भाष्यादिके च क्वचिदुपचरणावृत्तितन्त्रानुषङ्गाध्याहाराः कल्पनीयास्तदिदमनुमतं पण्डितैस्तत्रतत्र ।
सत्यामक्लिष्टवृत्तौ ह्यनुचितमितरन्नैव सर्वत्र तस्मादसत्सिद्धान्तवर्त्मन्यवहितमतिभिर्व्याहृतं न प्रणोयम् ॥ १३ ॥

निर्दिष्टा सूत्रकर्त्रा प्रथमत इह चेत् कृत्स्नवेदार्थचिन्ता किं पश्चाद्ब्रह्मचिन्ता पृथगनुपठिता संमतं चैकशास्त्र्यम् ।
सत्यं कृत्स्नप्रतिज्ञाकरणकबलितास्तत्तदर्थाः पुरस्तादध्यायादौ विभज्य स्फुटमभिदधिरे तद्वदत्रेति पश्य ॥ १४ ॥

योऽसौ शारीरकांशे निरवधिमहिमा साध्यते विश्वकर्ता यो वा को वा स भावी तदितरसदृशस्सोऽपि यष्टव्य इष्टः ।
निर्धारस्तस्य पश्चादथ तु परमिहानागतावेक्षणं स्यात् कर्मैवं किं न पश्चात्तनमिति न विभोश्शुद्धधीर्नात्र मृग्या ॥ १५ ॥

अन्तर्यन्तारमेकं निखिलदिविषदां प्राप्यबुद्ध्यैव केचित्तज्जातीयं च बुद्ध्वा कतिचन यदि वा सन्दिहाना यजन्ते ।
तेषामस्त्यन्तवत्तु स्मृतमिह हि फलं नैवमध्यात्मशास्त्रं तत्त्वे बुद्धे यथावस्थितभजनदशालब्धितस्तत्पदाप्तेः ॥ १६ ॥

चिन्तारभ्यत्वसूत्रे किमपि हि तदुपस्थापकं ख्यापनीयं तेनातश्शब्द उक्तो न खलु स विफलः पूर्वसंपिण्डितो वा ।
नासावार्षोपदेशो नयपदमनुसंधित्सतां सूत्रसृष्टेस्तस्माच्चिन्तार्थचिन्तास्पदमधिकरणं स्यादुपोद्घात एषः ॥ १७ ॥

निष्पन्नापातबुद्धेर्विषयविशयनाभ्यूहनिर्धारणार्थान्न्यायः पञ्चाधिकुर्वन्नधिकरणमिति व्याहरन्त्यार्यवृद्धाः ।
तस्मादेकैकशः प्रत्यधिकरणमितं पञ्चकं प्रेक्षमाणश्शुद्धाङ्गन्यायदृष्टिश्श्रुतिगणविषयभ्रान्तिभेदं प्रमार्ष्टि ॥ १८ ॥

स्वेन ख्यातिं विवृण्वन्विषय इह मतिस्संशयो निश्चयान्या तेनाभ्यूहो विचारः प्रमितिरभिदुरा निर्णयस्तर्कमानैः ।
तत्साध्यं कर्तुरिष्टं फलमनितरजं तानि पञ्चाधिकुर्वन्न्यायो बाधं विपक्षे प्रथयति विविधं स्वाङ्गदोषो न दृष्टे ॥ १९ ॥

आहुश्चान्ये दशाङ्गान्यधिकरणगणे वेद्यमाद्यं तथाऽर्थे संशीतिं तन्निदानं विविधमपि तथा संगतेश्च प्रकारम् ।
तादर्थ्यार्थं विचारं फलफलिभवनं पक्षयोर्न्याययुग्मं निर्णीतिं तत्फलं चाप्ययमपि निपुणन्यायवित्संप्रदायः ॥ २० ॥

अत्राहुः केचिदाद्याध्ययनविधिरसावक्षराणां गृहीत्यै तस्मादर्थे विवक्षा न भवति न ततस्तस्य चिन्तेति पूर्वः ।

पक्षोऽन्यस्तु स्वशक्त्या प्रभवति निगमः स्वार्थबोधे सतर्कस्तेनाधीतार्थचिन्ता स्फुरितबहुफला स्यादिति स्थापनेति ॥ २१ ॥

अन्येऽनाघ्रातदोषान्मिषति निगमतश्शक्यहेतौ पुमर्थे मानत्वे निर्विशङ्केऽप्यवसरफलयोर्हानितो नार्थचिन्ता ।
इत्युद्यत्पूर्वपक्षप्रशमनमनसा सूत्रमाद्यं प्रणीतं कल्प्या तत्कालसिद्धिः फलमिह विशयभ्रान्त्यबोधव्युदासः ॥ २२ ॥

आनन्तर्योक्तिरत्र ह्युचितमवसरं शक्तितो वक्तुमीष्टे धर्मप्राथम्यसिद्ध्यै त्वथ पदमिति यद्योजनाभेदतस्तत् ।
हेतूक्तिर्निर्णिनीषावधिरिह गमयेन्निर्णयाप्तेः फलत्वं तस्मात्तत्क्षेपणीयस्त्वयमुचिततया दर्शितः पूर्वपक्षः ॥२३ ॥

वेदाधीतेर्न पूर्वं न च सह घटते वेदवेद्यार्थचिन्ता पश्चात्तु स्नानपूर्वैरवसरहरणं तत्कथं सेति चेन्न ।
स्नानादेः प्राग्विचारस्तदनुगुणधनाद्यार्जनन्यायतस्स्यादूर्ध्वं च श्रावयित्राद्यवसरनयतोऽमुष्य लभ्योऽवकाशः ॥ २४ ॥

ज्ञातं किंचिन्न चिन्त्यं न च तदविदितं तत्क चिन्तेति चेन्न ज्ञाताज्ञातांशभाजि स्वपरमतजुषां चिन्तनस्य प्रवृत्तेः ।
सामान्यात्तन्निरासे विहतिरविहता को विशेषो विशेषे विंशत्यध्यायतोऽसावविशदविशदीकारसाफल्यकल्प्या ॥ २५ ॥

ख्यातस्तर्कोऽप्रतिष्ठस्स्वयमिह मुनिना सूत्रितं चैवमेतत्तस्मान्मीमांसमानैरपि निगमगतिर्दुर्निरूपेति चेन्न ।
तर्कस्य ह्यप्रतिष्ठां क्वचिदभिदधता दर्शितो यस्तु पन्थास्तत्संवादेन सर्वं न भवति शिथिलं शिक्ष्यमाणं सुधीभिः ॥ २६ ॥

नास्तिक्यारम्भकत्वं मुनिभिरभिहितं यत्तु मीमांसकानां तत्प्रायो हैतुकेषु प्रविशति यदि वा पूर्वपक्षप्रवृत्तौ ।
शास्त्रज्ञानं च बुद्धेश्चलनजनकमित्युक्तिरन्याशया स्यान्नोचेद्रोचेत शङ्काकबलितमनसे केवलः क्वोपदेशः ॥ २७ ॥

धर्मज्ञानां मुनीनां मतमिह भिदुरं धर्मविद्याख्यसिद्धं स्वोक्तार्थाद्वैपरीत्यं स्वयमभिदधते तत्क चिन्तेति चेन्न ।
कर्तव्यानां विकल्पे मुनिवचनमिते धर्मतैवोभयत्र व्याख्याभेदाद्विकल्पे त्वनवगतिभवे शिष्टमेवैकशेष्यम् ॥ २८ ॥

न्यायाख्यं धर्मविद्यास्थितिपदमुदितं तत्रतत्राप्तशास्त्रे तेनैवालं तदन्यद्भवति कृतकरं नीतिमात्रप्रवृत्तेः ।
इत्येतन्नानुयोज्यं नयपथविषयो मानतर्कादिमात्रं मीमांसायां तु तत्तच्छ्रुतिगतिविषया नीतिभेदा निरूप्याः ॥ २९ ॥

वेदार्थव्यक्तिरस्तु स्मृतिगणसहितैस्सेतिहासैः पुराणैरङ्गैरन्यैश्च किं तद्वद पुनरपि यत्तत्र मीमांसितव्यम् ।
तन्न स्मृत्यादिकेऽपि ह्यवितथसरणिर्नीतिशुद्ध्यैव साध्या सद्भिस्साफल्यविद्भिस्तदिह बहुफला कल्पितेयं त्रिकाण्डी ॥ ३० ॥

शिक्षां वर्णस्वरादेस्सुपदविभजनं तन्निरुक्तं विचित्रां छन्दोवर्गव्यवस्थां समयनियमनं साध्वनुष्ठानक्लृप्तिम् ।
स्मृत्याद्यैर्भागयुग्मप्रथनमथ नयस्थापनं च श्रयन्ती मीमांसा वेदवाक्ये व्यपनयदमनी वृत्तिमर्थ्यां व्यनक्ति ॥ ३१ ॥

मीमांसासूत्रवृत्तिप्रभृति निगमवन्न स्वरूपेण नित्यं विच्छेदश्च प्रवाहे नियत इतरथा पूर्वहानाद्ययुक्तेः ।
तस्मात्तन्मध्यकालेष्विव भवतु सदा नैरपेक्ष्यं श्रुतीनां तन्न प्रज्ञापराधप्रशमनरुचिभिस्सूरिभिस्सूत्रक्लृप्तेः ॥ ३२ ॥

धर्मादेर्निर्णये हि श्रुतिरिह करणं सा च नित्यानपेक्षा मीमांसा क्वोपकुर्यादिति नुयत इदं सेतिकर्तव्यताकम् ।
न स्यादत्रानवस्था विधिषु चरमविध्यन्तवन्नैरपेक्ष्यात्सिंहारण्यादिनीत्या मिथ उपकुरुतो मानतर्कौ यथार्हम् ॥ ३३ ॥

नित्याम्नायप्रसाध्ये न खलु करणनिष्पादकं किंचन स्यान्निष्पन्ने चानपेक्ष्यं करणमिति वदन्वक्ति च स्वेष्टभङ्गम् ।
योग्यत्वादेर्विमर्शो न हि भवति मुधा तर्कतोऽस्यापि तद्वत्स्यादेवं सन्निपत्योपकृतिरितरथा वेति चिन्त्यं यथार्हम् ॥ ३४ ॥

श्रुत्यङ्गौ शब्दतद्वच्छकनमथ सहव्याहृतिर्व्याक्यमन्यैराकाङ्क्षा प्रक्रियाङ्गेष्वथ पुनरुदितस्संनिधिस्संनिधानम् ।
नामाप्याध्वर्यवादि स्फुरदवयवशक्त्यन्वितं नामधेयं तेषामेषां विरोधे प्रथममधिगुणं तेन पाश्चात्यबाधः ॥ ३५ ॥

सर्वं स्रष्टा स देवः प्रकृतिपुरुषतत्कर्मपूर्वैस्सहायैस्तद्वानुक्तस्तदन्ये किमुत जनिमतां किं न सामग्र्यधीनम् ।
तर्केणानुग्रहोऽतः प्रमितिजनकतां प्राणयेत श्रुतीनां स्पष्टे तर्कानपेक्षा क्वचिदपि न तथाभावसार्वत्रिकत्वम् ॥ ३६ ॥

केनेदानीं सुसाधा जगति मितधिया कृत्स्नवेदार्थचिन्ता मध्यः काण्डश्च लुप्तस्थितिरिह निगमैरल्पशेषैरभावि ।
प्रज्ञातव्ये सशेषे प्रमितमपि खलु स्यादनाश्वासपात्रं तच्चिन्त्यं कल्पसूत्रप्रभृति कृतधियः शक्यचिन्ता न दुष्येत् ॥ ३७ ॥

आदत्ते ब्रह्मचारी स्वविहितमनघं न स्वयं चिन्तितार्थस्तद्वत्कुर्याद्गृहस्थप्रभृतिरपि मुधा तत्र मीमांसनं चेत् ।
तन्नाशेषैः परोक्त्या स्वचरितचरणं श्रद्दधानाभिनन्द्यं मूलं जिज्ञासमानैः स्वयमधिगतये निर्विशङ्को विचारः ॥ ३८ ॥

स्वीकृत्यानर्थतां तद्विरहमपि विधेरान्यपर्यैतराभ्यां पक्षौ पूर्वापरौ ये परिजगृहुरिह स्वोक्तिबाधादयस्स्युः ।
व्युत्पत्त्यादिस्वभावात्स्वत उपजनितापातधीतः प्रवृत्तौ मीमांसाक्षेपतत्स्वीकरणकथनयोर्न क्वचिद्व्याहतिस्स्यात् ॥ ३९ ॥

स्वाध्यायस्यार्थवत्वाच्छ्रवणमभिदधेऽधीतवेदस्य भाष्ये तत्खल्वापातबोधप्रजननशकनव्यक्तिसिद्ध्यैव भाष्यम् ।
नैरर्थक्यं तु शङ्कास्पदमिह न भवेत्सद्भिरध्यापितानां नो चेच्छुश्रूषणादिप्रयतनकथनं दुस्सहं कस्सहेत ॥ ४० ॥

प्राच्यं स्वाध्यायलाभं स्वयमिह तु फलं स्वान्यसिद्धं विहाय व्यर्था कौमारिलानामनियतगतिमद्विश्वजिन्न्यायशङ्का ।
चिन्तावैधत्वभङ्गे त्ववसरविहतिः स्नानशिष्ट्येति मन्दं स्यात्कालश्श्रावयित्राद्यवसरवदिति स्थापितं पूर्वमेव ॥ ४१ ॥

अव्युत्पन्नस्य शब्दः कथमिव जनयेत्काञ्चिदापातबुद्धिं स्वाङ्गैश्चेत्तत्र चैवं ग्रह इह तु स किं साङ्ग इत्यल्पमेतत् ।
साङ्गेष्वापातबोधं स हि सह जनयेत्संस्कृतप्रायदेशे दृष्टश्चाङ्गोपकारस्तदनुगुणमतस्तद्गृहं केचिदूचुः ॥ ४२ ॥

तत्साम्ये त्वर्थचिन्ता क्रमनियतिगतिर्नेक्ष्यतेऽङ्गाङ्गिवर्गे दौष्कर्यं यौगपद्ये तत इह कथमारम्भ इत्यप्यचिन्त्यम् ।
सौकर्ये तारतम्यात्स्वयमुपनिपतच्छ्रावकादिक्रमाद्वा स्वेच्छावैचित्र्यतो वा क्रम इति सकलारम्भसंपूर्तिसिद्धेः ॥ ४३ ॥

सिद्धं साध्यं च धर्मं प्रभवति गदितुं धर्मशब्दोऽथवाऽर्थादाराध्यादेर्विचारः स्फुरतु निगदितः कृत्स्नचिन्तोद्यमश्च ।
स्वाध्यायत्वाविशेषे स्थितवति निखिलेऽधीतनानांशचिन्ता केषांचित्त्वेकदेशाध्ययनमगतितस्ते तु नात्र प्रसक्ताः ॥ ४४ ॥

धर्मस्सूत्रे द्वितीये ननु परिपठितश्चोदनालक्षणोऽर्थस्तेनास्मिन् सिद्धधर्मग्रहणमनुचितं तन्न तल्लक्षणैक्यात् ।
शास्त्रोक्तेष्टाभ्युपायस्स इति खलु समं लक्षितौ सिद्धसाध्यौ स्वीकार्यस्स्वेष्टसिद्ध्यै य इह स तु भवेत्तस्य तस्मिन्नुपायः ॥

आसंसारं प्रसिद्धे भगवति सहसा बिभ्यतोऽपह्नवोक्तेर्नेशानः क्षिप्यते किं त्वनुमितिरिति ये भक्ततां भावयन्ति ।
भद्रास्ते भारतादिप्रणिहितमनसां नास्तिकत्वं कुतस्स्यान्नित्यं धर्मं जहुर्ये विचिनुम इह तान्वेदवादान् कुवाचः ॥ ४६ ॥

सद्वाराद्वारवृत्तिद्वितयनियतया वाचकानां प्रवृत्त्या सर्वश्रुत्यर्थभूतः श्रुतिभिरभिहितस्तस्य चोक्त्या तथाऽन्यैः ।
तस्मादीशो वितन्वन्निजमहिमबलाद्विश्वमेकातपत्रं प्रख्यातस्सार्वभौमः पशुभिरिव न संवेद्यते मोहनिघ्नैः ॥ ४७ ॥

धर्मद्वारा विचार्यं निखिलमनुसृतं छत्रिनीत्याऽथवा स्यात्तात्पर्यारोहि सर्वं प्रथयितुमजहल्लक्षणेयं समीची ।

आपातस्फूर्तिसाम्यादनभिमतपरीहारनित्योन्मुखानां हेयप्रख्यापनार्थं ध्रुवमियमखिलैरत्र निर्धारणीया ॥ ४८ ॥

धर्मादेव प्रयुक्तादभिदधति सतां धर्मकामार्थमोक्षान्नान्यार्थौ काममोक्षौ धनमबहुफलं दोषवर्गान्वितं च ।
सिद्धानेकाधिकारैर्धृतिकृदयमतस्सेव्यते सावधानैरादावेतं निबध्नन्विषयफलयुतं शास्त्रमाविश्चकार ॥ ४९ ॥

तत्तत्कर्मप्रवाहप्रभवरुचिभिदातारतम्यानुरोधाद्वेदे वात्सल्यभाजि व्यतिषजति चतुर्वर्गचर्योपदेशः ।
उक्तं मोक्षप्रधाने त्रिकमितरदपि ह्यादितो भारतादौ विस्रम्भार्थं तु मुक्तेस्तदितरकथनं कीर्तितं सात्वते च ॥ ५० ॥

अस्यासौ ग्रन्थराशेर्विषय इति मतिः प्रेक्षितॄणां स्वतस्स्यान्मोघा पूर्वं तदुक्तिर्नतिरिव न हि सा भाविनी भद्रचर्या ।
उद्देशोऽप्यर्थसिद्धस्तदुचितवपुषो लक्षणस्य प्रणीतौ सत्यं संक्षिप्तदृष्टेर्मतिरवदधती संदिहक्षेत शेषम् ॥ ५१ ॥

आप्तत्वं ग्रन्थकर्तुर्यदि विमतमिह स्वेन किं तत्फलोक्त्या तन्निर्धारे ततस्तत्फलमनुमिमते निष्फला सेत्यसारम् ।
सन्देहेपि प्रवृत्तिं [सफलयितु] प्रजनयितुमियं कल्पते विश्वदृष्ट्या निश्शङ्कानां निजेष्टं प्रमुखयति ततो धुक्षयेत्संजिघृक्षाम् ॥

सूत्रेऽस्मिन्नास्ति नीतिर्विषयफलकथामात्रमेवोपजीव्यं यत्साम्नां वक्ष्यमाणं तदनुसरणतोऽधीतिरध्यायशेषः ।
इत्याहुः केचिदेतन्मृदुफलमपि चाधर्मचिन्ताऽप्यकारोपश्लेषात्कल्पनीयेत्यपि परिजगृहुः क्लिष्टगत्यन्तरं तत् ॥ ५३ ॥

वक्तुं कश्चित्प्रबन्धं यदि विषयफले तस्य पूर्वं ब्रवीति स्पष्टः सम्बन्धवर्गः किमिति पुनरिमं वर्णयेतेत्यवर्ण्यम् ।
तत्तत्सम्बन्धवर्गप्रमथनकथनोद्दण्डवैतण्डिकोक्तिव्यामुग्धच्छात्रषण्डभ्रमभिदुरगिरामानृशंस्यं न शास्यम् ॥ ५४ ॥

काम्यं कर्मैव धर्मस्सुखजनकतया दुःखहेतुस्त्वधर्मो धर्मोऽधर्मश्च न स्यादनुभयजनकं नित्यमित्याहुरेके ।
मन्दं तन्नित्यवर्गेऽप्यनभिमतनिवृत्त्याद्यभीष्टार्थवत्त्वाद्धर्मत्वे दुर्निवारे पृथगभिलपनं गोबलीवर्दवत्स्यात् ॥ ५५ ॥

ज्ञानं सूत्रे विचारस्तदधिकरणतो निर्णयस्त्वर्थलभ्यश्चिन्तायां सन्प्रयोगो विधिपरिहरणाद्रागसिद्धिं व्यनक्ति ।
धर्मस्येत्यत्र षष्ठी प्रतिपदविहिता यद्यपि स्यात्तथाऽपि प्रोक्ता कृद्योगजेयं समसनविषयश्शावराकूतमन्यत् ॥ ५६ ॥

जिज्ञासां निर्णिनीषां विदुरिह कतिचित्तत्र गम्यो विचारस्तस्यैवारम्भयोगादिह स तु भवतु ज्ञानमिच्छाधिरूढम् ।
सामान्योक्तिर्विशेषे प्रकरणवशतो विन्दते स्वां प्रतिष्ठां नोचेद्विश्रान्तिरस्याः कथमिह भवतां निर्णयाख्ये विशेषे ॥ ५७ ॥

रागप्राप्तो विचारो यदि वितथमिदं तद्विधानाय सूत्रं मैवं विध्यन्तरत्वान्नहि तदकरणे पापमत्र प्रकाश्यम् ।
प्राप्ता रागात्प्रवृत्तिस्त्ववसदनवती पूर्वपक्षोक्तयुक्त्या प्रत्यापद्येत सिद्धान्त्यभिहितनयतस्सेष्टहेतुः प्रसिद्धा ॥ ५८ ॥

सम्यङ्न्यायैः परीष्टिः करणमवगतं लोकतस्तत्त्वबोधे नैवास्मिन्विध्यपेक्षा न यदि कथमसौ नेष्यते भोजनादौ ।
रागप्राप्ते हि तस्मिन्नियमयति विधिः प्राङ्मुखत्वादिमात्रं तद्वन्मीमांसमाने स्वयमथ नियमाः केवलं सन्तु केचित् ॥ ५९ ॥

कृत्ये रागं वितन्वन्विधिरपि पुरुषं प्रेरयेत्तत्र काम्ये रागाभावान्निवृत्तो न भवति फलभाक्तेन न प्रत्यवेयात् ।
नित्ये स्यादन्यथाऽत्र त्वविधिसमुदिताद्रागतस्संप्रवृत्तौ शुद्धां विन्देत बुद्धिं तदभवन इह प्रत्यवायस्त्वनुक्तः ॥ ६० ॥

स्वेच्छाया हेतुतायामनियतिरिति चेत्तन्न दत्तोत्तरत्वात्काचित्क्या त्वप्रवृत्त्या ऋतुगमननयात्सन्ततिं सा न जह्यात् ।
वैधत्वस्थापनेऽपि ह्यलसजडविधित्यागिनो न प्रवृत्तास्तस्मादास्माकदृष्ट्या स्वयमिह यतनं तत्क्षमे स्थापनीयम् ॥ ६१ ॥

अध्येतुस्स्वोपयुक्तावगतिरथ मनाक्तद्बुभुत्सुः प्रवत्स्यन् संरुद्धः पूर्वयुक्त्या परत इह पुनः प्रस्थितः प्राप्स्यतीति ।
ज्ञात्वोत्स्वप्नायिताद्वा किमपि नयविविक्त्या हि तत्र व्यतिस्ते रागादेव प्रवृत्तिः प्रथममिह विधिप्रेरणाकाङ्क्षिणोऽपि ॥ ६२ ॥

व्यासत्वासन्नतार्थैर्ग्रहणमिह फलं तेनचावृत्तिसिद्धिर्वैतुष्यन्यायतस्स्यात् फलति च नियमोऽप्यन्यतस्तद्वदेव ।
वर्णैस्सामर्थ्यवद्भिस्त्रिभिरिति विधयस्स्वर्गकामादिनिष्ठास्संप्राप्ता नैरपेक्ष्यं न तदितरसहा द्रव्यभाव्ये यथा हि ॥ ६३ ॥

$[प्रत्यक्षादिप्रमाणैर्निजविषयमितौ विध्यपेक्षा ह्यसिद्धा शब्दोऽन्यार्थस्स्वमर्थं प्रकटयितुमलं भद्रदीपादिनीत्या ।
शक्तिर्नार्थे स्वकीया यदि नियमविधिर्दृष्टहानेर्न सिध्येत् वाक्ये विध्युक्त्यभावेऽप्यवगतिरुचिता व्यर्थवाक्ये यथा हि ॥

स्वर्गे वाऽऽचार्यके वा फल इह कथिते जायते स्वार्थबुद्धिः न ह्यन्यत्रोपयोगे विधिवचनबलाद्धार्यते शब्दशक्तिः ।
बाधो हेतोश्च दोषो न भवति निगमे मानताऽन्यानपेक्षा तस्मान्नाम्नायभागे क्वचिदपि घटते पूर्वपक्ष्युक्तक्लृप्तिः ॥

स्वाध्यायप्राप्तये ह्यध्ययनमभिहितं पावकाधानसाम्यात् व्रीह्यादिप्रोक्षणादिः स्वकृतिषु गदिता संस्कृतिर्वादिमुख्यैः ।
सिद्धस्संस्कार्यभावो निजनिगमगिरां भाविकार्योपयोगाद्दृष्टान्यार्थो विभक्तेर्विपरिणतिवशात्सक्तुहोमस्त्ववगत्या ॥]

दृष्टार्था संस्क्रियेयं न भवति घटते ह्यन्यथाऽप्यत्र दृष्टं नादृष्टार्थाऽपि वैधप्रकरणविरहे न ह्यसौ स्यात्तदर्था ।
तस्मात्स्वाध्यायसाध्याध्ययनविधिरसौ सक्तुहोमादिवत्स्यान्नस्यादुक्तोत्तरत्वान्न कथमितरथाऽऽधानमर्थ्यं न योज्यम् ॥ ६४ ॥

अध्येतुस्संस्क्रियैषाऽध्ययनमिति किल स्यान्नियोगार्थतायां तामेव प्रोक्षणादिष्वपि गतिमवदन् केचिदेतत्तुवार्तम् ।
भावार्थैर्द्रव्यनिष्ठैरतिशय उचितः कर्मभूतेष्वबाधे तस्मात्स्वाध्यायसंस्कृत्युपपदनगतिर्भाष्यकारैरभाषि ॥ ६५ ॥

स्वाध्यायं संस्क्रियार्हं कथमिव कथयेच्छब्दमद्रव्यमिच्छन्द्रव्यं संस्कारमर्हेदिति हि नयविदस्तत्र तात्पर्यभेदात् ।
आराध्यप्रीतिरेव ह्यतिशय उ [चि] दितो नैगमैश्चोदितेषु स्वाधीतस्स्यादसौ तद्विषय इति दशा तादृशी संस्क्रियाऽत्र ॥

नित्यं चेन्निष्फलं स्याद्भवति तु फलवत्काम्यभावादनित्यं मैवं त्यागेन तादृग्ग्रहणफलवतः प्रत्यवायानुशिष्टेः ।
नैष्फल्यं सर्वथाचेत्कथमिव मतिमांस्तत्र बुद्ध्या प्रयस्येत्तस्मान्नित्येऽप्यपूर्वं तदितरदपि वा स्यात्फलं तत्रतत्र ॥ ६७ ॥

दुःखाभावस्सुखं वा तदुभयकरणं तस्य चोपक्रियार्हं पुंसः प्रेप्सोः पदं स्यात्कथय तदितरत्कार्यमित्थं कथं ते ।
तत्सिद्ध्या कर्मयोग्यो यदि भवति तथा स्याद्गृहीत्याऽक्षराणां वेदानध्यायपूर्वं तदितरयतने शूद्रतादि स्मरन्ति ॥ ६८ ॥

सूत्रात्सम्माननादेरुपगत इह तः कर्त्रभिप्रायबाधी त्रेधाऽन्योक्तां गतिं तु क्षपयति वरणाधानसाध्यावमर्शः ।
स्पष्टं कर्तर्यकर्तर्यपि हि फलमिदं पूर्वसूत्रप्रसूतं संवेदित्रोर्द्वयोश्चाव्यवहितमपि तद्दृश्यतेऽकर्तृगामि ॥ ६९ ॥

निर्णीतं याजयेदित्यपि यजनविधौ तत्परं नीतिविद्भिस्तत्प्रायाध्यापनोक्तावुपनयनमपि ह्यन्तरङ्गावरुद्धम् ।
तस्मादध्येतृसंस्कृत्युपनयनफलं तत्फलार्थक्रियार्थं नो खल्वाचार्यकाख्यं किमपि फलमिहालौकिकं शक्यशङ्कम् ॥ ७० ॥

शिष्यः किञ्चोपनीतो वरमथ गुरवे किंनिमित्तं प्रयच्छेदाचार्यत्वं वरश्चेत्युभयमपि फलं कल्पयन् भ्रान्तकल्पः ।
वृत्त्यर्थाध्यापनं च स्मृतिभिरधिगतं क्वापि नाचार्यकार्थं नो चेन्नानाप्रकारा विधय इह तथा तत्रतत्राविलाः स्युः ॥ ७१ ॥

---

$ कुण्डलितं श्लोकत्रयं व्याख्यानोपात्तम् ।

तत्तत्कामोपनीतावुपनयनफलं कर्तृगामीत्ययुक्तं तत्सामान्यात्तदेकाश्रयफलजहनस्त्वष्टवर्षोपनीतौ ।
सिद्धेऽन्यत्र प्रधाने गुणफलमुचितं तस्य नाद्यापि सिद्धिः नित्यं काम्यप्रयोगे घटितमिति पृथक्कालिकत्वं तु सह्यम् ॥ ७२ ॥

यन्नित्यं ब्रह्मचारिण्यपरमपि कथं तस्य तस्मिन्प्रबोधः पित्राद्यैश्शिक्षितत्वादिति तु सममिदं सर्वहानं न चेत्स्यात् ।
संस्कर्तारं तमीप्सेत्तत उचितमधीयीत चेत्यादिदृष्ट्या नेत्थन्तायाः प्रबोधोऽस्त्यविदितनिगमेऽप्यष्टवर्षादिमात्रे ॥ ७३ ॥

शिष्यस्य ब्राह्मणत्वप्रभृति तव मते यद्वदाचार्यकार्थं शिष्योत्कर्षाय तद्वद्विधिरयमिह नस्तादृगाचार्यधर्मः ।
ऋत्विग्धर्मादयो वा कतिकति विहिता याजूकादिसिद्ध्यै तस्माद्योग्योपनीतः सनियमकमधीयीत चेत्येव योज्यम् ॥ ७४ ॥

यच्चात्राध्यापयेदित्यभिदधति पदे स्वेष्टसिद्ध्यानुगुण्यं तच्चोन्नीतं प्रमादाण्णिच इह न किलाकर्तृगामित्वमर्थ्यम् ।
विद्यादानाददृष्टं यदपि निजगदुस्तेन नाचार्यकं स्याच्चत्वारश्चाश्रमास्तद्विधिमनुसरतां संप्रदानीभवन्ति ॥ ७५ ॥

आचार्याख्यानिवेशो तदितरवदिह स्मृत्युपात्तं निमित्तं सिद्धिर्या चानुषङ्गान्न हि किमपि तदुद्देशतः स्याद्विधानम् ।
स्नानोत्कर्षस्मृतेश्चेत्यसदुपनिषदि स्मृत्युपात्तक्रमोक्तेः श्रौताधीत्योरसाम्यं स्मृतिगतमपि चापोह्य तौल्यार्थ्यमूह्यम् ॥ ७६ ॥

आचार्यायेत्यधीतिं वदसि परमते निर्निमित्तां परस्तादाचार्यस्येत्यधीतिस्तव किमु सनिमित्तत्वमभ्येति पूर्वम् ।
भाव्येऽर्थे लक्षणां चेत्कथयसि विहितेस्संभवात्सा जघन्या भूते तु ज्यायसीयं तदिह सनियमाध्यापने शब्द एषः ॥ ७७ ॥

धर्मश्चोद्दिश्यतेऽर्थास्त्वयमिह मुनिना तद्विचारार्थसूत्रे लक्ष्मादृष्टेरचिन्त्यभ्रममिह नुदता चोदनासूत्रमूचे ।
तत्र स्वार्थं प्रमाणं तत इह न भवेद्वाक्यभेदप्रवृत्तिर्मानप्राधान्यपक्षान्तरमपि कतिचिद्वैभवादाश्रयन्ति ॥ ७८ ॥

कश्चित्पित्रादिकल्पं प्रथयति पुरुषं चोदनाद्युक्तिरर्थाद्वाक्यादेश्चोदकत्वग्रहणमनुचितं शास्त्रसिद्धोज्झनं च ।
त्याज्योपादेयवर्गत्यजनभजनविध्युन्मुखाज्ञाभ्यनुज्ञाकिम्मीरो वेदराशिः किमिति न विदितश्शासनं विश्वगोप्तुः ॥ ७९ ॥

नित्यत्वादीश्वराज्ञा न भवति निगमः पौरुषेयोऽन्यथा स्यादित्येतत्क्षुद्रहृद्यं नियतनिजगिरा नित्यमाज्ञाप्रवृत्तेः ।
तन्त्वन्यायादमन्त्रेष्वपि [विविध] हि निजभिदां विश्वकर्ता विधित्सेदाचार्यत्वं च वेदेष्वगणि भगवतः कर्तृता चेतरेषु ॥

वेदार्थः कार्यरूपस्त्विति जगति मिथः कश्चिदाचष्ट धार्ष्ट्याद्विध्युद्देशांशमात्रे तदलमिह यतो वक्ष्यते सिद्धभागः ।
शक्तिं संरुद्ध्य शाब्दीं श्रुतिमुनिवचसोश्छन्दवृत्तिं निरुद्ध्य व्रीडानाघ्रातचित्तो वितथमिति वदन्वैदिकैरुज्झनीयः ॥ ८१ ॥

यत्कार्यं तद्धि सर्वं निगमविषय इत्येतदव्याप्तिदुःस्थं यो वेदार्थस्सकार्यात्मक इति च तथा तत्रतत्रातिचारात् ।
उद्देश्यादेर्विभागे बहुरिह विहतिर्दर्शिता वाक्यविद्भिः किंचास्मिन्नर्थशब्दत्यजनभजनयोः स्यादयुक्तिर्विचित्रा ॥ ८२ ॥

निष्कृष्टं चोदनार्थं यदि नियमयति स्पष्टमेतन्न पाठ्यं तस्माद्धर्मस्वरूपप्रभृतिकथनतस्सार्थकं सूत्रमेतत् ।
प्रामाण्यं कार्यशेषं प्रथयति यदि तत्प्रापितार्थं परस्तादप्रामाण्यं तु सिद्धे वदति यदि तदप्युत्तरत्रोपरोध्यम् ॥ ८३ ॥

व्याकुर्वन्ति क्रियाप्रेरकमिह वचनं चोदनाद्युक्तिवेद्यं तस्यानाम्नायसाम्यान्नियतमिदमतिव्यापि धर्मस्य लक्ष्म ।
मैवं वेदत्वयोगे सति खलु पुरुषप्रेरकं वाक्यमेतद्वेदोक्तार्थे तु धर्मे कथय कथमतिव्याप्तिरव्यापनं वा ॥ ८४ ॥

यश्चाहिंसादिधर्मश्श्रुतिभिरभिहितस्सोऽपि ताभिः प्रतीतस्स्याद्धर्मो बाह्यतन्त्रैस्तदवगतिरवस्थाप्यते निष्फलेति ।

स्वाध्यायाधीतिसिद्धग्रहणफलधिया धर्मसिद्धिर्नियाम्या तस्माद्बौद्धागमाद्यैरिह तदवगतिर्गोपनिर्मन्थ्यवत्स्यात् ॥ ८५ ॥

धर्मोऽधर्मश्च लक्ष्यौ समुपनिपततश्चोदनालक्षणोक्त्या तत्राधर्माद्विभागं प्रकटयितुमसावर्थशब्दः प्रयुक्तः ।
अर्थ्यत्वादार्यभावादभिमतफलनिष्पादकत्वाच्च तस्मिन्नर्थत्वं भाति केचिद्विदुरभिचरणाक्षेपकं त्वर्थशब्दम् ॥ ८६ ॥

न भ्रातृव्यस्य हिंसा मरणमभिमतं मारणं श्येनपूर्वं तच्चाभीष्टाभ्युपायश्श्रुतिविहित इति क्वार्थशब्दोऽत्र सार्थः ।
सत्यं हिंसा पशूनां सुहिततममतस्सा चिकित्सोपमा स्यान्नैवं शत्रोरतस्तद्धननिरसने सार्थको ह्यर्थशब्दः ॥ ८७ ॥

धर्मे वेदः प्रमाणं तदितरदपि वा नोभयं वोभयं वेत्येवं सन्देहडोलाविहरणविहितानेकदिक्क [सूत] प्रसक्तान् ।
जिज्ञासून्वेद एवेत्यवधृतिनियतावस्थितीन्कल्पयिष्यंश्चक्रे सूत्रं तृतीयं चटुलमतिदशावारणारम्भणार्थम् ॥ ८८ ॥

अत्रायोगान्ययोगौ प्रशमयितुमियं चोदनामानतोक्तिस्सत्सूत्रादौ स्फुटं तत्समसनविषयक्षेपणीयक्रमेण ।
अध्यायस्याप्यसिद्धयै प्रथममभिदधे तन्निमित्ते परीष्टिः कर्तव्या नेति वा स्यादिह विनिगमना सूत्रकृत्काकुभेदात् ॥८९॥

मानं धर्मे न चिन्त्यं दुरपलपतयेत्युत्थितस्यास्तिकस्य प्रज्ञाचोरप्रसूतभ्रमपरिहृतये चिन्त्यमित्युत्तरं स्यात् ।
चिन्त्ये याऽस्मिन्प्रयुक्ते प्रथनकथनतस्तत्परीष्टिर्निषेद्धया छेकोक्तिस्साऽपि यस्मादकरणमिषतस्तत्परीष्टिं करोति ॥ ९० ॥

सामान्यान्नप्रमाणं क्षममपलपितुं स्वोक्तिबाधादिदोषात्तत्सिद्धिश्च प्रमाणात्स्वपरघटनतो नानवस्थाद्यतः स्यात् ।
धर्मे मानं तु चिन्त्यं प्रथितमपि बहिर्वादसंक्षोभशान्त्यै नो चेन्नास्तिक्यनिष्ठैः प्रमितिपथजुषामत्र पार्ष्णिग्रहस्स्यात् ॥ ९१ ॥

वेदो धर्मे निमित्तं स्वयमपि भविता तद्विधानात्तथाऽपि प्रामाण्यं हि प्रसाध्यं प्रथमसमुदिते लक्षणे पादभेदैः ।
तस्माद्धर्मप्रमायां करणमिति धिया तन्निमित्तत्वमुक्तं भक्त्या चोक्तिः प्रशस्तिं प्रथयति महतीं मुख्यभाव्यानुरूपाम् ॥ ९२ ॥

धर्मस्तत्तत्क्रियादि श्रुतमिदमिह खल्वस्मदाद्यक्षवेद्यं तस्माच्छास्त्रैकमानस्सकथमिति यदि स्थूलमेतच्छलत्वात् ।
धर्माख्यानं क्रियादौ धृतिजनकतया सा च नाध्यक्षवेद्या दुर्दर्शार्थोपदेशान्निगमसफलता तेन सत्सूत्रसाध्या ॥ ९३ ॥

धर्मे प्रत्यक्षतोक्तिर्भवति च सुगमा सिद्धसाध्यानुवृत्ता सत्सूत्रे साध्यमात्रप्रवणमिति च ते कल्पना निष्प्रमाणा ।
ज्ञानं तस्योपदेशस्त्विति च सममिदं द्विप्रकारेऽपि धर्मे सर्वं तात्पर्यवृत्त्या सुघटितमिह नः पश्यतां वृत्तिकारम् ॥ ९४ ॥

धर्मं जिज्ञासमाने भवभृति करणायत्तबोधे प्रसिद्धे तस्याध्यक्षस्स नेति प्रथयितुमुदितं लौकिकाध्यक्षलक्ष्म ।
नो चेत्पश्यत्यचक्षुःप्रभृतिबहुविधश्रुत्यनीकावमर्दैर्लुण्टाकी हन्त लोकायतगतिरघृणा रुध्यतां चोदनाभ्यः ॥ ९५ ॥

आत्मा देहाक्षबुद्धिप्रभृतिसमधिको धर्मचिन्ताधिकृत्यै निर्द्धार्यस्त्वन्यथा चेत्सुरगुरुसमयस्वैरजल्पास्स्वदेरन् ।
इत्थं निश्चित्य सूत्रे व्यधिकरणविभक्त्यादिभिस्तत्तदर्थव्यावृत्तो धर्मकर्ता तदुचितफलभुक्सूचितस्सूत्रकारैः ॥ ९६ ॥

अन्यैरात्मावसाये भवति विफलता तत्र वेदान्तवाचां नोचेद्देहादितोऽन्यस्स कथमिह मतश्श्रूयतां सावधानम् ।
यद्यन्यैरस्य बोधो भवतु विशदतावाप्तिराम्नायवाक्यैस्तैरेवास्यावसाये परमिह कथितस्तर्कतोऽनुग्रहस्स्यात् ॥ ९७ ॥

पाठे चार्थे च भेदं विदधति कतिचिद्वृत्तिकारानुशिष्टास्स्यादत्रातिप्रसक्तिः क इह निपुण इत्येतदप्यत्र चिन्त्यम् ।
प्रख्यातो वृत्तिकारो मुनिरनृतमसौ व्याचकारेति मन्दं बाधे सत्यान्यपर्यं क्वचिदिति तु मतिर्मत्सरातङ्कमुक्ता ॥ ९८ ॥

पाठादत्रौपवर्षादनुपचितफला ह्यन्यथा पाठक्लृप्तिस्स्वच्छन्दस्त्वात्तसारो विषयविषयिवत्संप्रयोगोक्तिलभ्यः ।
यद्वृत्तं पूर्ववाक्ये न पठितमथ च न्यासि तद्वृत्तमन्यत्पाठश्चार्षो न भेत्तुं क्षम इति विदुषां वृत्तिकारोऽनुवर्त्यः ॥ ९९ ॥

वृत्तौ षट् चेत्प्रमाणान्यगणिषत न सा मानसंख्या ततस्स्यात्त्यक्तं षष्ठं च कैश्चिद्भवति च फलिनी गोबलीवर्दनीतिः ।
धर्मे मानान्तराणां गतिमिह नुदतो नात्र संख्याभिसन्धिर्मानानि त्रीणि शोध्यान्यमनुत च मनुः प्रेप्सतां धर्मसिद्धिम् ॥

प्रत्यक्षादिर्न हेतुर्जिनसुगतमुखैः कल्पितानां कथानामित्येतत्सिद्धमत्र श्रुतिरपि न हि तन्मूलमूह्यं विरोधात् ।
इत्यप्येतद्विरोधाधिकरणविदितं तेन मोहादिरन्यैरन्यैर्बाधोपरोधौ न तु निगमगिरामित्युपक्रान्तसिद्धिः ॥ १०१ ॥

नन्वेवं क्वापि रामायणपरिपठिता युक्तयष्षट् कथं स्युर्मन्वादेस्त्रित्ववादोऽप्यथ भवतु परं न्यूनसंख्यानिवृत्त्यै ।
मैवं तत्तद्विशेषैः पृथगनुपठितैरर्थवैशद्यसिद्ध्यै मानैस्तत्तद्विशेषास्सहपरिपठितास्सन्तु तत्रान्यथा वा ॥ १०२ ॥

प्रत्यक्षं सांख्यबौद्धप्रभृतिभिरुदितं भावनोत्थं न विभ्रस्संस्काराणां प्रकर्षस्स्मृतिमुपजनयेद्दृष्टमात्रे प्रकृष्टाम् ।
तस्माद्धर्मे निमित्तं भवति न सुगताद्यागमः क्षिप्तमूलः श्रद्धेया चोदनैवेत्यवधृतिरियमित्यत्र तात्पर्यसिद्धम् ॥ १०३ ॥

प्रत्यक्षादिप्रमाणं स्वविषयनियतं दर्शयन् सूत्रकारः प्रत्याचष्ट प्रवृद्धान् प्रमितिपरिभवे विश्वलुण्टाकवादान् ।
पश्यन्तो वृत्तिमार्षीं तत इह शबरस्वामिमुख्यास्समीचीं चिन्ताव्याघातभीताश्चिदचिदनुगतां सत्यतां साधयन्ति ॥ १०४ ॥

प्रत्यक्षप्रत्यपेक्षान्वयतदितरयोरत्र भङ्गात्तदुत्थं मानं नात्रानुमानं तदनुविहिततो वाक्यमत्राप्रमाणम् ।
इत्याशङ्कां निरोद्धुं परमिह विदधे सूत्रमौत्पत्तिकाद्यं कर्ता शारीरकस्य स्वगुरुरपि वदत्येतदित्याह भक्त्या ॥ १०५ ॥

निर्बाधास्सन्ति बोधाः कतिकति जगति त्यक्तदोषप्रसङ्गा दोषोपेतेऽपि धर्मिप्रभृतिषु नियतः स्थापितस्सत्यभावः ।
तस्मादौत्सर्गिकत्वं मुनिरमत धियां मानभावस्य युक्त्या वेदोत्पन्नेऽपि नित्येश्वरमतिनियतो दोषहान्येव तत्स्यात् ॥ १०६ ॥

पाणिन्यादिप्रवाहैरसदितरतया स्थापितश्शब्दराशिश्शब्दस्येत्युद्गृहीतो न खलु सहजसंबन्धशाली तदन्यः ।
गावीगोण्यादिशब्दास्त्वलसजडमुखैरर्भकालापनीत्या कीर्त्यन्ते तत्तदर्थेष्विति न खलु ततस्तत्र तच्छक्तिसिद्धिः ॥ १०७ ॥

बन्धश्चेद्बन्धशून्यः कथमिव घटयेद्बन्धवत्त्वेऽनवस्था मैवं संबन्धमात्रस्थितिमपलपतस्स्वोक्तिबाधादिदोषात् ।
इष्टश्चेद्दूषकत्वप्रभृतिरपि मृषा सिद्धमिष्टं परेषां दृष्टः कल्प्यश्श्रुतो वा न तदपलपितुं शक्यते संप्रयोगः ॥ १०८ ॥

वेदे तच्चोदिते च त्यजदुपधि महालोकसंगृह्यमाणे मानत्वं धर्मता च स्थितमपि कुरुतां नाम नित्यं तथाऽपि ।
एतस्येत्येतदित्थं हितमहितमिदं त्वेवमित्यादिबोधस्तत्तद्वेदोपदेशप्रभव इति वदत्यत्र तस्यादिशब्दः ॥ १०९ ॥

नित्यप्रत्यक्षसिद्धं निगममितरदप्याह चेद्विश्वकर्ता सर्तृत्वं तस्य न स्यात्क्वचिदितरसमं तद्गिरां च स्मृतीनाम् ।
माभूदेतत्तथाऽपि स्मरतिरिह भवेत्क्षेत्रसामादिनीत्या वेदार्थव्यञ्जकत्वात्स्मृतिरिति च वचस्तेन सञ्जाघटीति ॥ ११० ॥

किञ्चाम्नाया न भिन्नक्रमनियमतयाऽध्यापयेच्छात्रपूर्वान् गीतादिग्रन्थराशिं क्रमविघटनया तत्रतत्र प्रयुङ्क्ते ।
तस्माद्विष्णुस्मृतिर्या तदितरदपि यन्नित्यसर्वज्ञशास्त्रं प्रख्यातं भारतादौ भवति तदखिलं वेदराशेर्विभक्तम् ॥ १११ ॥

सन्दर्भो यस्त्वपूर्वस्मृतिरिव कविभिः कल्प्यते सावधानैर्नित्यं सर्वज्ञबुद्धौ निहितवपुरसौ नैगमात्को विशेषः ।

सत्यं पुंसां विशेषादुपनमति भिदा तत्र मानेतरात्मा निर्बाधत्वेतराभ्यां भवति कवयतां कर्तृभावोऽपि कश्चित् ॥ ११२ ॥

बुद्धार्हन्तौ कणादः कपिल इति यथाकाममुद्घुष्यमाणास्सर्वज्ञास्सन्त्यनेके कलितमपि च तैस्संगृहीतं ततः किम् ।
वेदादित्यप्रकाशप्रतिहतगतिभिर्दृष्टिभिस्तादृशानां धर्माधर्मव्यवस्था दुरधिगमतमा दोषमालाविलासैः ॥ ११३ ॥

प्रत्यक्षादन्यदेव स्मृतिजनकतया वर्णयन्तोऽनुमानं तस्माच्छास्त्रं विभक्तं न कथमकथयन् बाधनाक्षेपसाम्यात् ।
प्रत्यक्षेऽप्यप्रमाणं त्ववधृतिविरहान्निर्विकल्पं वदन्तश्शास्त्रेऽप्येवं जजल्पुस्स्वहृदयविहतं तत्स्वतोऽन्यैश्च वार्यम् ॥ ११४ ॥

वश्याकृष्ट्यादिषट्कप्रतिकृतिलपनप्रस्तरस्फोटनाद्यं दृष्टं जैनादिशास्त्रेष्विति कुहकपथः क्षुद्रविस्रम्भयोग्यः ।
बाधे दोषे च दृष्टे बलिशवदनवर्त्यामिषन्यायविद्भिर्मन्वाद्याप्तोपदेशप्रणिहितमतिभिस्तेषु वाचाऽपि नार्चा ॥ ११५ ॥

त्यक्तानां वेदनिष्ठैरगतिपरवतां त्यागडम्भास्थितानां मूढानां क्षुद्रतर्कैर्मुनिसमघटिकाभोजनौत्सुक्यभाजाम् ।
तत्तद्बाह्यागमेषु भ्रमदनुगधियां भण्डसम्मोहितानां स्वैराचारार्थिनां च स्वकहृदयविसंवादशारः प्रवेशः ॥ ११६ ॥

पाषण्डत्वप्रसिद्धिश्चतुरुदधिपरिष्कारवत्यां पृथिव्यां पापानां षण्डमन्यन्मतमखिलपरित्रष्टमाविष्करोति ।
प्रत्यन्तक्षुद्रभाषाविहितमनियताशेषवृत्त्यर्हमेतत्तत्प्रत्यर्थिस्वभावश्रुतिपरिषदवध्वस्तमस्तं प्रयाति ॥ ११७ ॥

साधूनां त्राणमिच्छुस्तदहितदमने दत्तदृष्टिर्मुकुन्दो मायानिष्पन्नदैत्यप्रमुखकुहनया मोहयामास पापान् ।
मिथ्यादृष्ट्यैव शास्त्राण्यपि कतिचिदसौ निर्ममे निर्ममेभ्यस्त्वाचष्टानन्यशेषश्रुतिनिकरशिरस्सारसंग्राहकाणि ॥ ११८ ॥

बाधे वेदोदितानां भवति विफलता सिद्धिरस्त्यन्यतश्चेन्नैष्फल्यं वेदवाचां दिनकरकिरणैर्दर्शिते किं प्रदीपैः ।
तस्माद्बाधोपलम्भव्यपनयनवचस्सार्थकं वेदवेद्ये द्वेधा बाह्यान्प्रवृत्तान्दमयितुमनसस्संग्रहो ह्येष सारः ॥ ११९ ॥

नित्ये वेदे न वक्तुर्गुण इति स कथं मानमित्यप्ययुक्तं वक्तुस्सत्त्वे हि वाचामपवदनभिया तद्गुणोऽन्वेषणीयः ।
नित्यज्ञानं च हेतोर्न भवति गुणतस्स्वीकृतं तच्च मानं तादृग्विज्ञानमात्मन्यवितथविषयं वर्णितं क्वापि बोधे ॥ १२० ॥

चित्रादीनां समाप्तौ न भवति पशुवृष्ट्याद्यभीष्टं नियत्या स्वर्गादेः का कथा स्यादिति किल कलयन्त्यत्र लोकायतस्थाः ।
दृष्टोपाये फलानामनियतिवदिहाप्यस्तु किं नस्ततस्याद्धर्माणां कर्मकर्तृप्रभृतिविगुणता तत्फलानाप्तिहेतुः ॥ १२१ ॥

यागस्वर्गादिमध्ये यदि भवति किमप्यास्तिकानामपूर्वं चित्रापश्वादिमध्ये न तदिह घटते तत्क्षणोत्पत्तियोगात् ।
नो खल्वन्यत्र देहे परमिह पशुवृष्ट्यादिलाभाय यत्नो बाधे चैवं समस्ता श्रुतिरनृतवचस्तन्न बाधव्यपोहात् ॥ ॥ १२२ ॥

सद्यस्सिद्धिर्यदा स्यादिह न खलु तदा बाधशङ्कावकाशो विघ्नैस्सिद्धौ विलम्बः कृषिवदिह भवेदन्यथाऽतिप्रसङ्गात् ।
तेनैवापूर्वमन्तर्भवति नरपतिप्रीणनन्यायदृष्ट्या वैगुण्योत्थे विलम्बे विहतिविहतता शेषमप्येवमूह्यम् ॥ १२३ ॥

नानाभूतैर्निजाङ्गैः क्रमसमुपनतैरङ्गिसिद्धावपूर्वं तत्तन्निष्पादनीयं करणसमुदयात्पूर्वमेवाभ्युपेत्यम् ।
भोगश्चित्रादिसाध्यो बहुदिवससमासादनीयश्च मध्ये त्यक्त्वाऽपूर्वं न सिध्येदपि च सुनियताऽदृष्टहेतूपनीतिः ॥ १२४ ॥

ग्राव्णां चैतन्यकॢप्त्यं श्रवणमभिदधे सत्रचर्या पशूनामन्येऽपि ह्यर्थवादप्रभृतिषु विहतास्तत्कथं मानतेत्थम् ।
व्याघातो यत्र दृष्टश्श्रुतिषु बहुविधस्तत्रचाप्तोक्तनीत्या मुख्यादन्यत्र वृत्तेः प्रमितिकरणता स्थापनीया यथार्हम् ॥ १२५ ॥

यस्मिन्मूलप्रमाणं न भवति न भवेत्तत्र शब्दः प्रमाणं धर्मे मानं च नान्यत्तत इह वचसो मानता मानशून्या ।
इत्युत्प्रेक्षाविलानां क्षम इह तु परं मूलदोषव्यपोहस्सोऽयं निर्धारणीयस्त्रिभिरधिकरणैर्दुस्तरैरुत्तरत्र ॥ १२६ ॥

एकस्सर्वेन्द्रियाणां विषयमनुभवन्बुद्धितश्चातिरिक्तस्सत्सूत्रे भाति हस्ताद्यपघनघनतोऽप्यर्थतस्तुल्यनीत्या ।
तस्मात्स्वर्गादिदृष्टेतरदपि हि फलं देहभेदात्स भोक्ता बाधे चैवं विधूते भवति फलवती चोदनाऽतीन्द्रियार्था ॥ १२७ ॥

स्वप्ने देहान्तरेणाप्यनुभवति सुखाद्येष पश्चात्तु जाग्रत्स्वाप्ने देहे व्यतीते स्मरति किमपि तच्छैशवादौ च तद्वत् ।
नानाभूतेषु पाणिप्रभृतिषु च परामृश्यतेऽसावभिन्नस्तद्वन्नानाशरीरो युगपदयुगपच्चैष भुङ्क्ते फलानि ॥ १२८ ॥

न ज्ञानं बाह्यशून्यं किमपि परमतिप्रत्ययात्स्वप्रवृत्तेर्न ज्ञेयं स्वप्रकाशं प्रकटतदितरावस्थयोस्तस्य तत्त्वात् ।
न ज्ञाता चेतरस्याद्बहुविषयिगणग्राह्यधीस्तोमवत्त्वात्त्रिभ्यस्सिद्धे त्रिकेऽस्मिन्नवहितमतिभिर्भाव्यमित्यत्र भावः ॥ १२९ ॥

न स्याद्धर्मः क्रियात्वाद्विहितमितरवन्नाप्यधर्मो निषिद्धं तस्मादेवेति यावज्जिगदिषति मुधा तन्त्रनासीरवीरः ।
तावद्दुष्कम्पकौतस्कुतमहितमहामोहमातङ्गयूथक्रीडासंहारसिंहारव इह निगमस्स्वार्थरोधं रुणद्धि ॥ १३० ॥

यस्यासिद्धं निषेध्यं कथमनुमिनुयात्ताद्दृशस्तन्निषेधं सिद्धं वा यस्य मानैस्स च निरुपधिकं न क्षमस्तन्निषेद्धुम् ।
साध्यं मानैरबाध्यं किमपि यदि तदा सिद्धसाध्यत्वदोषो यश्चाप्रत्यक्षमात्रं न सदिति कथयेत्स्वेष्टभङ्गात्स भग्नः ॥ १३१ ॥

नित्यं विज्ञानमेकं क्षणभिदुरमुतास्थाय शेषं विमृद्नन् स्वव्याघातादिदोषैरपहतविषयो दोषतैषां त्वखण्ड्या ।
मर्यादा स्वा परा वा न खलु नियमयेत्तादृशैरर्थसिद्धिं मूलच्छिद्वादक्लृप्तौ मुखरितपटहो मोहमूर्धाभिषिक्तः ॥ १३२ ॥

प्रत्यक्षश्शब्दराशिर्मितिरपि हि ततो दृश्यते नात्र बाधः क्लृप्तिश्चातिप्रसक्त्यै कथमिह विमुखी मानता जानतां वः ।
लिङ्गं व्याप्तिस्तदुत्थानुमितिरपि तथा तेन चेष्टास्तवेष्टास्तस्मादेकं प्रमाणं परिगणितवतोऽक्लृप्तपच्यं ततोऽन्यत् ॥ १३३ ॥

किंचित्सूत्रे प्रमाणं किल नियमयता किंचिदिष्टं ह्यमानं मानामानव्यवस्थात्यज इह विविधाः प्रापितास्तेन हानम् ।
निर्बाधैव प्रमेत्यप्यवगमितमिदं तेन तत्त्वानुभूतौ माने ग्राह्येऽनुभूतिः प्रमितिरिति वदन्त्यप्रमादूर [भू] भीताः ॥ १३४ ॥

वेदस्यार्थानुभूतिप्रजननशकनस्थापने किं फलं स्यात्किं वा बुद्धार्हदाद्यैः परुषमभिहितं प्रत्युतेष्टं हि शिष्टम् ।
मन्वानः पीतशङ्खभ्रममनुभवनं तद्व्यवच्छेदसिद्ध्यै विन्यस्यन्भेदकोक्तिं विहरतु विमतव्यूहभेदे वियातः ॥ १३५ ॥

आपातादन्यथाधीरखिलहृदयसंवादिनी येऽत्र रुष्टास्तेऽपि च्छायामिव स्वामतिपतितुमिमां कुत्रचिन्न क्षमन्ते ।
तत्सामग्र्यैव तत्तद्व्यवहरणमिति स्थापयन्तस्त्विहान्ये प्रध्यायन्तो लघुत्वं गुरुमतकथकाः प्राणिता देशिकैर्नः ॥ १३६ ॥

शब्दस्यार्थेन बन्धस्सहज इति वचोमात्रमत्र प्रसक्तं साकाङ्क्षे ह्यत्र शब्दाधिकरणमुदितं नित्यताप्त्यै पदानाम् ।
वर्णस्थैर्योक्तिपक्षे वितथविफलते स्तः पदस्थैर्यपक्षे सूत्राणां योजनं च स्वरसगति भवत्पक्षवन्नातिखेदः ॥ १३७ ॥

व्युत्पत्तिर्वाच्यवर्गे ह्यतिविषमतमा जातियोगान्निरूढा शिक्षेयं वाचकेऽपि प्रथयितुमुचिता शीलितन्यायवृत्तैः ।
किं चोदात्तादिभेदा अपि विलयभृतो वाचकेपूपयुक्तास्तादृक्त्वेनैव तेषां यदि नियमवचस्तद्वदत्रेति भाव्यम् ॥ १३८ ॥

वर्णा नित्या यदि स्युस्तदपि भवति किं मानताऽनाप्तवाक्ये ते चानित्या भवेयुः क्रमवदथ च सा किं न निर्दोषवाचि ।

वेदप्रामाण्यसिद्ध्यै तदिह बत मुधावर्णनित्यत्वक्लृप्तिर्वेदानित्यत्वशङ्कां प्रजनयति पदानित्यताऽतो निषेध्या ॥ १३९ ॥

शब्दस्पर्शादिहीनात्त्रिगुणजलनिधेरूर्मिजालैकदेशे श्रोत्रादिग्राह्यतत्तद्गुणगणघटितश्श्रावितो भूतवर्गः ।
शब्दस्याकाशनाशे लय इति कतिचित्प्रत्यभिज्ञानुरोधात्तैरप्यास्थायि नित्या पदनियतिरसौ वर्णसाजात्ययुक्ता ॥ १४० ॥

वर्णेभ्यः क्वापि वर्णान्तरजनिवचसामन्यथासिद्धिरस्तु प्रत्यक्षं त्वन्यतुल्यं प्रथयति जननं तच्च नात्रप्रमाणम् ।
सूक्ष्मा पश्यन्त्यसौ वाक्क्रमसमुदयनान्मध्यमा वैखरीति प्राप्तभेदं विचित्राकृतिरुदयति तत्सुस्थितं वर्णजन्म ॥ १४१ ॥

एकाक्षग्राह्यवर्गे सहकृतिनियमो भाति निम्बत्वगादौ तद्वद्वर्णप्रभेदप्रतिनियतमरुद्भेद इत्यप्यपास्तम् ।
व्यक्तिर्निम्बत्वगादेर्न भवति परमुद्भूतिमात्रोपयोगात्ताद्दक्चेद्व्यक्तिहेतुर्न कथमिह भवेदन्यथाऽतिप्रसङ्गः ॥ १४२ ॥

गन्धादौ प्रत्यभिज्ञा भवति न च तया तत्र नित्यत्वमिष्टं सादृश्यात्तत्प्रक्लृप्तिस्समगतिरुभयोराग्रहीतिर्न चेत्स्यात् ।
व्यक्त्यानन्त्यं च दृष्टं सममिदमुभयोर्लाघवोक्तिश्च लघ्वी तस्माद्वैयात्यमात्रादयमुपनिहितो वर्णनित्यत्ववादः ॥ १४३ ॥

नित्यश्शब्दो यदीष्टस्सकथमभिमतो दृश्यमानातिरिक्तः प्रत्यक्षे शब्दवर्गे ध्वनिभिरपि परं तादृशैर्व्यक्तिरस्तु ।
अश्रद्धेयाऽत्र वैयाकरणसरणिरित्यर्थमर्थापयद्भिर्नित्यत्वं वर्णनिष्ठं भवतु च कथितं लाघवं लक्षयद्भिः ॥ १४४ ॥

वायोरेके विकारं कतिचन जगदुस्स्पर्शभाजां चतुर्णां पञ्चानां केचिदूचुः कतिचिदभिदधुः पञ्चमस्यैव धर्मम् ।
नित्यं तत्रापि केचिज्जनिलयभिदुरं शब्दमन्ये परे तु द्रव्यं वर्णाख्यमेतद्गतफलमखिलं शब्दमानत्वसिद्धौ ॥ १४५ ॥

कृत्वा रूपाणि नामान्यपि च वितनुते नाथ इत्यागमोक्त्या नानित्यत्वं पदानां पुनरपि हि यथापूर्वमेव प्रयुङ्क्ते ।
बाह्यक्षेपाय सूत्रैरिह कथयतु वा वर्णनित्यत्वमाप्तः क्लृप्तं तद्वैभवात्स्यान्न कथमितरथा नैगमानां प्रकोपः ॥ १४६ ॥

उत्पत्त्यैव क्रमाप्तिं कतिचिदकथयन्बोधके वर्णवर्गे व्यक्त्यैकेऽन्ये तु तत्तद्व्यवहृतिकृदभिप्रायभेदाद्वदन्ति ।
युक्तं तद्यौगपद्यं न कथमपि ततस्संस्क्रियाजालजन्यस्मृत्यारूढेषु वर्णेष्ववगतिकरणं कल्प्यमेकं यथार्हम् ॥ १४७ ॥

वर्णान्यः कोऽपि वैयाकरणनिगदितस्स्फोटसंज्ञस्तु शब्दो न प्रत्यक्षो न कल्प्यो न च वचनमितो नान्यतोऽपि प्रसिद्धः ।
वर्णैपृक्तेषु बोधे भजति हि कलहः स्फोटबोधेऽपि साम्यं शब्दव्युत्पत्तिसिद्धौ न च भवति मुधा स्फोटसिद्ध्यैव योगः ॥

वाक्यस्फोटोऽवक्लृप्तः प्रतिफणिति पदस्फोटनीत्या निरस्तो वाक्ये तद्गोचरे वा कथमपि हि न निर्भागता जाघटीति ।
यद्वेदाङ्गप्रयुक्तिप्रभृति तदपि हि त्वन्मते दुर्घटं स्याच्छब्दादर्थो विभातीत्यपि समुदितधीमूल एकत्ववादः ॥ १४९ ॥

शुद्धे सिद्धान्तसूत्रे फलवति न तथा वर्णपक्षोक्तबाधौ पक्षाणां च त्रिकालप्रभवमतिभुवां का चिकित्सेति चेन्न ।
छद्मप्रक्षोभणीयच्छलगतिरसु[धु]ना शिक्षितश्चात्र गुप्त्यै दुष्टोपन्यासतन्निस्तरणकथनतस्तादृशान्योपरोधात् ॥ १५० ॥

दृष्टौ तद्वैक इत्याद्यकृतकफणितौ पूर्वपक्षोक्तिभङ्गौ तत्र स्वाध्यायपाठः फलमिति तु न सदृष्टहानादिदोषात् ।
सूत्रेऽप्येषैव रीतिर्भवति फलवती नान्यथाऽतिप्रसङ्गात् कः पूर्वः कश्च पक्षः पर इति नियमः स्वारसिक्या प्रवृत्त्या ॥ १५१ ॥

वाक्याद्वाक्यार्थबुद्धौ बहुविधकुहकक्षोभतो बाधितायां तत्प्रत्यापत्तिसिद्ध्यै परमिह मुनिना न्यासि वाक्याधिकारः ।
दृष्टापह्नुत्ययोगाद्दृढतरविदितात्कार्यतो हेतुसिद्धौ दन्तादन्तिप्रयासः पुनरिह विदुषां दर्पसङ्घर्षतन्त्रः ॥ १५२ ॥

वाक्यादज्ञातयोगादविदितकथनेऽतिप्रसङ्गप्रसङ्गो मैवं व्युत्पन्नशब्दस्तबकमहिमतस्तत्तदर्थोपलब्धेः ।
संबन्धस्स्याद्गृहीतः कथमपि न तु वा तत्तदर्थैः पदानां वाक्यं वाक्यार्थयुक्तं न तु विदितचरं काव्यक्लृप्त्यादिदृष्टेः ॥

यद्वाक्यं गोपदादिव्यतिकरितमिदं वक्ति गोत्वादिमद्भिर्युक्तान्वाक्यार्थभेदानिति सकृदखिलव्यापिसंबन्धबोधात् ।
वाक्यं वाक्यार्थबोधे प्रभवति तदिहातिप्रसङ्गो न शक्यः पुंवाक्येऽप्येवमेव स्थितिरिति न ततो वेदवाचां विशेषः ॥

वाक्यं नान्यत्प्रतीमः किमपि पदसमाहारतस्तान्यमानं वाक्यस्यार्थः पदार्थादनधिक इति नापूर्वरूपोपपत्तेः ।
अन्योन्योपक्रियादिप्रणिधिमति पदान्येव वाक्यं भवेयुर्वाक्यार्थत्वं पदार्थेष्वपि भवति मिथःश्लिष्टरूपातिरेकात् ॥ १५५ ॥

वाक्यं चेदप्रमाणं निखिलमभिलपेन्नास्य वादाधिकारः किंचिच्चेन्मानमिष्टं तदितरदपि ते तादृशं किं न मानम् ।
एतद्यो वा न मानं व्यपदिशति स चाबाधतो मानमिच्छेत्तस्मादाम्नायवाक्यैरकलुषधिषणोत्पत्तिरक्षोभणीया ॥ १५६ ॥

वाक्याद्वाक्यार्थबुद्धिर्न घटत इति यद्वाक्यमुक्तं भवद्भिस्तच्चेत्स्वार्थप्रतीतिं जनयति जनयेत्तद्वदन्यच्च वाक्यम् ।
नो चेद्भङ्गस्त्वदुक्त्या न कथमपि भवेदस्मदिष्टस्य तस्मादप्राप्ते वेदवाक्यान्यपि निजविषये मानतां न व्यतीयुः ॥ १५७ ॥

स्वव्याघातप्रसक्तौ स्वपरघटकवद्भावनं भ्रान्तकृत्यं मूर्खाणां पण्डितानामपि न हि विहतं वाक्यमिष्टं प्रतीत्यै ।
दृष्टं बोधं पदाद्यैरपलपितुमवश्यायकल्पान्विकल्पानल्पप्रज्ञाभिनन्द्यानभिदधतु ततस्स्वोक्तिरेवापकृत्ता ॥ १५८ ॥

कर्तृप्रत्यायकास्स्युश्श्रुतिषु सुविदिताः काठकाद्यास्समाख्यास्तेनेमाः पौरुषेय्यास्तदिह कुशलिनी विप्रलिप्सादिशङ्का ।
मैवं शारीरकोक्तां सरणिमवयतां नित्यसिद्धेषु वेदेष्वाविष्कारेऽधिकारात् कतिचन पुरुषाः कर्तृनिर्देशमापुः ॥ १५९ ॥

कल्पेकल्पे दयालुः स्थिरचरकृदधिष्ठाय रूपं कठाद्यं शाखाभेदान्विचित्रान् समतनुत ततोऽध्यापयामास चर्षीन् ।
इत्युक्तं न्यायभक्तैरिदमपि च परं भक्तिमात्रप्रसूतं निर्माणाध्यापने द्वे किमिति निगदिते पश्चिमेनैव लभ्ये ॥ १६० ॥

वाक्यत्वात्कर्तृमत्त्वे सति निगमगिरां कर्तृभेदे तु चिन्त्ये वृद्धव्याहारसिद्धास्तदवधृतिकृतः काठकाद्यास्समाख्याः ।
इत्येषा मुग्धभाषा बहुनिगमहता बाधशून्या विपक्षे नासौ वाक्यत्वहेतुर्निगमकृतकतां संप्रयोक्तुं क्षमेत ॥ १६१ ॥

वेदानां यच्च शाखाविभजनमुदितं द्वापरान्ते चतुर्णां नानित्यत्वं ततः स्यात्समुदितपृथगाम्नानमात्रप्रवृत्तेः ।
कृत्स्नाम्नानक्षमाणामुपचिततपसां गोचरः कृत्स्नमादौ पश्चात्तु ज्ञानशक्त्योरपचयनियमाद्व्यासक्लृप्तिस्समीची ॥ १६२ ॥

वेदाद्वैधाऽप्रधृष्यात् भवति विमृशतां वेदनित्यत्वसिद्धिर्मन्वादीनां च वाक्यैरवितथवचसां बाधदोषातिवृत्तैः ।
अङ्गोपाङ्गैरशेषैरपि कथितमिदं सद्गृहीतैस्तदस्मिन्प्रादुर्भावादिमात्रं प्रजनयति विभुस्सोऽपि पारम्पर्यरम्यः ॥ १६३ ॥

कर्ता दृष्टः श्रुतौ वा न हि परकथितस्तापसादि श्रुतीनां प्रद्विष्टोक्तिर्न तत्त्वस्थितिमवगमयेन्नातिशक्ता नियोक्तुम् ।
श्रद्धेयैरन्यथोक्त्या भजति च विहतिं शङ्कनेऽतिप्रसक्तिश्शङ्का सार्वत्रिकी च स्वजनिविहतिकृत्सर्वचेतःप्रतीपा ॥ १६४ ॥

अन्या मन्वन्तरेषु श्रुतिरिति च वचः काल्योगप्रवाहाज्जप्यश्रुत्यादिनीत्या न कथमितरथा द्रव्यपूर्वेण भेदः ।
दिष्ट्या यत्रानधीते मुनिभिरनघता तत्र तत्कर्तृतोक्ता प्रोक्तं ब्रह्म स्वयंभ्वित्यपि जनिविलयाभावमत्र स्मरन्ति ॥ १६५ ॥

कल्पादावेवमीशः कथयति निगमान्पूर्वयैवाऽऽनुपूर्व्या तद्वन्मन्वन्तरादिष्वपि शिथिलसमाधानमात्रं क्रमैः स्यात् ।
नित्यश्रुत्यैव बाधादुपजनिविलयौ नानुमानैः प्रसाध्यौ मीमांसाप्राच्यपादप्रस्तुतिरविहता देशिकैर्दर्शितेयम् ॥ १६६ ॥

अन्यैरप्यर्थवादप्रभृतिषु निहितैरादिमाध्यायभेदैर्मानं तत्तत्प्रवृत्त्या निगममिह मुनिस्सूत्रयामास साध्व्या ।
इत्थं प्रामाण्यसिद्धिं व्यवहरणदशाभाविनीं भावयन्तस्स्वाभीष्टस्थापकानामपि खलु वचसां मूलघातं सृजन्ति ॥ १६७ ॥

ग्राह्यं सर्वत्र मानं परभजनविधौ भेदतादात्म्यचर्चा तत्रैवाङ्गप्रयुक्ती परिकरघटने मार्गभेदक्रमाप्तिः ।
कर्ता वैराग्यपादप्रभृतिषु विविधावस्थितिस्स्थापनीयश्शेषं चाशेषमीदृग्विलगति बहुषु ब्रह्मकाण्डस्थलेषु ॥ १६८ ॥

श्रीमद्रामानुजोक्तां स्मृतिमनुसरतामैकशास्त्र्यादिसिद्धेरव्याजोपायविद्यापथिकगतिविधौ न्यासि दिङ्मात्रमेतत् ।
शेषं चाशेषमित्थं शितमतिभिरनुप्रेक्ष्य संरक्षितव्यं क्षुद्रक्षोभार्हतर्कोदितकुहककथावर्णिदुर्नाटकेभ्यः ॥ १६९ ॥

संक्षिप्तं विस्तृतं वा सरसबहुमतं सावधानप्रियं वा प्राधान्येन प्रणीतं परफणितिपरिष्कारवृत्त्या स्थितं वा ।
शिक्षासौकर्यतुष्टिप्रचितगुरुजनानुग्रहेद्धं सुधीभिश्श्रद्धेयं नाथजुष्टश्रुतियुवतिशिरोभूषणं भाषणं नः ॥ १७० ॥

तत्तत्प्रत्यर्थिवर्गप्रचकितनिगमस्तोमतत्त्वार्थचिन्ता विष्वग्वैघट्यघट्टोन्मथनपटुधिया वेङ्कटेशेन क्लृप्ता ।
अक्षोद्या तर्कलोष्टैरतिमहति पदेऽप्यत्यजन्ती स्वसीमां मीमांसापादुकेयं मितिपथगतिक्न्मृद्नती कण्टकौघम् ॥ १७१ ॥

विख्यातो वेदघण्टापथ इति विततिं प्रस्तुतां प्रस्तुतार्थामुत्पद्यन्तां पृथिव्यामुपनिषदगदङ्कारवाचः प्रवाचः ।
मिथ्यादृष्टिप्रवाहोदितकुमतिकथाकन्दलीकन्दलीनां दृष्ट्यैवालोकलिप्सादृढनिहितमतिं दैत्यरोधी रुण[द्धु] द्धि ॥ १७२ ॥

शाक्योलूक्याक्षपादक्षपणककपिलामर्त्यवन्द्यप्रधानैरन्यैराम्नायचर्चाकवचधृतिकनद्दोमुखद्वीपिभिश्च ।
बंहीयः क्षोभिताऽपि श्रुतिरिह बहुधा जायमानेन गोप्त्रा कालेकालेऽभिगुप्ता कलहमतितरन्त्यक्षता रक्षतान्नः ॥ १७३ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

**॥ मीमांसापादुका समाप्ता ॥**

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः।

श्रीमते हयग्रीवाय नमः। श्रीमते रामानुजाय नमः।

श्रीमते निगमान्तमहादेशिकाय नमः।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्ताचार्यविरचिता

# ॥ सेश्वरमीमांसा ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी। वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

विहितमनवमर्थं यः पुमर्थैश्चतुर्भिस्सफलयति वदान्यस्स्वप्रसादेन देवः।
निखिलनिगमवेद्ये सिध्यतु श्रीसखेऽस्मिन् भगवति निरवद्ये भक्तिरात्यन्तिकी नः ॥

स जयति जैमिनिरादौ जयति पुनः काशकृत्स्नोऽपि। नारायणावतारो जयति परं बादरायणः श्रीमान् ॥

निर्मत्सरा निशमयन्त्विदमादरेण कर्माधिकारनयसूत्रगतिं समीचीम्।
शारीरकेण घटयत्ययमस्मदुक्त्या देवस्तुरङ्गवदनो जगदन्तरात्मा ॥

## ॥ अथ धर्मजिज्ञासाधिकरणम् ॥ १ ॥

* अथातो धर्मजिज्ञासा—इत्यारभ्य *अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्—इत्येवमन्तं विंशतिलक्षणं मीमांसाख्यमेकं शास्त्रम्। सा हि मीमांसा वेदवाक्यार्थविचारात्मिका तद्विशेषनिर्णयार्था साङ्गाध्ययनसंगृहीतस्वाध्यायशब्दवाच्यवेदाख्याक्षरराश्यापातप्रतीतिविषयसप्रयोजनार्थविशेषविविदिषाप्रेरितपुरुषाधिकर्तव्या च। एवमेकरूपप्रयोजनविशेषोद्देशप्रवृत्तपुरुषव्यापारगोचरन्यायसंघातनिबन्धनात्मिकायाः त्रिकाण्ड्याः सामान्यतो विषयप्रयोजनप्रवृत्तिप्रकारविशेषविशेषिताधिकार्यैक्यादेकविद्यास्थानत्वमिति नातिप्रसङ्गः; प्रतिविद्यास्थानमवान्तरोपकारादिभेदस्य व्यवस्थितत्वात्। न तथाऽपि भेदो दरीदृश्यते। काण्डभेदस्तु स्यात्, षट्कादिभेदन्यायात्। स्मृतिपुराणवन्महर्षिभिः पृथगपरिसंख्यानाच्च। ऐकप्रबन्ध्यं तु संगतिविशेषैर्विशिष्टक्रमत्वादिति भगवता **भाष्यकारे**णैवाभाषि। नच निरूप्यविशेषसद्भावं समीक्ष्य सङ्कर्षारम्भः, वैयासिको वा शारीरकप्रणयनप्रयासः। * संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति वृत्तिग्रन्थश्च प्रतिबन्द्यादियुक्तिगर्भः। अर्थविरोधस्तु न सौत्रः, आन्यपर्यात्सूत्राणाम्। उक्तं ह्यागमप्रामाण्ये—* भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासंवर्धनाय इति। वेदार्थसंग्रहेऽपि—* अश्रुतवेदान्तानां कर्मण्यश्रद्धा माभूदिति

देवताधिकरणेऽतिवादाः कृताः कर्ममात्रे यथा [श्रद्धा स्यात्] श्रद्धां कुर्यादिति सर्वमेकं शास्त्रमिति वेदवित्सिद्धान्तः इति। द्रव्यदेवतासामान्ये द्रव्यबलीयस्त्वं च प्रमाणमुखेन, न पुनर्वस्तुसदसत्त्वाभ्याम्। तच्च स्वावसरे निर्वक्ष्यामः। अन्यदपि सर्वमविरुद्धत्वेन निर्णेतव्यम्।

अध्य[स्य]स्त व्याक्रियादो[षान्]षं ये सूत्रमपि तत्यजुः। प्रायः स्फटिकमध्येते जह्युरेव जपाभ्रमात्॥

तेन **नारायणार्यैः**सूत्राणामन्यथाकरणं प्रौढिप्रकाशनमात्रमेव। वयं तु सामगाचार्यसूत्राणां व्याख्यादोषं प्रतिक्षिप्य सम्यञ्चमेवार्थं प्रतिपादयिष्यामः।

दर्शयति च भगवान् बादरायणो जैमिनेरपि ब्रह्मतद्गुणाभ्युपगमम् *साक्षादप्यविरोधं जैमिनिः, *सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति, *मध्वादिष्वसंभवादनधिकारं जैमिनिः, *अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके, *परं जैमिनिर्मुख्यत्वात्, *ब्राह्मेण जैमिनिरुपन्यासादिभ्यः इत्यादिषु। *धर्मं जैमिनिरत एव, *शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः इत्यादिषु क्वाचित्कविसंवादानुवादस्त्वन्यपरोक्तिमूलकमन्दमतिमोहशान्त्यर्थः। अथवा परकल्तिसौधादिशेषपूरणवत् विरुद्धैकदेशोद्धारेण संहितत्वपक्षेऽपि नार्थैक्यविरोधः। कर्तृभेदस्तु न शास्त्रं भिन्द्यात्, तदभेदश्च न तदेकीकुर्यात्; एककर्तृकानेकवदनेककर्तृकैकदृष्टेः लोकसिद्धत्वात्। परस्परसम्मत्या कृतशेषपूरणेन वा तात्पर्यपरिशोधनपूर्वकतदेकदेशप्रवृत्त्युपपत्तेश्च। अतो विद्यास्थानान्तरानन्तुवृत्ताव्यवहिताविरुद्धपरस्परसापेक्षांशवद्विषयाद्यैक्यात् प्रबन्धैक्यं च सिद्धम्। कर्मादिकाण्डभेदव्यपदेशश्च तदैक्यं व्यनक्ति। एतौ राहुकबन्धमीमांसकपक्षौ प्रतिचिक्षिपाते। काण्डक्रमोऽप्यध्यायादिक्रमवदर्थप्राप्तः। वेदप्रामाण्यमन्तरेण हि विचारस्सर्वोऽपि न सेत्स्यतीति प्रमाणलक्षणेन प्रागेव भाव्यम्। अथ च कर्मोपक्रमतया प्रायो वेदानां तदितिकर्तव्यताभागयोरपि सारस्वताङ्गन्यायेन मुख्यक्रमानुसारात्, अनाद्यभ्यस्तत्रिवर्गप्रथमप्रावण्यरूपार्थक्रमात्, अनन्तस्थिरफलापातप्रतीत्यादेश्चोभयत्राविशेषात्, कर्ममात्रेण चामृतत्वसंभावनायाम् *अत्के चेन्मधु विन्देतेति न्यायात्, पदार्थवाक्यार्थभावदृष्टान्तदार्ष्टान्तिकभावादेश्च, पौर्वापर्यनियामकप्रमाणविशेषात्, कर्मविचारः पूर्वभावी। तत्र भेदाङ्गप्रयुक्तिक्रमकर्तृभिः सामान्यातिदेशविशेषातिदेशतदनुबन्ध्यूहबाधतन्त्रप्रसक्तिभिश्च प्रकृतिविकृतिरूपकर्मचिन्तानुक्रमे नान्यावकाशः। तदुद्देश्यदेवताविषयतया तु संकर्षानन्तर्यं समुचितमेव। अथ तु सर्वकर्मसमाराध्यं सर्वदेवतान्तर्यामि परदैवतं चिन्तयिष्यते।

विभूतिशक्तिमन्त्राख्यागुणाकारादिचित्रितैः। देवताकञ्चुकैर्भिन्नं यदेकं ब्रह्म चक्षते॥

किंच यदि कर्मत एवामृतत्वं स्यात् किं तदङ्गकेनोपासनेन? अथ न, तदा तादर्थ्येनापि स्वरूपतः कर्मोपयुज्येतेत्यापातधीमतस्संदिहानस्यापि कर्मणि विचिचारयिषा दुर्वारा। तावन्मात्रात्तदसिद्धिनिश्चये तु निष्प्रत्यूहश्शारीरकारम्भ इति॥

विंशतिलक्षण्यां वक्ष्यमाणं कृत्स्नवेदार्थविचारं सहेतुकं प्रतिजानाति—

## 1 सू०—अथातो धर्मजिज्ञासा॥ १. १. १.॥

अथशब्दोऽत्रायमानन्तर्यार्थ एव, प्रसिद्धिप्रकर्षस्यानपवादत्वात्। मङ्गलार्थत्वं त्वथधर्मशब्दयोरन्यार्थत्वेऽपि प्रदीपादिवत्स्यात्। यद्यप्यत्र पूर्वं न किंचिदपि निर्दिष्टम्, तथाऽप्यतःपदोपादानेन स्वरसतस्सामान्येन कस्यचिद्वृत्तस्य

हेतुतोक्तेस्तस्य धर्मजिज्ञासापदसमभिव्याहारसामार्थ्यात्तदपेक्षिततया विशेष्यमाणत्वाच्च साङ्गवेदाध्ययनरूपवृत्तविशेषसिद्धिः। नहि वेदाध्ययनात्पूर्वमन्यस्माद्वा नियतपूर्ववृत्तादनन्तरं वेदार्थविचारस्तदुक्तिर्वाऽवकल्पते। अत एवात्रातश्शब्दोऽपि वृत्तस्य हेतुभावार्थ एव। धर्मस्य जिज्ञासा धर्मजिज्ञासा। कर्मण्यत्र षष्ठी, संबन्धसामान्यषष्ठीमङ्गीकृत्य तेन तत्र कर्मसापेक्ष-जिज्ञासासामर्थ्यतः कर्मार्थत्वक्लृप्तेर्विलम्बितत्वात्, *कर्तृकर्मणोः कृतीति विशेषविधानात्, कर्त्रर्थताया इहानन्वयात्, कर्मणश्चेप्सिततयाऽभ्यर्हितत्वात्, अन्यपरेऽपि सूत्रे विषयप्रयोजनसूचनोपयोगात्, आनुषङ्गिकविवक्षान्तरस्यात्रादोषत्वात्, प्रतिपदविधानषष्ठीसमासनिषेधस्य कृद्योगषष्ठ्यां प्रतिप्रसवेन, *ज्ञोऽविदर्थस्य करणे इत्यादिसूत्रविषयत्वस्थापनाच्च। यद्यपि सर्पिषो ज्ञानमित्यत्र कृद्योगोऽप्यस्ति, तथाऽपि न कृद्योगजेयं षष्ठी, अपि तु *ज्ञोऽविदर्थस्य करणे इति जानातेर्धातोर-विदर्थस्य प्रवृत्त्यर्थत्वे सर्पिरादेष्षष्ठ्यन्तस्य करणार्थत्वे च विधीयते, सर्पिषो जानीते, मधुनो जानीत इत्यादिषु कृद्योग-मन्तरेणापि षष्ठीप्रयोगदर्शनात्। तेन तत्र न समासः।

धर्मशब्दोऽत्र चोदनालक्षणश्रेयस्करवाची, तेनाजहदभीप्सितस्वार्थेनाधर्मादिरपि कृत्स्नो वेदार्थो लक्ष्यते। अत एव च सिद्धपरभागार्थस्यापि संग्रहः। कर्मोपासनात्मकस्य धर्मस्य स्वरूपसाधनाधिकाराराध्यसाध्यादिकं तथा। तद्गो-चरजिज्ञासासामर्थ्याद्वा कृत्स्नसिद्धिः। उक्तं च शारीरकाद्ये वेदस्य कार्यार्थत्वमन्वारुह्य भाष्यकारैः—*उपासनविषय-कार्याधिकृतफलत्वेन *ब्रह्मविदाप्नोति परमित्यादिभिर्ब्रह्मप्राप्तिश्श्रूयत इति ब्रह्मस्वरूपतद्विशेषणानां दुःखासंभिन्नदेशविशेष-स्वर्गादिवद्रात्रिसत्रप्रतिष्ठादिवदपगोरणशतयातनासाध्यसाधनभाववच्च कार्योपयोगितयैव सिद्धेः, इति। तथा तत्रैव *धात्व-र्थस्य च यागादेरग्न्यादिदेवतान्तर्यामिपरमपुरुषसमाराधनरूपता, समाराधितात्परमपुरुषात्फलसिद्धिश्चेति *फलमत उप-पत्तेरित्यत्र प्रतिपादयिष्यते इति।

ननु *फलमत उपपत्तेः, *श्रुतत्वाच्च, इति सूत्राभ्यां परमपुरुषस्यैव त्रिवर्गापवर्गरूपफलप्रदत्वमुपक्षिप्य, *धर्मं जैमिनिरत एवेति तद्विरुद्धतया जैमिनिमतमनूद्य *पूर्वं तु बादरायणो हेतुव्यपदेशादिति पुनः परमपुरुषस्यैव फलप्रदत्वं स्वमततया सूत्रितम्। एवमर्थमेव च तत्र भाष्यम्। अतः कथमिह *धर्मजिज्ञासेति जैमिनिवाक्ये जिज्ञासासामर्थ्यादिना धर्माराध्यत्वाद्याकारेण ब्रह्मादिसिद्धिर्विवक्षितेत्युन्नीयते? मैवम्। तत्र तावज्जैमिनेर्ब्रह्मतद्गुणाद्यभ्युपगमस्सौत्रो दर्शितः। इयं च कृत्स्नवेदार्थविचारप्रतिज्ञा, अन्यथा अत इति हेत्वनन्वयात्। नहि वेदैकदेशार्थजिज्ञासायां कृत्स्नवेदाध्ययनं हेतु-तयोपादीयते। न चैकदेशाध्ययनं वृत्तम्, साङ्गसशिरस्कस्वाध्यायाध्ययनस्य विहितत्वात्। अत एव शास्त्रान्तरात् ब्रह्म-भागविचार इति पक्षोऽपि निरस्तः। एवं च सति, *धर्मं जैमिनिरत एवेत्यस्यायमभिप्रायः—क्षणिकक्रियायाः कालान्तर-भाविस्वर्गसाधनत्वमनुपपन्नमिति वदतो नास्तिकस्य गूढाभिप्रायेण जैमिनिना मुखमपिहितम्। न तावत् कर्मणामव्यव-धानेन फलप्रदत्वनियमः, लोके मर्दनादिषु कृष्यादिषु च साक्षाद्वा परम्परया वा स्वयमेव फलप्रदत्वदर्शनात्। एवं च वेदेऽपि यागादीनां साक्षात्फलसाधनत्वाभावेऽपि यत्किंचिदपूर्वं द्वारीकृत्य परम्परया फलसाधनत्वमुपपद्यते। तथा सति *यजेत स्वर्गकाम इत्यादिशास्त्रं स्वर्गकामस्य कर्तव्यतया यागाद्यभिदधत्तदन्यथानुपपत्त्या अपूर्वद्वारेणैव फलसाधनत्वमव-गमयति। तच्चापूर्वमतीन्द्रियत्वान्नाध्यक्षबोध्यम्। अतो न शास्त्रप्रामाण्यविरोध इति। तदेतदनूद्य तस्यापि हृद्गतं स्वमत-मवसरे दर्शयन् भगवान् बादरायणस्तदुक्तमपूर्वं देवतानुग्रहरूपं प्राचीकशत्। अतो न विरोध इति। अत्र धर्ममुखेन समारम्भो विधिवाक्यानां क्रियाप्रधानत्वात्। यष्टव्यानां तु देवतानां राज्ञ इव सेवाविधिवाक्ये प्राधान्यमार्थम्, तत्पूजात्मक-

त्यागादेः । ततश्च शब्दतो यत्प्रधानं शास्त्रं प्रतीमः, तत्र प्रथमं विचारोऽवतरति, पश्चात्तत्तदाराध्ये, ततः परं तत्पर्यवसानभूमाविति प्रातीतिकोऽयं पर्वक्रमावतारः ।

यद्यपि ब्रह्मस्वरूपपरवाक्यानि सिद्धप्रधानानि समन्वयसूत्रे समर्थयिष्यन्ते, तथाऽप्यन्ततो निधिसत्तादिवाक्येष्विव पुरुषस्य बुभुत्साक्रमेणोपायविधायिवाक्यावधिर्विश्रमो भाष्योक्तः—* एवंभूतं ब्रह्म कथं प्राप्यत इत्यपेक्षायां * ब्रह्मविदाप्नोति परम्, * आत्मानमेव लोकमुपासीत, इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते । यथा स्ववेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तस्सन् पश्चात्तदुपादाने प्रयतते, इति । अतः पूर्वोत्तरभागयोरनुवृत्तं कर्तव्यस्य शाब्दं प्राधान्यम्, सिद्धस्य तु पूर्वत्रार्थसिद्धमिति सर्वभागानुवृत्तशाब्दप्राधान्यशालिकर्तव्यमुखेनोपलक्षणमाक्षेपो वा युक्तः । देवतानां च फलप्रदत्वे सिद्धे तासां द्रव्यक्रियागुणादिवद्धर्मतयैव संग्रहः, चोदितरूपेण श्रेयस्साधनत्वाविशेषात् । **भगवद्गुणदर्पणे** हि फलोपायं प्रस्तुत्योक्तम् * स च सिद्धस्साध्यालम्बनरूपश्च । सिद्धस्त्वाराध्यमानतया फलप्रदा देवता इत्यादि । एवमपि विंशतिलक्षण्यर्थसंग्रहः ॥

यद्वा, सङ्गतिविशेषवशात्प्रथमप्राप्तविशेषप्रतिज्ञायामेव सामान्यप्रतिज्ञानमर्थसिद्धम् । तदनुगुणश्च सारग्रन्थः—* अधीतवेदस्य हि पुरुषस्य कर्मप्रतिपादनोपक्रमाद्वेदानां कर्मविचारः प्रथमं कर्तव्य इति * अथातो धर्मजिज्ञासेत्युक्तम् । कर्मणां च प्रकृतिविकृतिरूपाणां धर्मार्थकामरूपपुरुषार्थसाधनतानिश्चयः * प्रभुत्वादार्त्विज्यमित्यन्तेन सूत्रकलापेन सङ्क्षेपेण कृतः इति । तत्पूर्वग्रन्थे तु कृत्स्नवेदार्थविषयो विचारप्रारम्भस्सूचितः—* आरिप्सितस्य ब्रह्मज्ञानस्य वेदार्थविचारैकदेशत्वादिति । तथा भाष्येऽपि * अध्ययनगृहीतस्येत्यारभ्य * वेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदः पुरुषस्स्वयमेव प्रवर्तते इति । यद्यपि ज्ञातुमिच्छा जिज्ञासा, तथाऽपि च पुरुषतन्त्रत्वान्न स्वयं विधेया, ततश्चेष्यमाणं ज्ञानमर्थतः प्रधानमिति विचारारम्भसूत्रे तदेव विधेयम् । तस्य विचाररूपस्य रागप्राप्तत्वज्ञापनाय सन्प्रयोगः । साङ्गाध्ययनादापातधीस्थस्वोपयुक्तवेदार्थस्याध्येतुस्तन्निर्णिनीषया स्वत एव जातस्य मीमांसौन्मुख्यस्य पूर्वपक्षनयेन जातां प्रतिहतिमपाकुर्वताऽध्ययनानन्तरं तत एव हेतोर्वेदार्थविचारः कर्तव्यतया सूत्रितः । अत्र मीमांसाशास्त्रमेव विषयः । तत्किमारम्भणीयमुतानारम्भणीयमिति संशयः, तदर्थं विचार्यते, मीमांसावसरोऽस्ति न वेति । यदा नास्ति तदा नारम्भणीयम् । यदाऽऽस्ति तदा आरम्भणीयमिति ।

अत्रैवं पूर्वपक्षः—अधीतसाङ्गवेदस्यैव मीमांसाधिकार इति न ततः पूर्वं तदवसरः । अत एव न सह । पश्चात्तु * अधीत्य स्नायादिति स्नानविध्यवरोधान्नावसरः । न च * समानकर्तृकयोः पूर्वकाले इत्यनुशासनात् पूर्वतामात्रोक्तिरिति वाच्यम्, व्यवधायकादर्शने स्वारसिकनैरन्तर्यस्यानपवादात् । प्राणिधर्मैर्व्यवधानं तु न सर्वव्यवधानमनुजानाति । न चार्थज्ञानार्थाध्ययनविध्याक्षिप्ते मीमांसाशास्त्रे श्रुतिबलादेव स्मृतिबाध इति युक्तम्; प्रत्यक्षश्रुतिविरुद्धाया अपि स्मृतेर्मूलान्तरमिच्छतां तदयोगात् । अनिच्छतामपि प्रत्यक्षश्रुत्यैव मूलवत्त्वे का तस्याः क्षतिः ? तथा चामनन्ति छन्दोगाः—* आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेण अभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत् इत्यादि । न चायमनुवादः, अप्राप्तेः । प्राप्तावपि प्रापकेन मूलवत्त्वसिद्धेः । न च श्रुत्या स्मृत्यर्थानुवादः, वैपरीत्यापातात् । तदनुमतेरेव च स्मृतिबाधायोगात् । न च न्यायस्समावृत्तिश्रुतिस्मृतिभ्यामनू-

द्यते, वचनविरोधे न्यायश्च न प्रभवतीति वाच्यम्; तद्विरोधिनो वचनस्यैवात्रासिद्धेः। यदि ह्यसौ विधिरर्थज्ञानपर्यन्तस्स्यात्, तदा तद्वैशद्याय स्यादेव मीमांसापेक्षा; न चैतदस्ति। स ह्यक्षरग्रहणपर्यन्तः, तावताऽपि जपाद्युपयोगात् तस्यैव होमाद्यभिव्याप्तेः। प्रथमभावितया शीघ्रबुद्धिस्थत्वाच्च। न चास्यापुरुषार्थत्वादफलतेति वाच्यम्, अर्थज्ञानेऽपि तुल्यत्वात्। तन्मूलानुष्ठानतस्स्वर्गादिसिद्ध्या परम्परया तस्य प्रयोजनवत्त्वमिति चेत्तुल्यम्। तथाऽप्यर्थज्ञानमन्तर्भावनीयमापन्नमिति चेन्न; जपाध्यापनस्वरूपधारणादिनाऽपि पुरुषार्थपर्यवसानात्। तदन्तर्भावेऽपि तस्यैव कुतः प्रयोजनता, यावता स्वर्गादेरिति तस्यैव कल्प्यताम्, तस्यैव साक्षात्प्रयोजनत्वात्। व्यवधानान्नैवमिति चेत्; आगतोऽसि पन्थानम्। एवं चाव्यवहितमक्षरग्रहणमेव प्रयोजनमनुमन्यस्व। न चाक्षरग्रहणस्य लौकिकेऽध्यापनादौ अलौकिके जपादौ च साधारण्यान्नाध्ययनरूपसंस्कारफलतेति वाच्यम्। अर्थज्ञानस्यापि लौकिके प्रवचनादावलौकिके यागाद्यनुष्ठाने च साधारण्याविशेषात्। अनध्ययनसिद्धेनापि ज्ञानेनार्थप्रवचनं शक्यमिति चेत्; अध्यापनमपि तथैव। तत्तथा निषिद्धमिति चेत्; अन्यदपि तथैव। अतोऽध्ययनविधेरक्षरग्रहणपर्यन्तत्वान्न ततोऽर्थज्ञानाय मीमांसाक्षेपः। न चाध्ययनशब्देन तव्यप्रत्ययेन स्वाध्यायशब्देन च मीमांसाऽपि गृह्यते, येन विधिस्पर्शसंभवः।

न च * अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेदिति तदपेक्षितविधायिन्यां श्रुतौ,

* श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि। युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्॥

अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेत्॥

इत्यादिस्मृतौ वा व्याकरणादिवत् मीमांसायाः प्रसङ्गः। अतस्सपरिकराध्ययनविधिनिरूपणे सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्याचार्योच्चारणानूच्चारणरूपाध्ययनविधिर्मन्त्रवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यतीति यथाभाष्यं न वैधी मीमांसा। ननु रागादेव भवतु मीमांसारम्भः, तथा च **भवनाथेन** पराभिमतसूत्रार्थं प्रतिक्षिपतोक्तम्—*साङ्गवेदाध्येतुस्स्वोपयुक्तमात्रार्थधीर्मनागिति तत्सम्यक्त्वेच्छोस्तदुपायोन्मुखस्यानर्थपरत्वधिया विमुखतापत्तावर्थपरत्वोक्त्या तन्निवृत्त्यर्थं विषयप्रयोजनज्ञानं प्रत्येव सूत्रम्, न त्वाद्यप्रवृत्त्यर्थमिति। तन्न, रागो हि तत्र प्रतिघातान्न प्रवर्तयितुं क्षमः, स्नानात्पश्चात्तु रागोऽनुवृत्तोऽपि निरन्तरविहितनित्यादिकर्मनिरूढावसरतया पूर्ववदेव। अतोऽध्ययनाङ्गसमस्तब्रह्मचारिधर्मनिवृत्तावपि गुरूपसदनादिमात्रात् पूर्ववन्मीमांसतामित्यपि दत्तोत्तरम्। न च—

* यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्। तावुभौ पुरुषौ लोके पङ्क्तिपावनपावनौ॥

इति पावनार्थमीमांसाविधानात् कदाचिन्मीमांसाया भवितव्यत्वे कश्चिदवश्यं विधिर्निरुध्यत इति प्रथमातिक्रमे कारणाभावात् स्नानविधिरेव निरोद्धुमुचित इति वाच्यम्; तत्र विधेरश्रवणात्, स्मृतिमात्रतयाऽपि साधनतोक्तिसंभवात्। काम्यस्य चानुष्ठेयत्वनियमासिद्धेः। न चाकामोपनिबन्धविधिप्रत्ययवती काचित् स्मृतिर्मीमांसां विधत्ते, अदर्शनात्। दर्शनेऽपि तस्याः स्मृतेर्न्यायमूलत्वश्रुतिमूलत्वसन्देहे तन्निबन्धनावसरक्लृप्त्ययोगात्।

* अधीत्य वेदान् साङ्गांस्तु यो विचारमुपेक्षते। स्वप्रयासञ्च विस्मृत्य प्रभ्रष्टस्स्यात्प्रयोजनात्॥

इति ह्यत्र न्यायो मूलं भवति। न चानेनैव न्यायेनावसरक्लृप्तिश्शक्या, वचनविरोधे न्यायस्यानवतारात्। अतो वेदा-

ध्ययनात्पूर्वमनधिकारात्, पश्चाद्गुरुकुलवासादिनिवर्तकस्नानविध्यवरोधात्, ततः परमपि तत्तद्धर्मनैरन्तर्यात्, सर्वदाऽनवसरतया, साङ्गाध्ययनादेवापेक्षितज्ञानाच्च, मीमांसाशास्त्रमनारम्भणीयमिति ॥

सिद्धान्तस्तु—अमीमांसितेऽर्थे तावत् संशयादिसंभवान्न यथावदर्थनिश्चयसिद्धिः। ततश्च यद्यपि रागप्राप्ता मीमांसा, तथाऽपि न स्नानविधिना तदवसरोपरोधः, क्त्वाश्रुतावव्यवहितनैरन्तर्यस्याशाब्दत्वात्, स्वारस्यमात्रस्य मीमांसाश्रवणजन्यज्ञानसापेक्षोत्तरकालभावितत्तद्विध्यनुज्ञातरागादेव निरासात्। विधिर्हि स्वोपयोगिद्रव्यार्जनादेरिव मीमांसाश्रवणस्याप्यवसरं दातुमर्हति; तदभावेऽर्थज्ञानासिद्धेस्तेन विना चानुष्ठानासंभवात्।

वैधेऽप्यधीतवेदस्य गुरुगेहान्निवर्तने। इत्थं विधिरसौ प्रोक्तो मीमांसावसरप्रदः ॥

यदा तु न्यायतः प्राप्ता समावृत्तिस्तदा तु नः। न्यायेन प्रबलेनायं समुत्कृष्येत दुर्बलः ॥

अतो राग एवाध्ययनविधिनाऽप्यनुज्ञातस्सन् पूर्वसिद्धां गुरुकुलस्थितिं धारयति। तत एव न स्थित्यन्तरप्रयुक्तिप्रसङ्गः। यद्यपि पूर्वैव स्थितिरनुवर्तते, तथाऽपि तदनुवृत्तेरध्ययनप्रयुक्तत्वाकारापगमेनार्थप्राप्तस्थित्याद्यतिरिक्तधर्मान्तरनिवृत्तिः। अध्ययनविधेरक्षरग्रहणोपायनियमार्थत्वात्तदनुबन्धिधर्मनियमानां च तद्गुणावधिकत्वात्। अधीताद्वेदात्स्वयमेव जायमानस्यार्थज्ञानस्याध्ययनानन्तर्भाविनस्तद्धर्मप्रयोजकत्वे प्रमाणाभावात्। उदकाहरणादिनिवृत्तावपि ख्यातिलाभार्थं गुरोः प्रवृत्त्युपपत्तेश्च; एवं च स्नातस्यापि स्थितिस्संभवत्येव। न च स्नातस्यानन्तरमेव दारक्रियाविधानादनवसर इति वाच्यम्, अलब्धदाराणां केषांचित्केवलस्थितिसंभवात्। कृतदारमप्यविचारितकर्माणमविद्वत्त्वेनानधिकारिणमग्निहोत्रादिविधयो न सहसाऽधिकुर्वन्ति, अपि तु स्वसिद्ध्यर्थं द्रव्यार्जनादिकमिव कर्मविचारमप्यनुमन्यन्ते। यस्तु दारक्रियातः पूर्वमेव विचारितकर्मा पुरुषस्तमधिकृत्यैव *दशमेऽहन्यादधीत इत्यादिनियमः। यथा दृष्टसामग्र्यन्तररहिते नायं नियमः, तद्वदत्रापि। यद्वा ब्रह्मचारिधर्मवद्धितैषिवाक्यानुसारेण भवत्वविचारितकर्मणोऽपि प्रथममग्निहोत्रादिप्रवृत्तिः। हितैषिवाक्यादनुष्ठानेऽपशूद्रनयविरोध इति चेन्न; अगृहीतमन्त्रादेरनधिकारात्; तत्परिग्रहस्य च त्रैवर्णिकविषयोपनयनाङ्गकाध्ययनसाध्यत्वात्। *न शूद्राय मतिं दद्यादित्यादिनिषेधाच्च। सूत्रितं च शारीरके—*श्रवणाध्ययनार्थप्रतिषेधात् इत्यादि। अन्योक्त्याऽनुष्ठानेऽपि न मीमांसानारम्भः; उत्तरोत्तरानुष्ठानेषु परनैरपेक्ष्यश्रद्धया ख्यात्याद्यर्थप्रवचनादिरागेण च पश्चादपि विचारोपपत्तेः, श्रावयितृवच्च तस्याप्यवसरसंभवात्। न हि ब्रह्मचारिणश्श्रावकत्वम्, तस्य श्रोतृदशापन्नत्वात्, अन्यस्य तु यदि श्रवणावसरः, कस्तस्य श्रवणे विरोधः? वृत्त्यर्थं तस्याध्यापनादिकं विहितमिति चेत्; तर्हि श्रोतुरपि यदृच्छालब्धैः कुलक्रमागतैर्वा धनादिभिर्लब्धवृत्तेस्स एवावसर इति न कश्चिद्विरोधः। अतस्साङ्गवेदाध्येतुः स्नानात्पूर्वम्, स्नातमात्रस्य, कृतदारस्य, आहिताग्नेश्च यथायोगमवसरसंभवादारम्भणीया मीमांसेति ॥

चतुर्वर्गफलोपायविचारोऽध्ययनादनु। तत एव बुभुत्सातः प्राप्तोऽवसरलाभतः ॥

विचारात्पूर्वमेवात्र प्राप्तमध्ययनं विधेः। अतोऽनधीतवेदस्य विचारश्शास्त्रबाधितः ॥

क्रमो विंशतिलक्षण्यां न वैधः किंतु लौकिकः। अतो व्युत्क्रमचिन्तायामनौचित्यं प्रशिष्यते ॥

ये पुनराहुः—*स्वाध्यायोऽध्येतव्य इति विधेस्स्ववाक्ये फलादर्शनात्, कामाधिकारत्वे च प्रवृत्तिशैघ्र्येण कस्यचित्फलस्यावश्यंभावादपुरुषार्थस्याध्ययनस्य विध्यवरुद्धया भावनया भाव्यत्वेनान्वयानुपपत्तेस्स्वाध्यायार्थबोधयोस्तु

भाव्यत्वे विध्यानर्थक्यप्रसङ्गाद्विश्वजिन्न्यायेन स्वर्गं वा भाव्यं परिकल्प्य शब्दभावनायाः स्तुतिरूपोपकारजनकतयाऽध्ययनचोदनालिङ्गकातिदेशागतजपाध्ययनार्थवादोक्तपितृदेवतृप्तिद्वारकं सार्वकाम्यं फलमुपादाय फलभावनाकरणाध्ययनार्थस्य स्वाध्यायस्यार्थपरत्वासंभवेन विषयप्रयोजनाभावादनारभ्यं शास्त्रमिति पूर्वपक्षं कृत्वा, व्युत्पन्नार्थाविरोधेन तव्यप्रत्ययावगतकर्मभावस्य स्वाध्यायस्यैव भाव्यताप्रतीतेरर्थज्ञाने दृष्टे संभवत्यदृष्टकल्पनायोगात्तस्य क्रत्वनुप्रवेशकल्पनया विधिवैयर्थ्याभावाच्च स्वाध्यायस्यार्थपरत्वे निश्चिते सति विषयप्रयोजनसद्भावादारम्भणीयं शास्त्रमिति ।

तान् प्रति ब्रूमः—यदि फलभावनाकरणाध्ययनार्थस्स्वाध्यायः, कथं तावन्मात्रेणाविवक्षितार्थता स्यात्? न ह्यन्यत्र विनियोगेन स्वशक्तिरपैति, अन्यथा कृत्स्नस्यापि वेदस्यार्थज्ञानव्यतिरिक्तफलान्तरार्थे जपादौ विनियुक्तस्य कथमर्थपरतां सिद्धान्तयिष्यसि? किंच, अयं पूर्वपक्षी किमध्ययनविधिं विवक्षितार्थं मन्यतेऽविवक्षितार्थं वा? न प्रथमः, स्ववचनविरोधात्, तदविशेषेण कृत्स्नस्यापि विवक्षितार्थत्वप्रसङ्गाच्च । नापि द्वितीयः, फलभावनाकरणाध्ययनविध्यसिद्धेरेव मूलाभावेन पूर्वपक्षानुत्थानात् । ननु पूर्वपक्षिण एवायमाशयः—अध्ययनविधेर्विवक्षितार्थत्वे कृत्स्नस्यापि विवक्षितार्थत्वप्रसङ्गः, अविवक्षितार्थत्वे त्वध्ययनाभावादेव तन्मूलसमस्तासिद्धिरिति; तन्न, दत्तोत्तरत्वात् । नहि फलार्थमप्यध्ययनं वस्तुशक्तिं प्रतिरुणद्धि । मङ्गलार्थमारोपितस्यापि हि दीपस्य न प्रकाशकत्वमपैति । तथा च भाष्यम्—* अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् इति । अन्यथा प्रसञ्जकप्रसञ्जनीययोर्व्याघातस्तद्विपर्ययश्च । नन्वयमनुयोगस्तवापि समानः, अमीमांसितस्यानुष्ठानस्यासंभवात्, तदर्थं मीमांसापेक्षायां च तदनारम्भपक्षानुत्थानादिति । मैवम्, आपातप्रतीत्यैवावसरोपेतस्य स्फुटतरप्रतीतेस्तत्र मीमांसानपेक्षणादिति । यच्च सिद्धान्तेऽर्थज्ञानमध्ययनफलत्वेनोपादाय विवक्षितार्थत्वं साधितम्, तदप्यध्ययनविधेरक्षरग्रहणपर्यवसायित्वस्थापनेन निरस्तम् ।

यत्तु, * स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात्—इति भाष्यम्, तदपि नानर्थपरत्वपूर्वपक्षाभिप्रायम्, अपि त्वर्थपरत्वं सिद्धं कृत्वा श्रवणस्य पूर्वपक्षसिद्धान्तसाधारणविधिनिरपेक्षत्वज्ञापनपरम् । यदि च व्याघातमवधीर्यार्थविवक्षायां विवादस्ते रोचते, तदाऽपि विधेरक्षरग्रहणपर्यवसायितयाऽर्थविवक्षां पूर्वपक्षे प्रक्षिप्य विधिनिरपेक्षया स्वशक्त्यैवार्थपरत्वं सिद्धान्तयितव्यम् । एतेन गुरुमतमपि लघूकृतम् । अपि चाचार्यकरणार्थाध्यापनविधिप्रयुक्तिमुपजीव्य हि तदर्थतया स्वाध्यायस्यार्थपरत्वाभावः पूर्वपक्षितः, तत्राध्यापनविध्यसंभवादेव तदनुत्थानम् । तथाहि—*अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेदित्यत्र, *द्वादशाहेन प्रजाकामं याजयेदिति यजनविधिवद्वृत्त्याद्यर्थप्राप्ताध्यापनानुवादेनाध्ययनविधावेव तात्पर्यात् । नच कामपदश्रुत्यभावाद्विशेषः, * निषादस्थपतिं याजयेदित्यत्र तदभावेऽपि यजनपरतयैव योजनात् । तेनाष्टवर्षो ब्राह्मण उपनीतोऽधीयीतेति विधीयते । उपनयनं च * ब्राह्मणमिति द्वितीयाश्रुत्या माणवकसंस्कार इत्युभयसम्मतम् । अतस्तच्छेषभूतमुपनयनमन्त्ररङ्गलिङ्गात्तद्गताध्ययनाङ्गमिति युक्तम् ।

*उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥

इति क्त्वाश्रुत्या लिङ्गबाध इति चेन्न । अनुवादसरूपतया स्मृतिगततया च विलम्बद्वयसहितया क्त्वाश्रुत्या श्रुतिगतलिङ्गबाधायोगात् ।

किंच—

क्त्वाश्रुत्या तुल्यकर्तृत्वं तेन चैकप्रयोगता। तया त्वङ्गाङ्गिभावस्स्यादित्यपि स्याद्विलम्बनम् ॥

न हि क्त्वाश्रुतिरङ्गाङ्गिभावं साक्षादाचष्टे, द्वितीयाश्रुतिस्तु माणवकस्योपनयनं प्रति प्राधान्यं साक्षादेवाभिदधाति। सा च द्वितीयाश्रुतिर्न केवलं श्रुतिगता, *उपनीय तु यश्शिष्यमिति स्मृतावपि दृष्टत्वात्। तेन भवदुक्ता स्मृतिरप्यस्माकं पक्षमुत्तम्भयति, द्रव्यनिष्ठस्य भावार्थस्य द्रव्यशेषत्वस्यैव न्याय्यत्वात्। न चोपनयीतेत्यात्मनेपदं कर्त्रभिप्रायार्थम्, येनोपनयनमुपनेतृगताध्यापनाङ्गं स्यात्। अकर्त्रभिप्रायार्थेन *संमानन इत्यादिसूत्रेण ह्येतदात्मनेपदम्। न च वाच्यं कर्त्रभिप्रायत्वं कर्तर्येव फलान्वयः; नियमनिवृत्त्यर्थं तु संमाननादिसूत्रम्; अतः कर्तर्यकर्तरि च फलान्वयसंभवेनोपनयनस्योपनेतृगतत्वसंभवादुपनयनमुपनेतृगताध्यापनाङ्गमिति। *अग्नीनादधीतेत्यादौ *स्वरितेत्यादिसूत्रविहितेऽप्यात्मनेपदे फलस्य कर्तर्यकर्तरि चान्वयदर्शनेन तस्य नियमार्थत्वायोगात्। चेतनान्तरे फलान्वयनिवृत्त्यर्थो नियम इति चेत्तन्न; *ऋत्विजो वृणीत इत्यादौ कर्तर्यकर्तरि च चेतने फलान्वयदर्शनात्।

यत्तु **भवनाथे**नोक्तं—*क्रियाफलं तदुच्यते यत्कारकावस्थायां जातमीप्सितं च, न चोपनयनात्कारकावस्थायामाचार्यकरूपफलोत्पत्तिः, उपनेये तु कारकावस्थायामेव संस्कारः, ईप्सितश्चासाविति कर्मगतमेवात्र फलमित्यकर्त्रभिप्रायतैवेति; तदप्यसत्; *अग्नीनादधीतेत्यत्र कारकावस्थायां जातस्येप्सितस्य च संस्कारस्याग्निगतत्वेन *स्वरितेत्यादिनैवात्मनेपददर्शनात्। अतो व्यवहितमव्यवहितं वा फलं यत्र कर्त्रभिप्रायं तत्र *स्वरितेत्यात्मनेपदं, तदुभयनिवृत्तावेव *सम्माननेत्यादिना। उद्देश्यस्य प्रधानफलस्य कर्तृगामित्वे कर्त्रभिप्रायत्वम्, तस्याकर्तृगामित्वे पुनरकर्त्रभिप्रायत्वमिति वचनं परेषामेव विपरीतफलम्, *सम्माननादिसूत्रविहितात्मनेपदविषयोपनयनफलस्य कर्तृनिष्ठस्य स्वयमेव साधनात्—इत्येषा दिक्। भवतु वाऽध्यापनविधिसंभवः, तथाऽप्याचार्यकार्थत्वेऽप्यध्ययनस्य नार्थपरता स्वाध्यायस्य भज्यते, प्रागुक्तन्यायेन स्वशक्तेरनपायात्। अबाधितप्रत्ययोत्पत्तावनपेक्षत्वलक्षणप्रामाण्यस्य वक्ष्यमाणत्वाच्च। यच्च सिद्धान्तेऽध्यापनविधिप्रयुक्तावप्यध्ययनस्य तदङ्गत्वं प्रतिक्षिप्यापूर्वार्थत्वोपपादनेनार्थज्ञानमपि विधिनाऽनुज्ञाप्य विवक्षितार्थत्वमुक्तम्, तदप्यपूर्ववादस्य निराकरिष्यमाणत्वादपास्तम्। किंच, अध्ययनसाध्यमपूर्वं किं स्वतः पुरुषार्थभूतम्? उतान्यसाधनम्? नाद्यः, अर्थज्ञानकटाक्षणासंभवात्। अथ स्वसिद्ध्यर्थमेवार्थज्ञानमनुजानीयात्; तन्न, स्वाध्यायस्यार्थज्ञापनशक्त्यभावे तदनुज्ञाया एवासंभवात्। स्वतश्शक्तौ सत्यां किमन्यानुज्ञया? न हि विधिमन्तरेणादित्यो विश्वं न प्रकाशयति। नचान्यार्थविनियोगोऽन्यविषयां वस्तुशक्तिं प्रतिरुणद्धीत्युक्तम्। नापि द्वितीयः, अध्ययनसाध्यापूर्वस्य स्वर्गादिफलान्तरसाधनत्वेन त्वदनभ्युपगमात्। अर्थज्ञानादेस्तु दृष्टफलस्यापूर्वमन्तरेण स्वसामग्र्यैवोत्पत्तेः, विषयफलत्वेन भवद्भिरपि स्वीकारादिति।

विवक्षितार्थदा युक्तिः परेषां कल्पिता परम्। अथेत्यवसरोद्देशात् सौत्रमस्मदभीप्सितम् ॥
विधिसामर्थ्यमाश्रित्य हेतुताध्ययनस्य वः। स्वसामर्थ्येक्षयाऽस्माकमिति शैघ्र्यमतःपदे ॥
योग्यावसरसम्पत्तेर्विशेषे च बुभुत्सनात्। नाकार्या धर्मचिन्तेति शुद्धा नस्सूत्रयोजना ॥
सन्प्रयोगश्च भवतां विफलोऽसन्मते पुनः। सोपयोगो विचारस्य रागप्राप्तत्वसूचनात् ॥

॥ इति धर्मजिज्ञासाधिकरणम् ॥ १ ॥

---

## ॥ अथ धर्मलक्षणाधिकरणम् ॥ २ ॥

## 2. सू०—चोदनालक्षणोऽर्थो धर्मः ॥ १. १. २. ॥

मीमांसाशास्त्रमारम्भणीयमित्युक्तम् । तदिदानीमारभ्यते, कर्मोपासनात्मककर्तव्यरूपकृत्स्नशास्त्रप्रधानार्थस्वरूपप्रतिज्ञा हीयम् । कोऽसौ जिज्ञास्यतया प्रतिज्ञातो धर्मः ? किंच तत्र प्रमाणमिति तत्स्वरूपप्रमाणयोर्बुभुत्सायां स्वरूपप्रश्नोत्तरमेव प्रमाणकोडीकारेण प्रवृत्तमिति श्रुत्यर्थाभ्यामुभयमिह सूत्रितम् । अन्तरङ्गत्वात् स्वरूपप्रश्नोत्तरमेव श्रौतम्, इतरत्त्वार्थमिति विवेकः । तदभिप्रायेण चोक्तं शाबरे—* को धर्मः कथंलक्षण इत्येकेनैव सूत्रेण व्याख्यातम्—इति । प्रमाणप्रश्नोत्तरत्वे तु, चोदनालक्षणो धर्मो नेन्द्रियलक्षणः, अर्थश्च धर्मो नानर्थ इति वाक्यभेदमाशङ्क्य, पौरुषेयतया अन्यतोऽवगतार्थविषयस्य सूत्रस्य भिन्नयोरेव वाक्ययोरिमावेकदेशावेकदेशान्तरसूचकाविति क्लिष्टनिर्वाहानाश्वासादाह—* अथवाऽर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमित्येकार्थत्वमेवेति—इति । चोदनेति विधिनिषेधात्मकश्श्रौतो विध्युद्देशस्संगृह्यते । स हीश्वराज्ञारूपतया प्रवृत्तिनिवृत्तिरूपपुरुषव्यापारप्रयोजकत्वात्तदाकारविवक्षया चोदनेत्युच्यते । तथाच शाबरमुत्स्वप्नायितम्—* आचार्यचोदितः करोमीति हि दृश्यते इति । आह च भगवांश्चोदकस्स्वयमेव—* श्रुतिस्मृतिर्ममैवाज्ञेति । तथाच भाष्यम्—* स्वशासनाववोधि शास्त्रं च प्रदिश्येति । उक्तं चानेकाभिप्रायं शासनमभियुक्तैः—

* आज्ञा ते सनिमित्तनित्यविधयस्स्वर्गादिकाम्यद्विधिस्सोऽनुज्ञा शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः ।
सर्वीयस्य समस्तशासितुरहो श्रीरङ्गसर्वस्व ! ते रक्षाकूतनिवेदिनी श्रुतिरसौ त्वन्नित्यशास्तिस्ततः ॥

इति । अत्र साक्षाच्छास्ति श्रुतिः, तदनुविधानात्तु स्मृतिरपि तदन्तर्गतैव । नित्यं श्रुतिमुखेनैवेश्वरो नियुङ्क्त इति नित्याऽपि श्रुतिस्तदाज्ञा । श्रुत्यर्थोपदेशरूपतया गीतादेरपि प्रवृत्तिः । लक्ष्यते प्रमीयते येन तल्लक्षणम्, प्रमाणमित्यर्थः । चोदना लक्षणं यस्य सः—चोदनालक्षणः प्रवृत्तिनिवृत्त्यात्मकः; उभयमपि चोदनयैव कर्तव्यतया बोध्यते । अर्थग्रहणमनर्थानुबन्धव्यवच्छेदार्थम् । ततश्च प्रभूतानर्थानुबन्धिश्येनादिव्यवच्छेदः ।

यद्यपि श्येनादयोऽपि चोदिता एव, तत एवार्थसाधकाश्च, तथाऽपि क्वचिद्विषये प्रयुज्यमानानां तेषां प्रभूतानर्थहेतुतयाऽनर्थत्वमित्येके । अन्ये त्वाहुः—कथं विहितस्यानर्थत्वमिति ? निषिद्धसंस्पर्शादिति चेन्न, तदसिद्धेः; न तावत्तदङ्गपशुहिंसानिषेधः, अग्निषोमीयतुल्यत्वात् । अग्नीषोमीयादेश्च सांख्यापादिताशुद्धियोगः * अशुद्धमिति चेन्न शब्दात् इति शारीरके परिहरिष्यते । न च श्येनादिस्वरूपनिषेधः, श्येनादि न कुर्यादित्यश्रवणात् । न चाभिचारनिषेधात्सामान्यतस्तन्निषेधः, अभिचारमात्रस्य निषिद्धत्वाभावात्, * षट्स्वनभिचरन्पतेत् इति हि तदकरणे पतनं स्मरन्ति; नहि तत्करणे तदकरणे च पतनमिति शास्त्रार्थस्संपद्यते । नच श्येनादिरभिचारशब्दार्थः, * श्येनेनाभिचरन्यजेतेति तत्फलत्वेन तन्निर्देशात् । नच फलद्वारा निषेधः, फलस्य निषेधादधर्मत्वेऽपि स्वरूपस्य विहिततया धर्मत्वात् । अतोऽर्थशब्दो न श्येनादिव्यवच्छेदार्थः; अपि तु निषिद्धहिंसादिव्यवच्छेदार्थः । निषिद्धानां चोदनालक्षणत्वमस्त्येव, निषेधचोदनयाऽनर्थसाधनत्वेन लक्षितत्वात् । न हि निषिध्यमानस्यानर्थसाधनत्वमन्तरेण निषेधचोदना प्रवर्तेत; तेन श्येनादिष्वपि फलमात्रं व्यवच्छिद्यते । नच प्रभूतानर्थसाधनभूतस्य फलस्योपायोपदेशो रक्षाकूतविरोधीति वाच्यम्; अन्यथा तदर्थिनस्तदुपायेषु दृष्टेषु स्वतः प्रवृत्तेस्तेषां चातिशयितानर्थपर्यवसानात् । श्येनादिना तु परहिंसायां प्रत्यवायलाघवात्;

लघुप्रायश्चित्तोपदेशात् । अभिचारानुव्यवहारावपतनीयावित्यपि हि केषांचिन्मतं महर्षयः पूर्वपक्षयन्ति । अतश्श्ये-नादिषु धर्मलक्षणाक्रान्तेष्वपि फलतः प्रभूतानर्थपर्यवसानादधर्मत्वोपचारः । मुमुक्षुं प्रति तु पुण्यविशेषाणामपि पापाना-मिवालौकिकानिष्टफलसाधनत्वाविशेषादधर्मत्वम् । यथोक्तं भाष्ये—* ज्ञानविरोधि च कर्म पुण्यपापरूपम् ; ब्रह्मज्ञानो-त्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम्, इति । धृतिः प्रीतिः, तत्साधनमिष्टसाधनं धर्म इत्यर्थः । नचातिप्रसङ्गः, शास्त्रैकवेद्ये श्रेयस्साधने रूढत्वात् । तदभिव्यक्त्यर्थमेव हि सूत्रितम्—चोदनालक्षणस्य सतोऽर्थस्य धर्मत्वमिति । इह चार्थाच्चोदनालक्षण इति समासेन धर्मे चोदनैव प्रमाणम्, प्रमाणमेव चोदनेति प्रतिज्ञाद्वयमन्तर्गतम् । सति सामर्थ्ये तस्य चात्र विशेषणविशेष्यभावमुखेन परस्परव्यवच्छेदपर्यवसानात् । तत्र चोदनैवेति प्रतिज्ञा प्रत्यक्षसूत्रे समर्थयिष्यते । प्रमाणमेवेति तु * औत्पत्तिकसूत्रादौ । नचात्र चोदनैवेति प्रतिज्ञयाऽर्थवादादीनामपि व्यवच्छेदस्स्यादिति भ्रमितव्यम् । तेषां चोदनाङ्गतया तन्मूलतया च धर्मे प्रामाण्यस्य वक्ष्यमाणत्वात् । इह चावधारणस्य तुल्यजातीयविषयतया चोदनावत्स्वातन्त्र्येण धर्मे प्रमाणीबुभूषतां प्रत्यक्षादीनामेव व्यवच्छेदात् । न हि देवदत्त एवात्र तिष्ठतीत्युक्ते वसनाभर-णादेर्व्यवच्छेदः, अपि तु तत्तुल्यस्य पुरुषान्तरस्य । एतत्सूत्रं प्रतिज्ञामात्रपरमित्येके ; तत्तु मन्दम्, न्यायनिबन्धनात्मके शास्त्रे सर्वत्र कस्यचिन्न्यायस्यावश्यं सूचनीयत्वात् । ये तु कार्यमात्रव्युत्पत्तिसमर्थनं पुरस्कृत्य कार्यरूपो वेदार्थ इति सूत्र-वाक्यार्थमाहुः, तेषां तु सूत्राक्षरवैयर्थ्यम्, अव्याप्तिश्च । सिद्धार्थव्युत्पत्त्या तत्र तात्पर्यसंभवेन सिद्धरूपस्यापि ब्रह्मणो वेदार्थत्वस्य शारीरके समर्थयिष्यमाणत्वात् ।

तदिह चायं विचारः । योऽसौ कृत्स्नवेदार्थानुबन्धी जिज्ञास्यतयोद्दिष्टो धर्मः तस्य च केनचिल्लक्षणेन विविक्त-प्रतिपत्तौ सत्यामेव हि परीक्षा घटेत, न ह्यसाविक्षुक्षीरादिवन्निर्विवादस्फुटप्रतीतिविषयः, येनाधर्मव्यवच्छेदे लक्षणान्तरापेक्षा न स्यात् । प्रतिसमयमन्यमन्यमेव च धर्ममभिलपन्ति । यथा—अन्तःकरणवृत्तिविशेष इति सांख्याः । शुभा चित्त-वासनेति सौगताः । पुण्याः पुद्गला इत्यार्हताः ; गतिमतां गतिभूतो जगद्व्यापीति वा । विहितक्रियासाध्यः पुंगुणविशेष इति वैशेषिकाः । धर्मशब्दश्च चैत्यवन्दनादावपि तत्तत्सामयिकैः प्रयुक्तो दृष्टः । अतस्सामान्येन धर्मजिज्ञासायां प्रति-ज्ञातायां कस्य परीक्षा वर्तिष्यत इति न विद्मः । अथाध्ययनानन्तरं तत एव हेतोर्धर्मजिज्ञासा कर्तव्येति प्रतिज्ञातेऽर्था-ज्ज्योतिष्टोमादीनामेव विचार्यत्वमापतितमिति मन्यसे ? तन्न, धर्मशब्दार्थे निश्चिते सति तदपेक्षपूर्वपक्षनिष्कर्षः, तेन च तन्निष्कर्ष इत्यन्योन्याश्रयणात् । अतो धर्मविवेकार्थं तल्लक्षणं वक्तव्यम् । ततश्च धर्मो लक्षणेन व्यावृत्ततयाऽवगन्तुं शक्यते न वेति संशयः । तदर्थं विचार्यते—धर्मशब्दस्य निरुक्त्या रूढ्याऽन्यतो वा किंचित्तल्लक्षणं संभवति न वेति । किं प्राप्तम् ? न संभवतीति । तथा हि—यदि धृतिसाधनं धर्म इत्युच्येत, तदा लौकिकानां प्रीतिसाधनानामपि धर्मत्वं स्यात् ; तथा चानुत्थानं निषेधशास्त्रस्य । अथानर्थपर्यवसानात्तेषामधर्मतेति मन्यसे ? तन्न, अविहिताप्रतिषिद्धेषु तदभावात्, श्येनादेः स्वरूपतोऽप्यधर्मत्वप्रसङ्गाच्च । नचायमिष्टप्रसङ्गः, अधर्मस्य विध्यसंभवात् । अथ चोदनालक्षणत्वे सति धृतिसाधनं धर्म इति रूढिराश्रीयेत ; तन्न, रूढेः प्रयोगशरणत्वात् ; प्रयोगस्य चासंसारमनुवर्तमानैस्तत्तत्सिद्धान्तैर्विगानात् । स्मृत्याचार-प्राप्तश्रेयस्साधनेष्वीश्वरप्रत्यक्षमूलपञ्चरात्रधर्मादिष्वव्याप्तेश्च । नच पञ्चरात्रादिषु चोदनाशब्दमुपचरन्ति ! एवं * वेदो-ऽखिलोधर्ममूलं स्मृतिशीले च तद्विदामित्यादिमहर्षिवाक्यैरपि न धर्मस्य लक्षणं किंचित्प्रतीमः । अतो धर्मस्य लक्षणा-संभवान्न व्यावृत्तप्रतीतिरिति ।

तत्रेदमुत्तरम्—* **चोदनालक्षणोऽर्थो धर्म** इति। अयमभिप्रायः—चोदनालक्षणत्वविशेषितमेवार्थसाधनत्वं धर्मलक्षणम्, तत्रैव च धर्मशब्दस्य रूढिः। नचान्यत्र बाह्यैः प्रयोगस्तत्र रूढिं विहन्ति। न हि भ्रान्तैश्शुक्त्यादिषु रजतादिशब्दः प्रयुक्त इति रजतादौ तस्य रूढिर्विहन्येत। अयं चार्थोऽन्यप्रमाणकत्वव्युदासेन सेत्स्यति। स्मृत्यादिकं तु मूलश्रुत्यनुमानेन धर्मे प्रमाणमिति तत्रापि चोदनालक्षणत्वसत्त्वान्नाव्याप्तिः। ये पुनरीश्वरप्रत्यक्षमूलपञ्चरात्रधर्माः, तेऽपि श्रुत्यर्थतया चोदनालक्षणा एव। यथाऽऽह भगवान् व्यासः—

* इदं महोपनिषदं चतुर्वेदसमन्वितम्। सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम्॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्। ऋग्यजुस्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा॥
भविष्यति प्रमाणं वा एतदेवानुशासनम्॥ इति।

तथा * वेदपाठेषु पठितं व्रतमेतत्सुदुश्चरम्। इति। तथा—*महतो वेदवृक्षस्य मूलभूतो महानयम्॥ इति।

किंच—* यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च। गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु॥

इति वदन् पाञ्चकालिकधर्मासाधारणनिषद्वाकसंज्ञितनिगमभागमन्वमंस्त। तथा च * अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वा। इति स्मृतिः श्रुतिमूलैवाभ्युपगन्तव्या; तत एव च धर्मोऽपि श्रौत एव फलितः। तत्र शास्त्रे श्रुत्यर्थतैवोच्यते, यथा—

* वेदान्तेषु यथासारं संगृह्य भगवान् हरिः। भक्तानुकम्पया विद्वान् संचिक्षेप यथासुखम्॥ इति,

* श्रुतिमूलमिदं तन्त्रं प्रमाणं कल्पसूत्रवत्। इति च। आगमान्तरोक्तधर्मास्तु श्रुतिमूलतया न तत्कर्तृभिरुच्यन्ते, न तत्सैद्धान्तिकैः, नापि महर्षिभिरिति विशेषः। सांख्यादिधर्मेष्वप्यविरुद्धांशश्चोदनार्थ एव। अतो नाव्याप्तिः। तदेवं धर्मस्य लक्षणसिद्धेस्तस्य व्यावृत्तिप्रतीतिस्सिद्ध्यतीति। एवमुपादेयस्य धर्मस्य लक्षणकथनेन हेयस्याधर्मस्यापि लक्षणं सूत्रितं भवति; अर्थपदस्य व्यवच्छेद्यतया तत्प्रतीतेः शास्त्रैकवेद्यमनर्थसाधनमनर्थ इत्युक्तं भवति।

सूचितश्चोदकः कश्चिच्चोदनापदसूत्रणात्। यदभिप्रायभेदेन धर्माधर्मौ फलिष्यतः॥
प्रमाणे लक्षणपदं प्रयुञ्जानेन सूचितम्। विशेषणमुपादाय लक्षणं च तदेव नः॥
अर्थसाधनमत्रार्थशब्देन प्रतिपादयन्। फलतुल्यमुपायं च नैःश्रेयसमसूचयत्॥
चतुर्वर्गफलोपायविषयैश्चान्यदीदृशम्। धृतिसाधनशब्देन मोक्षेऽपि प्रीतिमिक्षताम्॥

**॥ इति धर्मलक्षणाधिकरणम् ॥ २ ॥**

---

**॥ अथ धर्मप्रमाणपरीक्षणाधिकरणम् ॥ ३ ॥**

## 3. सू०—तस्य निमित्तपरीष्टिः ॥ १. १. ३. ॥

प्रस्तुतयोस्स्वरूपप्रमाणयोस्स्वरूपं प्रमाणमुखेनैवान्वेष्टव्यम्, तदर्थमिदमध्यायार्थविभजनम्। यथा वक्ष्यमाणेष्वध्यायेषु पृथक्पृथक् तत्तदध्यायार्थप्रतिज्ञा क्रियते, तद्वदत्रापि। अन्यथा कस्यांशस्य सदादिसूत्रैर्हेतुर्वक्ष्यत इति न ज्ञायेत। **तस्य**—धर्मस्य, **निमित्तम्**—प्रमाणम्, तत्प्रमानिमित्तत्वान्निमित्तमित्युपचर्यते; परम्परया वा तन्निमित्तत्वम्। **परीष्टिः**—पर्येषणा। *इषु गतावित्यस्माद्धातोः * इषेरनिच्छार्थस्य इति युचि, *परेर्वा इति परिपूर्वात्तस्मात् क्तिन्युचोर्विकल्पोऽनुशिष्यते। तेन युचि पर्येषणेति रूपम्, क्तिनि तु परीष्टिरिति। धर्मप्रमाणस्य परीक्षणमस्मिन्नध्याये कर्तव्य-

मित्यर्थः। इदमपि सूत्रं न केवलं प्रतिज्ञापरम्, अपितु प्रमाणस्यापरीक्षणीयत्वपूर्वपक्षप्रतिक्षेपार्थम्। तथा हि—किं धर्मे प्रमाणं परीक्षणीयम्, उत स्वरूपमेवेति संशयः। तदर्थं विचार्यते—किं प्रमाणनिरूपणमन्तरेण धर्मस्वरूपनिरूपणं युज्यते न वेति। तत्र युज्यत इति प्राप्तम्। लोके तावत्प्रत्यक्षादिप्रमाणनिरूपणमन्तरेण मधुराम्लसितरक्तशीतोष्णादिविभागमवधार्य हानोपादानादिव्यवहाराः पुंसां प्रवर्तन्ते। तद्वदिहापि शब्दान्तराभ्यासश्रुतिलिङ्गादिभिर्भेदाङ्गाङ्गिभावादिनिरूपणमुखेन धर्मस्वरूपमेवानुष्ठानार्थं निरूपणीयम्, किं तदर्थेन प्रमाणपरीक्षणेनेति।

तत्र प्रतिपद्यते * **तस्य निमित्तपरीष्टिरिति**। प्रकृतपरामर्शोऽत्र हेत्वभिप्रायः। **तस्य**—धर्मस्य। प्रमाणपरीक्षणं कर्तव्यम्, अलौकिकार्थत्वात्तस्य। न हि मधुराम्लादिविभागवज्ज्योतिष्टोमादेश्चैत्यवन्दनादेश्च विभागमुपलभामहे, येनेतरप्रहाणेनेतरमुपाददीमहि। अतो यावद्धर्मे चोदनानां प्रामाण्यमितरेषां चाप्रामाण्यं नावधारितं भवति, न तावद्धर्मविशेषोपादानं युज्यते। प्रमाणमविचार्य चेत्प्रवर्तेत, अन्धवदनर्थे पतेदर्थं वा न विन्देत्। अतो वेदस्यैव धर्मे प्रामाण्यमवधार्य तदर्थस्यैव धर्मत्वे निश्चिते सति तद्भेदाभेदतदाराध्यादिचिन्तावकाश इति विंशतिलक्षण्यां द्वितीयाध्यायमारभ्य क्रमशो यद्यत्प्रतिपाद्यं कर्मदेवताब्रह्मतदनुबन्धिभेदभिन्नम्, तत्सर्वं प्रमाणेनैव निरूपणीयतया स्वायत्तसर्वार्थं प्रमाणलक्षणमेव प्रथमं प्रवर्तते।

एवंच [चै] तत्परीक्षाक्रमः। लोकायतमतेन धर्मे न किंचित्प्रमाणमस्तीति; सत्त्वेऽपि सांख्याद्युक्तविषयानुरूपफलप्रदानरूपालोचनविकल्पाभिमानाध्यवसायादिनयेन न्यायोक्तसंप्लववादेन च किं चोदनाऽन्यच्चेति समुच्चयोऽस्ति न वेति; असमुच्चयेऽपि संशयसारसंवित्तेरन्वयादलौकिकार्थेषु कालभेदेन वा तद्भेदमन्तरेणापि प्रमाणभेदप्रवृत्तिदर्शनेन वा किं चोदनाऽन्यद्वेति विकल्पोऽस्ति न वेति; अविकल्पेऽपि सौगतादिमतेन किं प्रत्यक्षादिकमेव उत चोदनैवेति। तदेवं नियमविकल्पसमुच्चयोभयापलापेषु प्रत्यक्षसूत्रे तु चोदनाव्यतिरिक्तानां धर्मे प्रामण्यनिरासात्समुच्चयविकल्पचोदनेतरनियमानां प्रतिक्षेपः, औत्पत्तिकसूत्रादिना तु पादशेषेण चोदनाप्रामाण्यसमर्थनादुभयापलापपक्षः प्रतिक्षिप्यते। त्रिपाद्यां त्वर्थवादपादेन मन्त्रार्थवादानां विध्युपयोगेन प्रामाण्यप्रकारकथनम्। स्मृतिपादे चाप्तस्मृतिशिष्टाचारमात्रप्राप्ताष्टकादिकर्तव्यतामूलभूतदेशकालान्तराधीतवेदोपपादनम्। नामधेयपादे तूद्भिदादिनामधेयानां नामधेयतयैव स्थित्वा विशेषसमर्पणमुखेन चाटुना राजानं प्रीणयेदितिवद्यजिनिर्दिष्टदेवताराधनसामान्यस्य विशेषतोऽवच्छेदाद्विध्युपयोगस्समर्थ्यत इति कृत्स्नेनाध्यायेन धर्मे प्रमाणमेव परीक्ष्यते। एवमयोगान्ययोगव्यवच्छेदेन धर्मे चोदनैव प्रमाणमित्युपदिष्टे तदर्थस्यैव धर्मस्य निरूपणं भेदलक्षणादिषु वक्ष्यति। अतो धर्मे प्रमाणं परीक्षणीयमिति स्थितम्॥

यत्तु **उपवर्षवृत्तौ**—तस्य निमित्तपरीष्टिर्न कर्तव्येति नञमध्याहृत्यातिमहता क्लेशेन व्याख्यातम्, तदप्यनेन निरस्तम्; निमित्तपरीक्षाभावे प्रत्यवायस्य दर्शितत्वात्। यच्चापरीक्षणीयत्वे प्रमाणस्य प्रसिद्धत्वं हेतुरुक्तः, तदपि संशयविपर्ययाक्रान्तत्वप्रदर्शनेन निरस्तम्। अतो यद्यपि प्रमाणस्य स्वत एव विषयोपस्थापनसामर्थ्यम्, तथाऽप्यपवादशङ्कानिराकरणाय कारणदोषबाधकप्रत्ययनिरासः कर्तव्य इति युक्तं तस्य परीक्षणीयत्वमेव। यत्तु प्रमाणपरीक्षायामनवस्थानमुक्तम्, प्रमाणं परीक्ष्यमाणमन्येन परीक्ष्येत, तच्चान्यत्ततोऽन्येनेति, तदपि मन्दम्; सन्दिग्धविषये परीक्षाप्रवृत्तेः, उत्तरोत्तरेषु च सन्देहनियमानभ्युपगमात्। आशङ्कायाश्च व्याघातावधिकत्वाद्यावदाशङ्कमेव च तर्कप्रवृत्तेः। स्वपरनिर्वाहके वा कस्मिंश्चित्प्रमाणादौ विश्रमात्। न चात्र प्रथमे पर्वणि निस्सन्देहत्वे तद्युक्तम्। अन्यथा सौगतादयोऽपि

वैयात्यादिमामेवानवस्थां पुरस्कृत्य यदि स्वाभिमतैर्ग्रन्थैरपरीक्षितप्रामाण्यैश्चैत्यवन्दनादिकं धर्ममेव परीक्षणीयमुपक्षिपेयुस्तदा कस्ते निस्तारः? अतो भगवानप्युपवर्षोऽपरीक्षणीयत्वपूर्वपक्षमन्वारुरोह। भक्त्या चोदनाप्रामाण्ये प्रसिद्धिमनुसृत्य प्रसङ्गाच्छिष्यशिक्षणार्थं प्रत्यक्षतदाभासादेरपि प्रसिद्धिं दर्शयंस्तल्लक्षणादिकमपि व्याचकारेति मन्यामहे। अन्यथा कथमपरीक्षणीयत्वमपि केनचित्प्रमाणेन समर्थयेत्? तस्याप्यपरीक्ष्यत्वाय प्रमाणान्तरापेक्षयाऽनवस्थाप्रसङ्गात्। अथ यदि प्रसिद्धत्वेन स्वपरनिर्वाहकेणानवस्थां प्रतिबिभत्ससि, तदा प्रमाणपरीक्षणेऽप्येवंविधमिदं प्रमाणं भवितुमर्हतीति साधयतः प्रमाणस्याप्येवंविधत्वोपाध्याक्रान्ततया तद्वदेव समाधिं कटाक्षय[सि]। यदि तस्य तदुपाधिज्ञानायान्यापेक्षा, तदा प्रसिद्धत्वस्यापि प्रसिद्धत्वपरामर्शायान्यापेक्षेति तुल्यम्। किंच यदि प्रसिद्धत्वादपरीक्षणीयत्वमेवात्र विवक्षितं तदा शब्दनित्यत्ववेदापौरुषेयत्वार्थवादोपयोगादिप्रतिपादनार्थो वृथैवायं ग्रन्थविस्तरस्स्यात्। ततोऽपरीक्षणीयत्वमुखेनापि सामर्थ्यात्परीक्षणमेव क्रियत इति तज्ज्ञानमेवाध्याहारादिदोषाभावादध्यायार्थविभजनादिना सोपयोगत्वाच्च युक्तमुत्पश्याम इति॥

सर्वस्समञ्जसोऽर्थस्स्यात्प्रमाणे परिशोधिते। अतः प्रमाणवृत्तान्तपरिचिन्तनमर्थवत्॥
धर्मप्रमाणचिन्तेति सामान्येनाभिधानतः। मन्त्रार्थवादस्मृत्यादिचिन्ताऽप्यन्तर्भविष्यति॥
निषेधचोदनारूपधर्ममानस्य चिन्तने। निषेध्या धर्ममानस्य चिन्ताऽप्यन्तर्गतैव हि॥
ननु स्वरूपविश्रान्तब्रह्मवाक्येषु केषुचित्। न धर्ममानता तेषामिह न स्याद्विचिन्तनम्॥
मैवं वेदार्थमात्रस्य जिज्ञासोपक्रमादिह। कृत्स्नवेदप्रमाणत्वमुपक्षेसव्यमादितः॥
अतो धर्मप्रमाणस्य वक्तृदोषाद्यभावतः। मानत्वे ब्रह्मवाक्येऽपि सामान्यान्मानता स्थिता॥
स्वरूपमात्रविश्रान्तिर्वाच्या शारीरके परम्। तदनुक्तावपि ह्यत्र प्रामाण्यं साधयिष्यते॥
तावता विधिशेषत्वस्वरूपातत्परत्वतः। उत्थानमाप्यते पश्चान्न तु मानत्वसाधनम्॥

॥ इति धर्मप्रमाणपरीक्षणाधिकरणम्॥ ३॥

---

॥ अथ अन्यप्रमाणकत्वनिरासाधिकरणम्॥ ४॥

## 4. सू०—सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्॥ १. १. ४.॥

अप्रमाणकत्वान्यप्रमाणकत्वादिमुखेन धर्मपर्येषणायां प्रक्रान्तायां चोदनालक्षणेत्यंशसमाससामर्थ्यसिद्धावधारणद्वयक्रमानुसारेण प्रथममिहान्यप्रमाणकत्वं निरस्यते। तदत्र किं धर्मे प्रमाणं संभवति नेति विचारः। किं युक्तम्? संभवतीति। तथा हि—इह तावद्धर्मशब्दाभिलप्या द्रव्यक्रियागुणादयः प्रत्यक्षसिद्धा इति सर्वसम्मतम्। तेषां श्रेयस्साधनत्वं तु यद्यप्यस्मदादीनां सहसा दुर्दर्शम्, तथाऽपि रत्नतत्त्वमिव ताच्छील्यशालिनां संस्कारोपचयसहकृतेन प्रत्यक्षेण सुग्रहम्। कामातुरकामिनीसंदर्शनादिष्विव भावनाप्रकर्ष एव वा प्रत्यक्षां धियमुत्पादयितुमलम्। काकोलूकगृध्रादिषु चेन्द्रियप्रकर्षतारतम्यं दृश्यते। तारतम्यवतां च काष्ठाप्राप्तिरुपलब्धा। ततश्च, प्रकर्षतारतम्यं क्वचिद्विश्रान्तम्, तारतम्यरूपत्वात्, परिमाणतारतम्यवदित्येवं प्रतीन्द्रियं वा, प्रत्यक्षप्रकर्षतारतम्यमिति सामान्येन वा, प्रयोक्तव्यम्। एवं स्थिते तद्विश्रमस्य सर्वविषयतामन्तरेणानुपपत्तेरतीन्द्रियं सर्वं कस्यचिदैन्द्रियकमिति सिध्यति। प्रकृते विशेषतश्च तदेवा-

नुमातुं शक्यम्। धर्मादयः कस्यचिदिन्द्रियग्राह्याः, प्रमेयत्वात्, करतलवदिति; तस्यामेव वा प्रतिज्ञायां मीमांसकानां प्रत्यक्षत्वादस्मत्सुखादिवदिति। महर्षीणां योगिनां च धर्मवीर्यप्रसूतं प्रत्यक्षं महर्षिभिरेवोच्यते। * तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यतीत्यादि। अतः प्रत्यक्षग्राह्यत्वं धर्मस्य युक्तम्। एवमानुमानिकत्वमपि। सेवाध्ययनादिदृष्टहेत्वविशेषे फलभेदो न निमित्तान्तरमन्तरेण घटेत। तदेवं प्रत्यक्षानुमानगम्य एव धर्मेऽर्थशास्त्रायुर्वेदादिवत्पौरुषेयागमोऽपि [हिं] संभवत्येव। अतो यद्येभिः प्रमाणैश्चोदनार्थ एव धर्मतयोपस्थाप्येत, तदा बह्वायासग्राह्यचोदनानैष्फल्यम्, चोदनैवेत्यवधारणानुपपत्तिश्च। अथ चोदनानुक्तः कश्चित्तदविरुद्धोऽर्थः, तदा चोदनैवेति प्रतिज्ञा न स्यात्। यदि पुनस्सौगताद्यर्थवत्तद्विरुद्ध एव कश्चित्, तदाऽपि तद्बाधाच्चोदना प्रमाणमेवेत्यवधारणानुपपत्तिरिति सर्वथा * चोदनालक्षणार्थो धर्म इत्येतत् दुर्वचमिति।

तदेतत्परिहरति—* **सत्सम्प्रयोग** इत्यादिना। अत्रायमन्वयक्रमः—धर्मे प्रत्यक्षमनिमित्तम्; कुतः? विद्यमानोपलम्भनत्वात्—वर्तमानार्थग्राहकत्वादित्यर्थः। एतदपि कुत इत्याकाङ्क्षायामुच्यते। तत्खल्विन्द्रियाणां प्रयोगः। तद्भवतु प्रत्यक्षं ततः कथं धर्मे नापि निमित्तम्? विद्यते हि धर्मः क्रियमाणः कृतश्च यावत्फलम्, ततस्तदुपलम्भनं प्रत्यक्षं भवतु। मैवम्; यदि तावदयं घट इतिवदयं धर्म इति द्रव्यादिस्वरूपं धर्मतया प्रत्यक्षेण दृश्यते; तत्र च यत्फलसाधनतया योऽर्थो निर्दिष्टस्तदनन्तरमेव तस्योत्पत्तिं यदि नियमेनोपलभेमहि, तदा भूयोदर्शनसहकृतेन प्रत्यक्षेण श्रेयस्साधनमिदमिति निश्चिनुमः। स्वर्गादेः फलस्य देहान्तरभावितयेदानीमुपलम्भायोग्यत्वान्न तत्साधनमिति गृहीतुं शक्यम्। न च यावत्फलानुभवं क्रिया तिष्ठति। क्रियासाध्यमपूर्वं स्थिरमपि नास्मदादिप्रत्यक्षम्; तद्धि देवतानुग्रहात्मकम्। न हि पराभिप्रायः परस्य प्रत्यक्षतामियात्। अतः फलदशायां कर्मणोऽभावात् कर्मदशायां फलस्याभावादुभयनिष्ठस्य साध्यसाधनभावसंबन्धस्यास्माभिर्ग्रहीतुमशक्यत्वात्, प्रत्यक्षस्य धर्मग्राहित्वाभावे विद्यमानोपलम्भनत्वं हेतुरिति साधीयः।

एतेन रत्नतत्त्वदृष्टान्तोऽपि निरस्तः, न हि सहस्रशश्शीलितेऽपि रत्नतत्त्वे गुरुत्वं चक्षुषा गृह्यते। वर्णादिवैषम्यं तु पूर्वं सादृश्यतिरस्कृतमैन्द्रियिकतया पश्चान्निपुणनिरूपणेन प्रकाशत इति युक्तम्। यत्तु भावनाप्रकर्ष एव प्रत्यक्षयतीति, तदसत्; न हि भावनया प्रत्यक्षं जायते, अपि तु स्मृतिवैशद्यमात्रमेव। संस्कारोपचयो हि स्मृतावेव पाटवमादधीत। कामातुरकामिनीसन्दर्शनादिष्वपि न पूर्वगृहीताभ्यधिकं किंचित्प्रकाशते। यच्च—

* वृक्षेवृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्। गृहीतधनुषं रामं पाशहस्तमिवान्तकम्॥

इत्यादिष्वधिकं प्रकाशते, तत्त्वन्यथाऽवभासान्न प्रत्यक्षम्, अपि तु तदाभासः। यत्तु इन्द्रियप्रकर्षतारतम्यादेर्विश्रान्तिसाधनम्, न तेनाप्येकस्येन्द्रियस्य सर्वविषयता सिध्यति, किंतु तदिन्द्रियग्राह्यजातीयत्वे सति तत्संप्रयुक्तसर्वविषयत्वम्। न हि लोके प्रकृष्यमाणमिन्द्रियपाटवमिन्द्रियान्तरविषयेषु मात्रयाऽपि प्रवर्तमानं दृष्टम्, स्वविषये वा भूते भविष्यति वा। असन्निकृष्टस्य च नैन्द्रियिकत्वमित्युक्तम्। यच्च प्रमेयत्वादिना धर्मादीनामैन्द्रियकत्वसाधनम्, तदपि बाधकाभावेन निरस्तम्। अन्यथा धर्मादयो रूपादयश्च कस्यचिद्घ्राणग्राह्याः, प्रमेयत्वात्, गन्धवदित्यपि किं न साध्येत? विषयविशेषनियततया तच्छक्तिनिश्चयादिति चेत्; प्रकृतेऽप्येतदनुसन्धत्स्व। घ्राणादेरपि कचित्सर्वविषयत्वमिच्छाम इति चेन्न; उक्तोत्तरत्वात्। इच्छामात्रेण च तदसिद्धेः। यत्तु धर्मवीर्यप्रसूतमृषीणां योगिनां च प्रत्यक्षं शास्त्रबलादभ्युपगतम्, तन्न तेषामनुष्ठानार्थम्, आगमावधारितानुष्ठानजन्यत्वात्, आगमार्थतयैव धर्मादिप्रत्यक्षीकरणात्। नाप्यसदादीनामनु-

ष्ठानार्थम्, परप्रत्यक्षस्य परानुष्ठानानुपकारित्वात्। तदुपदेशस्य त्वागमायमानस्यापि पौरुषेयतया श्रोतॄणां मूलपरामर्शसापेक्षत्वेन धर्मवीर्यप्रसूतप्रत्यक्षमूलत्वपरिशेषे तस्मिन् धर्मे प्रमाणान्तरमन्वेषणीयम्, तच्च नान्यच्छास्त्रात्। यद्यपीश्वरनित्यप्रत्यक्षमूले पञ्चरात्रशास्त्रे श्रुत्यर्थविषयेऽपि न मूलश्रुत्यपेक्षा, तथाऽपि नित्यप्रत्यक्षविशिष्टोऽयमीश्वर इति तत्स्वरूपसिद्धौ तन्मूलवक्तृदोषनिराकरणे च श्रुतिरेव शरणमिति श्रुतिप्रामाण्यमुपजीव्यैव तत्प्रामाण्यं निरुपपादि। चोदनार्थोऽयमित्येव च भगवता तदर्थ उपदिश्यत इति श्रीविष्णुस्मृतिगीतादिन्यायेन तदुक्तार्थेऽपि चोदनाप्रामाण्यमायातम्। तदेवमस्मदादिभिर्धर्मस्य श्रेयस्साधनरूपेणाध्यक्षयितुमशक्यत्वादन्वयव्यतिरेकसापेक्षमनुमानमपि धर्मे न प्रमाणमिति सिद्धम्॥

यत्तु सेवाध्ययनादितुल्यत्वेऽपि फलभेददर्शनादतीन्द्रियनिमित्तभेदकल्पनमिति, तदपि न; सूक्ष्मस्य सेवाध्ययनादिभेदस्य दृष्टस्यैव संभवेन निमित्तान्तरनैरपेक्ष्यात्। सामान्यतश्च कल्पिते निमित्तभेदे किं तद्दर्शनादिसिद्धमुत चोदनासिद्धमिति विवेकासिद्धेरनुष्ठानं प्रत्यनुपकारित्वात्। ततश्च सेतिकर्तव्यताकधर्मानुष्ठाने श्रुतिरेव शरणम्। तदेवं प्रत्यक्षानुमानयोर्धर्मप्रमाणत्वनिरासेन तन्मूललौकिकागमस्यापि न धर्मप्रमाणतासिद्धिः। उपमानार्थापत्तिसंभवादीनि तु प्रमाणान्तराणि न सन्त्येव, यथायथं त्रिष्वन्तर्भावादिति **न्यायपरिशुद्धौ तत्त्वमुक्ताकलापे** च समर्थितमस्माभिः। बहिर्भावेऽपि तुल्यन्यायतया धर्मविषयत्वाभाव एव। तदेवं चोदनाव्यतिरिक्तैः प्रमाणैः कैश्चिदपि तन्निरपेक्षैश्चोदनोक्तस्य तदन्यस्य तद्विरुद्धस्य वा कस्यचिद्धर्मत्वेनाग्रहणाच्चोदनैवेत्यसाधारणमुपपन्नमिति।

अनुष्ठातृदशापन्नपुरुषापेक्षया त्विदम्। सत्संप्रयोगजन्यत्वमैशाध्यक्षादिसुस्थितम्॥
प्रत्यक्षमस्मदादीनां पक्षोऽत्राभिमतस्ततः। न भागासिद्धता नापि बाधो हेत्वोरिहोक्तयोः॥
पुरुषस्येन्द्रियाणामित्येकानेकत्वकीर्तनात्। देहेन्द्रियादिसङ्घातादन्य आत्मा प्रदर्शितः॥
अक्षैरपघनैर्वाऽर्थानुपलब्धान्पृथक्पृथक्। य एकः प्रतिसन्धत्ते स तान्येवेति दुर्वचम्॥
सङ्घातिनोऽधिकं तत्त्वं सङ्घातो नाम नेष्यते। न चावयवसङ्घातादन्योऽस्त्यवयवी पुनः॥
न चात्र ग्रामवद्बोद्धृनानात्वमुपलभ्यते। न च पाणिरहं चक्षुरहमित्यभिजल्प्यते॥
प्राणाख्यात्पवनस्कन्धादप्यन्यत्वमवस्थितम्। प्रत्येकसमुदायादिविकल्पानुपपत्तितः॥
व्यतिरिक्ता मतिश्चास्ति कायप्राणेन्द्रियादिषु। पुरुषस्येति सम्बन्धकथनात्तच्च सूचितम्॥
बुद्धितो व्यतिरिक्तत्वमत एव च सूत्रितम्। तद्धर्मित्वेन सकलैः प्रमाणैरुपलम्भनात्॥
बुद्धिजन्मेत्यनेनैव बुद्धेर्जन्मप्रदर्शनात्। अजातः प्रतिसन्धाता प्रोक्तः पुरुषशब्दतः॥
श्रुत्या धीनित्यभावेऽपि सूचितैवात्र तद्भिदा। नामान्तराभिलापार्हविकारसदसत्त्वतः॥
देहादिभ्योऽतिरिक्तस्य परलोकफलार्थिनः। वेदितुस्स्थापने धर्मप्रमाणान्वेषणं क्षमम्॥
अतोऽन्यपरवाक्येऽपि कृत्स्नशास्त्रोपयोगिनम्। अधिकारिणमात्मानमादावेव न्यवीविशत्॥
स्वर्गयागादिवाक्येऽपि परीचिक्षिषिते पुनः। प्रत्यक्षप्रतिरुद्धत्वं परिहर्तुमिहेप्सितम्॥
पारलौकिकतामात्रमिह तावदपेक्षितम्। शारीरके तु नित्यत्वं वाच्यं नित्यफलार्थिनः॥
प्रत्यक्षलक्षणाद्यं तु वक्तव्यं न्यायविस्तरे। इह तत्सूच्यतां मा वा पारम्पर्योपयोगतः॥
प्रत्यक्षमनिमित्तं चेदनुमानादिकं तथा। इति पश्यन्नुपारंस्त किमेतत्कीर्तनश्रमात्॥

5. सू०—औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ १. १. ५. ॥

धर्मस्यान्यप्रमाणकत्वं निराकृतम्; अथाप्रमाणकत्वमाशङ्क्य निराक्रियते पादशेषेण। तत्रास्मिन्नधिकरणे चोदनानामप्रामाण्यद्वाराणि बहूनि विकल्प्य कश्चिदंशो निराक्रियते। तदयं विचारः—किं चोदनानां धर्मे प्रामाण्यं संभवति न वेति। तदर्थं च किं तासां प्रामाण्यं प्रमाणान्तरसापेक्षं न वेति। सापेक्षत्वे तदभावस्योक्तत्वादप्रामाण्यम्। निरपेक्षत्वे तदभावस्याकिंचित्करत्वात् प्रामाण्यमिति। तत्रैवं पूर्वपक्षी मन्यते—यदि प्रमाणान्तराणि धर्मे न प्रमाणम्, कथं तत्र शब्दः प्रमाणं भविष्यति? स हि नियमेन स्वप्रामाण्ये प्रमाणान्तरसापेक्षः, तथा दर्शनात्। अन्यथा बालोन्मत्ताप्रबुद्धादिवाक्यानामपि प्रामाण्यप्रसङ्गात्। प्रमाणान्तरसापेक्षत्वाभ्युपगमे तदभावस्योक्तत्वात्कथं तदधीनं प्रामाण्यम्? निरपेक्षत्वाभ्युपगमस्तु दृष्टव्याप्तिविरोधादशक्यः। अतो धर्मे चोदनानां प्रामाण्यं न संभवतीति। राद्धान्तस्तु—

अस्रामर्थ्याद्धीदृष्टेर्बाधनादफलत्वतः। परतन्त्रतया वा स्यादप्रामाण्यं श्रुतेर्न तत् ॥

तथाहि—चोदनानामप्रामाण्यं वदतः प्रमाणान्तरासंभवे पदानां पदार्थेन सम्बन्धायोगात्किं बोधनसामर्थ्यमेव न स्यादित्यभिप्रेतम्? उत सामान्यतस्तत्सद्भावेऽपि प्रकृतार्थे चोदनवाक्यात्प्रत्ययो न जायत इति? जातोऽपि बाध्यत इति? अबाधितोऽपि वा निरर्थक इति? सार्थत्वेऽपि वा प्रामाण्यहेतुरहित इति? तत्र प्रथमं दूषयति—**औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध** इति। अयमर्थः—पदस्य स्ववाच्येन सह वाच्यवाचकसम्बन्धः, **औत्पत्तिकः**—नित्यः। उत्पत्तिः स्वभावः। औत्पत्तिकः—स्वाभाविकः। अतः पदपदार्थयोर्वाच्यवाचकसम्बन्धस्यैव स्वाभाविकत्वान्न सम्बन्धान्तरविरहेणासमर्थत्वमित्यभिप्रायः। यद्वा शब्दार्थयोरुत्पत्तिदशासिद्ध इत्यौत्पत्तिकस्संबन्धः, न ह्यसावसंबन्धतयोत्पन्नयोः पश्चादीश्वरादिभिः संकेतान्निर्वर्त्यत इति शब्दाधिकरणे समर्थयिष्यते। द्वितीयं दूषयति—**तस्य ज्ञानमुपदेश** इति। **तस्य**—प्रत्यक्षाद्यगोचरस्य। **उपदेशः**—हिताहितप्राप्तिपरिहारोपायविषयश्चोदनात्मा नित्यः परमात्मोपदेशो यः। **ज्ञानम्**—ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानकरणमित्यर्थः। ज्योतिष्टोमादिवाक्यपाठे प्रत्ययोत्पत्तिर्दुरपह्नवा, अन्यथा प्रत्यक्षादिष्वपि धाष्ट्यात्प्रतिपत्त्यपह्नवप्रसङ्ग इति। तृतीयं दूषयति—**अव्यतिरेकश्चेति**। प्रमाणान्तरेणास्यार्थस्य व्यतिरेकश्च नास्ति। व्यतिरेकोऽन्यत्वम्, प्रतीयमानादाकाराच्छुक्तिकारजतादिवद्विरुद्धाकारान्तरयोगित्वमित्यर्थः। यद्वा अव्यतिरेकश्चेत्युपदेशो विशेष्यते। **व्यतिरेकः** स्वार्थानन्वयः, प्रमाणान्तरेणापहृतविषयत्वम्, तद्रहित इत्यर्थः। तथा हि—प्रत्यक्षं तावज्ज्योतिष्टोमादीनां देहान्तरानुभाव्यस्वर्गादिश्रेयस्साधनत्वं नास्तीति न प्रतिपादयति, अलौकिके फले साध्यसाधनभावग्रहणवत्तदभावग्रहणस्याप्यशक्यत्वात्। नाप्यनुमानम्; तत्किं साक्षाज्ज्योतिष्टोमादीनां श्रेयस्साधनत्वं प्रतिषेधति, यथा विगीतं न श्रेयस्साधनं क्रियात्वात् गमनक्रियावत्, इति? विप्रतिपन्ना हिंसा न धर्मः, हिंसात्वात् ब्राह्मणहिंसावदित्यादि? अथवा चोदनाप्रामाण्यप्रतिषेधद्वारेण—यथा विगीतं न प्रमाणम्, प्रत्यक्षाद्यवगतार्थवाक्यत्वात्, बुद्धादिवाक्यवत्? आप्ताप्रणीतवाक्यत्वात्, बालोन्मत्तादिवाक्यवदित्यादि? तत्र तावज्ज्योतिष्टोमादीनां किं लौकिकश्रेयोपेक्षया साधनत्वं निषिध्यते? अलौकिकापेक्षया वा? सामान्यतो वा? नाद्यः, सिद्धसाधनत्वात्। न द्वितीयः, अलौकिकश्रेयस्सिद्ध्यसिद्धिभ्यां तत्साधनत्वनिषेधस्याशक्यत्वात्। न तृतीयः, भोजनक्रियादिभिरनैकान्त्यात्। यच्च हिंसात्वादधर्मत्वसाधनम्, तदपि

न; अधर्मत्वस्य हि व्यापकस्य ग्रहणं धर्मतया कस्यचिद्ग्रहणमन्तरेण न घटते, तद्ग्रहणं च प्रागुक्तरीत्या न चोदनातोऽन्यतस्सिध्यतीति व्याप्तिग्राहकप्रमाणबाधः। ततश्च चोदितत्वं धर्मत्वे प्रयोजकं पाप्मत्वे निषिद्धत्वमिति सोपाधिकता च।

यत्तु सांख्यैरुच्यते—हिंसाविधिनिषेधयोर्नास्ति विरोधः, आलम्भनवाक्यं हि हिंसायाः क्रतूपकारकत्वं बोधयति, निषेधवाक्यं तु हिंसायाः प्रत्यवायसाधनत्वम्; अतो वैधी हिंसा पुरुषस्य दोषमावक्ष्यति, क्रतोश्चोपकरिष्यति। नच प्रत्यवायहेतोर्विधानानुपपत्तिः, दुःखस्पर्शस्य भेषजादेरिव प्रभूतसुखसाधनतया विध्युपपत्तेः। उक्तं च **पञ्चशिखाचार्यैः**—*स्वल्पस्संकरस्सुपरिहरस्सप्रत्यवमर्शः—इति। निषिद्धत्वं साधनव्यापकमिति। तदसत्, शास्त्रैकवेद्ये सुखे दुःखे च किं प्रभूतमिति नियामकाभावात्। विधिबलात्सुखाधिक्यं कल्प्यत इति चेत्; निषेधबलाद्दुःखाधिक्यं किं न कल्प्येत? अल्पदुःखसाधनेऽपि सुखाधिक्याल्लोके विधिर्दृश्यत इति चेत्; अल्पसुखसाधनेऽपि दुःखाधिक्यान्निषेधोऽपि। अतो यावन्निषेधाविषयत्वं न साध्यते न तावदयं विधिर्जीवति। तदविषयत्वं च चिकित्सकशल्यादिप्रयोगन्यायेन; यथाश्रुति हिंसालक्षणानाक्रान्तत्वाद्वा; तल्लक्षणयोगेऽपि *अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य इति सङ्कोचाद्वा। अतो नास्य व्यापकत्वम्। यच्च प्रमाणत्वप्रतिषेधायोक्तं प्रत्यक्षाद्यवगतार्थविषयवाक्यत्वादाप्तप्रणीतवाक्यत्वादिति, तदपि कारणदोषस्योपाधित्वान्निरस्तम्। नहि बुद्धादेरुन्मत्तादेर्वा वाक्यं दोषमन्तरेणान्यतः कुतश्चिदप्रमाणं जातम्, स्वभावाद्वा। नचात्र कारणदोष इति वक्ष्यते। अत ईदृशान्यनुमानान्यसन्दिग्धाविपर्यस्तज्ञानजनकेनानेनैवागमेन बाधमर्हन्ति, न तु तैस्तद्बाधः। अन्यथा प्रत्यक्षस्यापि कैश्चिदाभासैर्बाधप्रसङ्गात्। अस्त्वेवम्, तथाऽपि योगाचारमाध्यमिकादिभिरभ्युपगम्यते; एवमपि चोदनानां न प्रामाण्यं सिध्यतीति चेत्; तदपि न, बाह्यविषयप्रतीत्युदयस्य स्वारसिकबाधाभावस्य च दुरपह्नवत्वात्। स्तम्भादिप्रत्ययो निरालम्बनः, प्रत्ययत्वात्, स्वप्नादिप्रत्ययवत्, इत्यादीनां स्ववचनविरोधबाधानैकान्त्यसोपाधिकत्वसाध्यविकलत्ववादानधिकारप्रसङ्गादिभिर्निर्मूलत्वात्। तदेतदविरोधलक्षणे तर्कपादे प्रपञ्चयिष्यते। **न्यायविस्तरे** प्रत्यक्षादेरागमस्य च सामान्यतः प्रामाण्यसिद्धेरिहोदास्महे। एवमागमेनापि न चोदनानां बाधः, बौद्धाद्यागमानां सहेतुकपरिग्रहाणां संभवद्वक्तृदोषाणां चोदनाभिः स्पर्धितुमशक्तेः। चोदनामूलानां तु मन्वाद्यागमानां तदविरोधात्। विरुद्धांशे च दुर्बलतया तत एव बाधात्। स्मृत्यागमयोस्तु कार्यविषययोर्मीमांसाविरोधे [सङ्कतसम्मितत्वे] विकल्पात्। तत्त्वविषययोस्तु तात्पर्यभेदेन निर्वाहात्। एवमौपनिषदसर्वज्ञानुभवमूलागमस्यापि श्रुत्यैकार्थ्यस्थापनात्। प्रमाणान्तरैस्तु सद्भिरपि तुल्यन्यायतया न बाधः। असद्भिस्तु नतराम्। तदेवमव्यतिरेकस्सिद्धः।

चतुर्थं दूषयति—***अर्थेऽनुपलब्धे तत्प्रमाणमिति**। श्रेयस्साधनतया प्रत्यक्षादिभिः प्रागुक्तन्यायेनानुपलब्धे, **अर्थे**—धर्मे। **तदिति** प्रमाणशब्दानुसारेण नपुंसकनिर्देशः। ज्ञानशब्दनिर्दिष्टं शास्त्रं वा परामृश्यते। तदेवं तत्र प्रमाणान्तरज्ञातविषयत्वाधीनं नैष्फल्यं नास्तीत्यभिप्रायः। **अर्थेऽनुपलब्धे** इत्येतावतैव वा प्रकृतपरिहारः। पञ्चमं दूषयति—**अनपेक्षत्वादिति**। अयमभिप्रायः—व्युत्पत्त्या हि शब्दानां बोधकत्वं गृह्यते। नच प्रमाणान्तरदृष्टत्वमपि वाच्यतया व्युत्पत्तिसिद्धम्, येन तदपेक्षा स्यात्। न च प्रमाणान्तरमेतज्ज्ञप्त्युत्पत्त्योः कारणमिति। अत्रैवाधिकरणस्य निर्भरः। शिष्टं तु पूर्वोत्तराधिकरणैस्सामान्यतो न्यायविस्तरेण च सिद्धं प्रतिपत्तिसौकर्यायोपस्थापितमिति मन्तव्यम्। नन्वत्र प्रमाणान्तरानपेक्षत्वं प्रामाण्यस्यासिद्धम्। तद्धि लोके कारणगुणादेव जायते, संवादकारणगुणार्थक्रियाज्ञानैश्च ज्ञायते। अत उत्पत्तिज्ञप्त्योः पराधीनं प्रामाण्यम्। नित्ये तु वेदकर्तृगुणस्तावन्नेष्टः। प्रमाणान्तरागोचरार्थविषयतया च न संवादः।

नच कालान्तरभाविस्वर्गादिसाधनेष्वर्थक्रियाज्ञानम् । नच कारीर्यादिदृष्टान्तेनाश्वासः, तेष्वपि फलनियमादर्शनात् । कर्मकर्तृसाधनवैगुण्यात्कदाचित्फलानुत्पत्तिरिति चेत्; को जानाति फलोत्पत्तिर्यदृच्छया वा फलानुत्पत्तिर्वैगुण्याद्वेति? किंच, चित्रादीनामवहितैरनुष्ठितानामपि मर्दनादिजन्यसुखवत्समनन्तरमेव न पश्वादिकं फलं पश्यामः । नच चित्रादिफलं कालान्तरेऽपि संभवतीति वाच्यम्; लोके क्रियाफलस्यानन्तरभावित्वनियमदर्शनात् । नापि राजसेवादिवदाराध्यदेवताप्रीत्यादिद्वारा कालान्तरे फलं भविष्यतीति वाच्यम्, तथात्वस्य शास्त्रप्रामाण्यसमर्थनात्पूर्वं वक्तुमशक्यत्वात् । पश्वादीनां च दृष्टफलानां तदानीमेव संभावितानां साधनत्वेन चोदिताश्चित्रादयश्शास्त्रार्थनिश्चयदशायामेव देवताप्रीत्याद्यपूर्वप्रणाडीसमाश्रयणे कारणाभावात्स्वरूपेणैव साधनतया शास्त्रेण समर्प्यन्त इति निश्चीयते । यच्च कालान्तरे पश्वादिफलं जायते, तत्र प्रतिग्रहादिदृष्टकारणदर्शने कथं चित्रादिसाध्यत्वमध्यवस्येम? अतो दृष्टफलार्थचोदनानां विसंवादे स्वर्गादिफलार्थचोदनास्वपि सुगमम् । न केवलं चित्रादिष्वर्थक्रियाविरहमात्रात्तुल्यन्यायता, अपि तु * स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीत्याद्यर्थवादपर्यालोचनया विरुद्धार्थक्रियैवोपलभ्यते । * स एष यज्ञायुधी यजमान इति यज्ञायुधसंयोगि शरीरमेव ह्युच्यते; नत्वात्मा । न च धर्मं निष्प्रमाणमातिष्ठमानैः कार्यकारणसंघातातिरिक्तः कश्चिदात्माऽभ्युपगम्यते । यद्यपि यजमानशब्दश्चेतनपर्यन्तः, तथाऽप्यत्र * रावणो निहतश्शेते इत्यादाविव तत्पर्यन्तत्वासंभवाच्छरीरमात्रवचनः । न ह्यत्रात्मनि यज्ञायुधसंयोगः । न च तत्स्वामित्वमात्रं विवक्षितम्, पात्रचयनस्तुत्यर्थत्वाद्वाक्यस्य । नहि प्रागपि सिद्धेन स्वामित्वेन पात्रचयनं स्तुतं भवति । अतस्संयोगवचन एवायं यज्ञायुधिशब्दः । स च संयोगश्शरीरस्थ एव । तच्च शरीरं तदानीं न स्वर्गं गच्छत्पश्यामः । न च पश्चाद्वा गमिष्यति, तद्विरुद्धभस्मसाद्भावदर्शनात् । यास्यतीत्यनिर्देशाच्च । अतो न केवलं चोदनानां संवादाभावमात्रम्, योग्यत्वे सत्यनुपलम्भाद्विपरीतोपलम्भाच्च विसंवाद एवेत्यपौरुषेयीणां चित्रादिचोदनानामप्रामाण्ये तुल्यन्यायतया स्वर्गाद्यलौकिकफलसाधनचोदनास्वप्यनाश्वासः । अतः प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च कारणाभावाद्विपरीतदर्शनाच्च कथं चोदनाः प्रमाणं भवेयुरिति ।

अत्राप्युत्तरम्—* **अनपेक्षत्वादिति** । प्रामाण्योत्पत्तिज्ञप्त्योर्न परापेक्षा । इह तावत्प्रामाण्यमप्रामाण्यं चेत्युभयं स्वत इति सांख्याः । उभयं परत इति वैशेषिकादयः । अप्रामाण्यं स्वतः, प्रामाण्यं परत इति बौद्धाः । तद्विपर्ययेण मीमांसका इति चत्वारः पक्षाः । तत्रोभयं स्वत इति पक्षस्तावन्न संभवति, विरोधात् । न हि विरुद्धमुभयमेकस्य स्वभावस्स्यात् । तथा सति प्रमाणाप्रमाणविभागो न स्यात् । अथ विज्ञानभेदेन प्रमाणाप्रमाणव्यवस्थेति ब्रूयात्, तदा कस्यां विज्ञानव्यक्तौ प्रामाण्यम्, कस्यां चेतरदिति दुर्निरूपम्, ज्ञानस्वभावव्यतिरिक्तस्यान्यस्य नियामकस्याभावात् । भावे वा पराधीनत्वप्रसक्तेः । स्वतोऽसतः कथं साध्यत्वमिति चेत्; स्वतस्सतो वा कथम्? सत्त्वमेव हि साध्यत्वविरुद्धम् । अभिव्यक्तिमात्रं तत्रेति चेत्, साऽप्यभिव्यक्तिस्स्वतस्सती चेन्न साध्या । असती चेत्काऽन्यत्र वस्सती? असतश्शशविषाणादेस्साध्यत्वं न दृष्टमिति चेत्; सतो वाऽऽत्मनः किं दृष्टम्? अतः पूर्वमसत एव मृदादिषु घटत्वपटत्वाद्यवस्थाविशेषस्य दण्डचक्रादिभिस्साध्यत्वदर्शनात्, दृष्टे चानुपपत्त्यभावात्, अन्यथा स्ववचनविरोधादिदोषप्रसङ्गात्, प्रागसतां केषांचिद्व्यावस्थाविशेषाणां हेतुवशात्पश्चात्सत्तेति दुष्परित्यजोऽयमर्थः । साङ्ख्यवैशेषिकाभिहितौ सदसत्कार्यवादावारम्भणाधिकरणादिषु विस्तरेण निराकरिष्येते ।

अस्तु तर्ह्युभयं परतः, द्वयोरपि कारणगुणदोषान्वयव्यतिरेकानुविधानदर्शनात्। तथा च प्रयोगः—विगीता प्रमा सम्यङ्मिथ्यावबोधसाधारणकारणादतिरिक्तसहिताज्जायते, कार्यत्वे सति तद्विशेषत्वात्, अप्रमावत्; यदि ज्ञानकारणादेव प्रमा स्यात् अप्रमाऽपि प्रमैव भवेदिति। तदप्यसत्, कार्यत्व इति विशेषणं प्रयुञ्जानेनेश्वरज्ञानस्य प्रमात्वमभ्युपगतम्। तच्च तस्य स्वाभाविकम्, अन्यथा कथमप्रमात्वं तस्य न स्यात्? दुष्टकारणप्रसूतत्वाभावादिति चेत्; तर्हि गुणवत्कारणप्रसूतत्वाभावात् प्रमात्वमपि न स्यात्। उभयपरित्यागे * परस्परविरोधे हि न प्रकारान्तरस्थितिरिति न्यायेन निस्स्वभावत्वप्रसङ्ग इति चेत्; तद्विरुद्धोभयपरिग्रहे वा किंस्वभावस्स्यात्? किं विशेषाभावे सत्यन्यतरस्वभावपरिग्रहश्शक्यः? धर्मिग्राहकात्तस्य नित्यस्य प्रमात्वेनैव सिद्धिरिति चेत्; तर्हि सिद्धं तस्य स्वाभाविकं प्रमात्वम्। ततश्च तद्दृष्टान्तेनेतरास्वपि प्रमात्वं स्वाभाविकमनुमीयताम्। अतस्सप्रतिसाधनस्तद्धेतुः। एतेन प्रमा सम्यङ्मिथ्यात्वावबोधसाधारणकारणातिरिक्तजन्या, कार्यत्वात्, घटवदिति प्रयुञ्जानोऽपि प्रत्याख्यायि। सेश्वरस्य सर्वप्रमापक्षीकारेण प्रयोगे भागासिद्धेः। विगीतत्वेन विशेषणे प्रत्यनुमानादेर्दुर्वारत्वात्। एवं निरीश्वरस्यापि मुक्तधीपक्षीकारबहिष्कारयोरुक्तदोषानतिवृत्तिः। विपक्षे बाधकसदसद्भावाभ्यां विशेषः। यत्तु, तावन्मात्राधीनत्वाभावस्योभयसम्मतत्वादप्रामाण्यस्वतस्त्वस्य च त्वयाऽपि निरासात्, तावत एव निमित्तान्तरसंभेदेन विजातीयारम्भकत्वस्यात्रापि सिद्धिरिति; तत् निमित्तान्तरानिर्वचनादयुक्तम्। अप्रामाण्यनिमित्ताभावो निमित्तमस्त्विति चेन्न; कार्यान्तरहेत्वभावस्य कार्यान्तरेण हेतुतयाऽपेक्षणेऽतिप्रसङ्गात्। व्यभिचारादर्शनात्तद्धेतुत्वाभ्युपगमेऽपि चोदनाजनितबुद्धौ कारणदोषाभावमात्रेण प्रमात्वस्य दुस्त्यजत्वात्। कारणगुणनिरपेक्षतत्प्रामाण्यसमर्थनार्थो ह्ययं संरम्भः। दोषाभावोऽपि भावान्तरं भवतः, अभावाभावादभावान्तराणामपि विरोधिभावान्तरमात्रत्वस्वीकारादिति चेत्; सत्यम्, तथाऽपि कारणदोषाभावस्य कारणगुणैकरूपत्वायुक्तेरवक्तृकेऽपि वेदे दोषाभावस्सिद्धः। यथा कारणाभावदशायां कारणदोषाभावे कारणगुणस्याप्यभावो गुणव्यतिरिक्तभावान्तरात्मा, न पुनः कारणदोषात्मा। श्रद्धेयं चैतन्नित्यप्रमायामिति चार्वाकादेः प्रकृतप्रयोगे का वार्तेति चेत्; एषैव विपक्षे बाधकाभावादिमयी। किंच, भवत्पक्षपक्षपातिना **वाचस्पतिना न्यायवार्तिकतात्पर्यटीका**दिषु प्रामाण्यस्थापकानुमाने स्वपरनिर्वाहकसमाधिस्वीकारात् स्वतःप्रामाण्यमाश्रितम्। तच्च * वाचस्पतेर्वचसि न स्खलते य एकः इति वदता **तात्पर्यशुद्धि**कारेणापि स्वीकार्यम्, गत्यन्तराभावात्; स्वपरनिर्वाहगतेस्सर्वविद्वत्परिगृहीतत्वाच्च। अन्यथा प्रमाणलक्षणतर्कादिव्यवहाराणां कर्कशवृत्तित्वेन विश्वापलापप्रसङ्गादिति। तेन कारणदोषाभावादेर्विना प्रामाण्यमिति भवताऽप्यङ्गीकार्यम्। तर्हि गुणान्वयव्यतिरेकौ कथमिति चेन्न; दोषनिराकरणार्थत्वात्। यथा नित्ये कारणाभावाद्दोषनिरासः, तथा कारणगुणादप्यनित्ये तन्निरास एव, अनुवृत्तस्य दोषाभावस्यैव प्रामाण्यप्रयोजकत्वदृष्टेः, अन्यथासिद्धसन्निधेश्च हेतुत्वायोगात्। अत एव न विपरिवर्तप्रसङ्गश्शक्यः। ननु स्वर्गयागादिसाध्यसाधनभावप्रमा न नित्या, जन्यत्वात्, अतस्तत्र दोषनिराकरणाय गुणापेक्षेति चेन्न; अवक्तृकत्वेनैव वक्तृदोषनिवृत्तेः, तदतिरिक्तस्य गुणनिराकरणीयस्य दोषस्यात्रासंभवात्। अवक्तृकत्वस्य च वक्ष्यमाणत्वात्। ईश्वरस्येव जीवानामपि नित्यं ज्ञानं स्वतश्च सर्वविषयं प्रमात्मकं च; तत्तत्कर्मादिदोषवशात् संकुचितविषयम्, संशयविपर्ययाद्यवस्थायोगि च भवति; सर्वत्र दोषनिवृत्तौ तु स्वाभाविकेन सर्वविषयप्रमात्वेनावतिष्ठत इत्यौपनिषदोऽयं घण्टापथः। अतोऽन्यथासिद्धान्वयव्यतिरेकाणां गुणानां न प्रामाण्यं प्रति कारणत्वम्। यथा पाकजावयविनि रसस्योत्पत्तावन्वयव्यतिरेकवतोऽप्यवयवरूपस्याकारणत्वं युष्माभिरेवोक्तमिति। भवतु वाऽत्र गुणाधीनं प्रामाण्यम्। वेदे तु न स्यात्। यथा हीश्वर-

ज्ञाने कारणाभावात्प्रामाण्यस्य न कारणगुणापेक्षा, एवं वेदेऽपि वक्तुरभावादेव वक्तृगुणानपेक्षा स्यात् । तावतैव वक्तृदोषनिवृत्तेरिन्द्रियादिगतकाचादिवच्छब्दस्वरूपगतदोषासंभवाच्च । तथाऽपि दोषाभावो गुण एवेति गुणाधीना प्रामाण्यसिद्धिरिति चेत्; किमतः? न ह्येतावता वेदस्याप्रामाण्यं स्यात् । प्रामाण्यार्थश्चेदानीं विवादः । गुणाभावोऽपि दोष एव स्यादिति नित्यप्रमाऽप्रमैव स्यात् । अहेतोरपि गुणनित्यत्वस्याश्रयनित्यतावन्नियामकत्वोपपत्तिरिति ।

अत एवाप्रामाण्यं स्वत इति पक्षोऽपि निरस्तः । अवस्तुत्वादप्रामाण्यं न हेतुसाध्यमिति स्वाभाविकत्वमिति चेन्न; अवस्तुत्वमिति किमभावत्वमभिप्रेतम्? उत तुच्छत्वम्? नाद्यः, प्रध्वंसे व्यभिचारात् । अहेतुकविनाशस्य च तर्कपादे परिहरिष्यमाणत्वात् । न द्वितीयः, असिद्धेः । न ह्यप्रामाण्यमप्रमाणे तुच्छम्, अपि तु प्रामाण्यम् । यन्निष्ठाभावप्रतियोगी यस्स तत्र तुच्छ इति तत्त्वम् । निरुपाधिनिषेधश्च तत्रैव परिहरिष्यते । वेदादुत्पन्ने च ज्ञाने निश्चयात्मके च दृश्यमाने विपर्ययत्वसाधनार्थं हि स्वतोऽप्रामाण्यं सिषाधयिषसि । नच विपर्ययत्वमवस्तु, अयथार्थप्रकाशनरूपत्वात्तस्य । नच यथावत्प्रकाशनाभावो विपर्ययत्वम्, घटादिषु तत्प्रयोगाभावात्, घटज्ञानस्य च पटं प्रति विपर्ययत्वापाताच्च । अतो विपर्ययत्वसंशयत्वयोर्भावत्वेनाहेतुसाध्यत्वं त्वयाऽपि वक्तुं न शक्यम् । ज्ञानोत्पादनशक्त्यभावस्तु तददर्शनादेव निरस्त इति तस्याहेतुसाध्यत्वेऽपि नात्र विरोधः; *तस्य ज्ञानमुपदेश इति ह्युक्तम् । किंच, संविदां स्वात्माकारे स्वाभाविकं प्रमात्वं तैरेवाभ्युपगम्यते, न हि तदधिपतिसहकार्यालम्बनादिकारणगुणेन जन्यते, तद्दोषेण वाऽपोह्यत इति ब्रुवते । अत एव ह्यपवर्गदशायां स्वात्ममात्राभासशुद्धसंवित्सन्तानानुवृत्तिरिष्यते । समनन्तरप्रत्ययगुणात्तत्सिद्धिरिति चेन्न; स्वरूपातिरिक्तगुणानभ्युपगमात् । स्वरूपस्य च कारणमात्रत्वात् । उक्तं च बाह्यैरेव—

*अनुपप्लवभूतार्थस्वभावस्य विपर्ययैः । न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥ इति ।

अतोऽप्रामाण्यं स्वत इति न तैरभ्युपगन्तुं शक्यम् । अतः पक्षान्तरासंभवात्परिशेषात्प्रामाण्यं स्वत इति सिध्यति । किंच, यस्य य आकारः प्रचुरतयोपलभ्यते स तस्य स्वभावः, यस्तु तद्विरुद्धः काचित्कः स त्वौपाधिक इति सार्वलौकिकः पक्षः । यथा मल्लिकापुष्पादेः वैशद्यादिकं स्वभावः, किंशुकसंसर्गविशेषाद्युपाधिना तु रागादिकमिति । एवमिहापि ज्ञानानां प्रचुरं प्रमात्वं स्वभावः, इतरत्त्वौपाधिकमिति युक्तम् । प्राचुर्यं च प्रमात्वस्याप्रमास्वप्यधिष्ठानाद्यंशे याथार्थ्यदर्शनेन सिद्धम् । निरधिष्ठानभ्रमाद्यसंभवस्तु तर्कपादे वक्ष्यते । अतः प्रामाण्यस्य कारणगुणानपेक्षत्वादपौरुषेये वेदे प्रमाजननाय वक्तृगुणापेक्षा नास्तीति सिद्धम् ॥

यत्तु प्रामाण्यज्ञप्तौ संवादाद्यपेक्षेति, तदसत् । तथा हि—प्रामाण्यनिश्चये संवादादित्रिकं किं सर्वत्रापेक्षितम्? उत नियमेनान्यतमत्? नाद्यः, असंभवात् । नहि प्रामाण्यनिश्चये संवादस्य सार्वभौमत्वम्, स्वात्ममात्रसाक्षिकसुखादौ तदसंभवात् । संवादज्ञानेषु संवादान्तरापेक्षयाऽनवस्थानाच्च । न च परस्परसंवादादाश्वासः, शुक्तिकारजतधारावाहिकबुद्ध्यादावप्याश्वासप्रसङ्गात् । चोदनावाक्ये च बहुशः पठ्यमाने जायमानानां बह्वीनां संविदां मिथस्संवादस्य सुलभत्वात् । कारणान्तरजनितसंवित्संवादस्तु न गन्धादौ सुखादौ च शक्यः । पुरुषान्तरधीसंवादश्चोदनास्वपि सिद्धः । एवं कारणगुणज्ञानव्याप्ते ईश्वरज्ञानस्य नित्यस्य प्रमात्वनिश्चये, कारणगुणज्ञाने तद्धेतौ कारणस्य निर्दोषताज्ञानाधीने, निर्दोषताज्ञानमात्रेणाप्रामाण्यशङ्कानवकाशेन प्रतीतेर्याथार्थ्यसिद्धौ किं गुणैर्विदितैरन्यत्कार्यम् । अत्र च कारणस्य वेदस्य वक्तृदोषासंभव उक्तः । अर्थक्रिया च न व्याप्ता, अशक्यार्थक्रियेष्वनादरपदेषु च प्रतीतेषु पुरुषप्रवृत्त्यभावेन तन्मूलार्थक्रिया-

भावात् । अर्थक्रियाज्ञानस्य वा प्रामाण्यनिश्चयार्थार्थक्रियाज्ञानान्तरापेक्षाप्रसङ्गात् । कचित्स्वतःप्रमाणत्वे सर्वत्राप्युपगन्तव्यत्वात् । अविदिताप्रामाण्येन वाऽभिमतसिद्धौ प्रकृतेऽपि चोदनाप्रामाण्यज्ञापकाभावमात्रेणाभिमतसिद्धेः । तत एव नापि द्वितीयः, कारणदोषबाधकप्रत्ययाभावमात्रेणाप्रामाण्यनिराकरणे तेष्वन्यतमस्याप्यनपेक्षणात् । ननु भावान्तराभाववादिनां भवतां दोषाभावो गुण एवेति चेन्न ; अनुष्णाशीतस्पर्शवद्दोषगुणविरहात्मकभावान्तरसद्भावात् । वेदे च दोषासंभवस्योक्तत्वात् । तथाऽप्यप्रामाण्यस्याभावः प्रामाण्यमेव, परस्परविरोधे प्रकारान्तरस्थित्यभावात्, अतोऽप्रामाण्यनिराकरणार्थमन्यापेक्षणे प्रामाण्यसिद्ध्यर्थमन्यापेक्षेत्युक्तं भवतीति चेत् ; सत्यम्, तथाऽपि कारणदोषबाधकप्रत्ययाभावातिरिक्तं संवादादिकं नापेक्षितमित्येतावता स्वतस्त्वं ब्रूमः । किंच, यथा यथावत्प्रतीयमाने सम्यग्रजते कस्यचित्कदाचिदरजतत्वशङ्का जायते, सा च कारणदोषाद्यभावपरामर्शेन निराक्रियते, तथाऽपि पूर्वप्रतिपन्नं रजतमेव स्थितं भवति ; एवमिहापि स्वतः प्रतीयमानेऽपि प्रामाण्ये कस्यचिदप्रामाण्यशङ्कायां कारणदोषाद्यभावेन तन्निरासे पूर्वप्रतीतमेव प्रामाण्यं प्रतिष्ठितं भवति । ननु कथं स्वतः प्रामाण्यप्रतीतिः ? न ह्ययं घट इति वा घटमहं जानामीति वा प्रतियद्भिः पुरुषैस्तदानीमेव ज्ञानं प्रमाणमित्यपि प्रतीयते इति चेन्न ; ज्ञानं हि स्वतः परतो वा प्रकाशमानं प्रथममेव घटादिसद्भावप्रकाशात्मकं दृश्यते, घटोऽस्तीति विषयावच्छेदमन्तरेण तत्प्रकाशासिद्धेः, पश्चादारोपितेनानारोपितेन वाऽर्थत्वेनावच्छिन्नं भासते, तत्रारोपितत्वशङ्का दोषाद्यभावेन निराक्रियत इति स्थिते, चोदनाजनितसंविदपि श्रेयस्साधनार्थप्रकाशात्मिका कारणदोषबाधकप्रत्ययाभावादनपोदितप्रामाण्याऽवतिष्ठत इति ।

ननु, यद्यपि कारणगुणाद्यनपेक्षा, यद्यपि वेदे कारणदोषो न दृष्टः, तथाऽपि दर्शितो बाधकप्रत्ययश्चित्रादिवाक्ये, अतस्सापवादं चोदनाप्रामाण्यमिति ; तत्रापीदमुत्तरं सूत्रकृतैवोच्यते—*अव्यतिरेकश्चेति । चित्रादिचोदनास्वपि न व्यतिरेकः, चित्रायाः फलसाधनत्वमात्रवचनेनानन्तर्यस्याचोदितत्वात् । दृष्टफलार्थराजसेवादिवदेव कालान्तरेऽपि फलसंभवात् । ननु साध्यसाधनभावे गृहीते कालान्तरे कर्माभावात्, पश्वादिफलस्य च तत्कालेऽपि संभवोपपत्तेरदृष्टद्वारकल्पने प्रमाणाभावात्, लोके च मर्दनादिक्रियानन्तरमेव फलदर्शनेन सामर्थ्यादनन्तरमेव फलेन भवितव्यमिति स्यादिति चेत् ; मैवम् ; लोके तावत्क्रियानन्तरमेव फलमिति न नियमः, शरप्रयोगकृष्यादिषु राजोपकारकराजद्विष्टयोश्चावान्तरव्यापारद्वारा द्राघीयसा कालेन फलाविनाभावात् । अतः कालान्तरे कर्माभावेऽपि फलस्य तदानीमेव संभवेऽपि श्रुतसाध्यसाधनभावानुगुण्याय द्वारकल्पनमविरुद्धम् । ननु शास्त्रार्थावधारणपूर्वकमनुष्ठानम्, अनुष्ठानानन्तरं फलानुपलब्धेर्द्वारक्लृप्त्या शास्त्रार्थावधारणमिति चेन्न ; परानुष्ठानानन्तरं फलानुपलम्भात्स्वयं शास्त्रार्थनिश्चयदशायां द्वारकल्पनोपपत्तेः, साक्षात्साधनत्वभ्रमेण वाऽनुष्ठाय पश्चात्फलविलम्बेन द्वारं कल्पयिष्यतीति न तावता शास्त्रप्रामाण्यस्यापायः, तत्स्वातन्त्र्यस्य दर्शितत्वात् । अव्यवहितत्वमात्रं तु स्वभ्रमसिद्धं बाध्यते । किंच, चित्रा तावन्न क्षणमात्रभाविन्येका क्रिया, किंतु साङ्गप्रधानकर्मक्षणनिचयात्मिका क्रिया । क्षणानां च क्रमेण चोदितानां न यौगपद्यम् । तस्माददृष्टद्वारमन्तरेण [यौगपद्यं न संभवति । नच क्रियायां क्षणेक्षणे पश्वादि क्रमेणोत्पाद्यते । अपि तर्हि स्वोपभोगार्थम् । स चोपभोगश्चिरकालः । अतो यावदुत्पन्नकालम् । न च क्रियासमुदायानन्तरं चावयवरचनादि दृष्टकारणमन्तरेण ।] न पश्चाद्युत्पत्तिसंभवः । न च पश्वादेरुत्पत्तिमात्रं फलमभिसन्धायोपाय उपदिश्यते, अपि तर्हि स्वोपभोगार्थम् । स चोपभोगश्चिरकालतः । अतो यावदुपभोगकालं स्थास्नुना राजप्रीत्यादिवत्क्रियातिरिक्तेन केनचिद्भवितव्यमिति शास्त्रार्थश्रवणवेलायामेवानुष्ठाताऽध्यवस्यति ।

न चात्र किंचिद्द्वारं कल्पनीयम्, द्वारस्य देवताप्रीत्यादेश्शब्देनैवोपस्थापितत्वात्। तथा च शारीरके वक्ष्यते—*फलमत उपपत्तेः; *श्रुतत्वाच्चेति। अतस्सपरिकरविधिवाक्यपरामर्श एव प्रत्यक्षमिव विसंवादं प्रशमयति। न च देवताप्रीत्यादिरपि तदानीमेव फलं जनयत्विति वाच्यम्; राजप्रीत्यादिवदेव देशकालावस्थादिनियतफलप्रदानोपपत्तेः। यदा च प्रतिबन्धरहितं सगुणं कर्म भवति, तदाऽनन्तरमेव फलं दृश्यत एव, यथा कारीर्यादौ, यथा चाभिचारादौ। नच तत्र यादृच्छिकं फलमिति वक्तुं शक्यम्, भूयसा दर्शनात्। अतस्तेनैवान्यत्र कर्मकर्तृसाधनवैगुण्यमाश्रीयते। यच्च कालान्तरे प्रतिग्रहादि कारणान्तरं दृश्यत इति; न तावन्मात्रेणादृष्टस्य फलहेतुताभङ्गः, उभयोरपि हेतुतायाः प्रमाणद्वयसिद्धत्वेनान्यतरपरित्यागायोगात्, सर्वत्र सामग्र्यामनेककारणसन्निपातात्; क्षुच्छान्तिकामो देवदत्तगृहं गच्छेदित्यत्र भोजनादिवत्। यत्र चात्यन्तोत्कटमदृष्टम्, तत्र हेत्वन्तरोपनयनमन्तरेण स्वयमेव फलति। इदं च महर्षिप्रभृतीनां वृत्तान्तेषु सुगमम्।

यत्तु यज्ञायुधिवाक्ये प्रत्यक्षविरोध इति; तदपि न, अपरेष्वर्थवादवाक्येष्विवात्रापि मुख्यार्थबाधस्यादोषत्वात्। तात्पर्यविषयभूतस्य त्वर्थस्याविरुद्धत्वात्। स्वर्गकामो हि चेतनविशेषो यजमानः, तस्य स्वर्गाख्यफलसिद्धिरिह विधिवाक्यसिद्धोऽनूद्यते, न तु निष्प्राणस्याचेतनस्य शरीरस्य। न चात्मनोऽकर्तृत्वाद्यजमानशब्दवाच्यत्वं नास्तीति वक्तुं शक्यम्। न हि वयं वदामः आत्मनोऽत्यन्ताकर्तृत्वम्, *कर्ता शास्त्रार्थवत्त्वात्, *परात्त्विति च शारीरके तत्कर्तृत्वव्यवस्थापनात्। अतो विशेष्यवाचिनि यजमानशब्दे चेतनमभिदधाने यज्ञायुधिशब्दश्शरीरविषयोऽपि चेतनाधिष्ठितपरित्यक्तसङ्घातमेवाभिप्रैति। अत एव *एष इत्यपरोक्षनिर्देशोऽपि न विरुद्धः। एवं यत्रार्थवादेषु प्रत्यक्षादिविरोधस्तत्र सर्वत्राप्यौपचारिकार्थग्रहणेन समाधानं वक्ष्यते।

यत्तु धर्मे प्रमाणमनिच्छद्भिर्देहातिरिक्त आत्माऽपि नेष्यत इति न तन्मूलं समाधानं शक्यमिति; तत्किमनिच्छामात्रेणात्मा न स्यात्? स तु प्रत्यक्षानुमानागमैरध्यवसीयमानो नापह्नोतुं शक्यः। तथा हि—प्रत्यक्षं तावत्, देहेन्द्रियमनःप्राणधीभ्योऽन्यमेव प्रत्यगात्मानं प्रकाशयति। योऽसौ प्रतिक्षेत्रमहमित्युपलभ्यते, स न तावद्देहः, प्रत्येकसमुदायविकल्पानुपपत्तेः। नह्यत्र पाणिपादादयः प्रत्येकमहमर्थः; पाणिरहम्, पादोऽहमित्यादिसामानाधिकरण्यादृष्टेः। पादे मे वेदना, शिरसि मे सुखमिति व्यतिरेकप्रत्ययदार्ढ्याच्च। नापि समुदायः, अहमर्थस्य चेतनत्वात्पाण्यादिसमुदायस्य शरीरस्य चैतन्यसमवायायोगात्। नहि प्रत्येकमसतश्चैतन्यस्य समुदाये संभवः, तन्त्वादिष्वसतो रूपादेस्तत्समुदायेऽप्यदर्शनात्। न चावयवाः प्रत्येकं चेतयन्ते, प्रत्येकमहंबुद्ध्यभावस्योक्तत्वात्; अनेकचेतनोपलम्भाभावात्; एकस्यैव सर्वावयवावच्छिन्नस्य सुखादिप्रतिसन्धानात्; परस्परपीडाद्यनभिज्ञतया परस्परोपकारभङ्गप्रसङ्गात्; एकैकावयवच्छेदे तत्तदनुभूतप्रतिसन्धानानुपपत्तेः। न ह्युपदेशादिरत्र हेतुः। नापि वासनासंक्रमः, अन्यगुणस्यान्यत्र संक्रमणायोगात्। न च संसर्गात्तज्जातीयवासनोत्पत्तिः, मातुर्वासनया गर्भेऽपि तदुत्पत्तिप्रसंगात्। न च प्रत्येकं [म] सतस्संयोगस्यैव समुदाये संभवः, अनेकाश्रितत्वानुपलम्भात्। न चैकोऽवयवी चेतयतामिति युक्तम्, व्यतिषङ्गविशेषवदवयवसङ्घातातिरिक्तावयव्यसंभवस्यारम्भणाधिकरणे वक्ष्यमाणत्वात्। तत्संभवेऽप्यवयवगतविशेषगुणमन्तरेणावयवविनि विशेषगुणोत्पत्त्ययोगात्। न चात्र चित्रन्यायः, तत्रापि प्रत्येकावयवगतानां सितरक्तपीतादीनां विशेषगुणानामेव चित्रारम्भकत्वात्। सितादीनां चित्रस्य चावान्तरवैजात्येऽपि रूपत्वेन गुणावान्तरजात्या समजातीयत्वात्। इह चावयवेषु तथाविधविशेषगुणासंभवात्। नच चूर्णहरिद्रासंसर्गजरागवत् प्रत्येकमसतोऽपि संसर्गवशादुत्पत्तिरिति वाच्यम्, चूर्णहरिद्राद्योः प्रत्येक-

मविद्यमानस्यापि संसर्गवशात्प्रत्यवयवं पाकजरागोत्पत्तेः। इह चावयवे चैतन्यासंभवस्योक्तत्वात्। अतो यदुक्तं **लोकायते** *पृथिव्यप्तेजोवायवस्तत्त्वानि, तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवदिति, तदपि प्रत्युक्तम्, किण्वादिभ्योऽपि प्रत्यवयवं परिणामविशेषवशान्मदशक्त्युत्पत्तेः। भूयस्त्वाल्पत्वादिभिर्विकारतारतम्योपपत्तेश्च। अतो योऽसौ प्रतिक्षेत्रमहमित्युपलभ्यते स एवात्मा, पाण्यादेस्तत्संघाताच्च विलक्षणः। एवं स्थिते देवोऽहम्, मनुष्योऽहम्, कृशोऽहमित्यादिदेहधर्मोपष्टम्भेन योऽसावहंप्रत्ययः, स पीतशङ्खादिनयेन निर्वाह्यः, संसर्गिणि गृह्यमाणे देहे कर्मादिदोषविशेषेण भेदकधर्माग्रहात्तद्धर्मारोपोपपत्तेः। स्वप्नादिषु चात्मानं व्याघ्रादिरूपमभिमन्यन्ते। एवमत्यन्तदवीयस्स्मर्यमाणारोपसंभवे पृथक्सिद्ध्यनर्हप्रत्यक्षीक्रियमाणप्रातिस्विकदेहारोपस्य क इवासंभवं मन्यते। गृहादिष्विव मम देह इति च व्यतिरेकप्रत्ययस्सार्वलौकिकः। न वाऽसौ 'ममात्मेतिवत् स्वरूपविषयः,' आत्मशब्दस्य तत्र स्वरूपपर्यायत्वात्; देहशब्दस्य तदभावात्। शिलापुत्रकस्य शरीरमितिवत्स्यात्, यदि गत्यन्तरं न स्यात्; इह तु देहे चैतन्यासंभवेन गत्यन्तरं दर्शितम्। एवमयमस्मदादीनामपि देहाद्व्यतिरेकेणोपलभ्यमान आत्मा निरुद्धबाह्यकरणार्थस्य प्रत्यक्षकर्तृत्वेनोपलम्भान्मनसोऽप्यन्यः। मनसा स्मरामीति च समनस्काः प्रतिपद्यन्ते। एवं धियोऽप्यतिरिक्त आत्मा, प्रत्यक्षं जनानामिति (?) धर्मधर्मितया प्रतीतेः। क्षणिकज्ञानसन्तत्यात्मत्वपक्षस्य ज्ञानस्यातिरिक्तमिथ्यात्वादेव तर्कपादे निराकरिष्यमाणत्वात्। तत एवाहमर्थात्मकस्याबाधितप्रत्यक्षादिसिद्धस्य दुरपह्नवत्वात्। तदेतत्सर्वमभिप्रेत्य सूत्रितमित्यभ्यधिष्महि पूर्वस्मिन् सूत्रे *पुरुषस्येन्द्रियाणां बुद्धिजन्मेति।

एवं प्रत्यक्षेणास्यात्मनो देहातिरेकसिद्धेरनुमानैरप्यसंभवद्विरोधैः प्रागुक्तनयेन विपक्षे बाधकवद्भिः, असंभवदुपाधिगन्धैर्व्यतिरेकस्सुसाधः। यथा शरीरं न चेतनम्, भूतत्वात्, नश्वरत्वात्, सावयवत्वात्, घटवदित्यादि। नापि मनःप्रभृतीनीन्द्रियाणि, करणत्वात्, कुठारादिवत्। नच बुद्धिः, क्रियात्वात् प्रमाणा[रूपा] दिवत्। **साङ्ख्यै**रपि संगृहीतम्—

*संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थिप्रवृत्तेश्च॥ इति।

वीतरागजन्मादर्शनाच्चात्मनो भवान्तरं सिद्धम्। तदेवं विसंवादाभावात्संवादकारणगुणादेश्चानपेक्षितत्वाच्चोदनानां स्वतः प्राप्तं प्रामाण्यमनपोदितमिति। एवमनेनैव सूत्रेण चोदनाप्रामाण्यस्य स्वल्पावशेषितो भारः। अत्र स्वोक्तस्य सकलस्यार्थस्य साम्प्रदायिकतां सिद्धान्ततां च ज्ञापयितुं स्वाचार्याभिमतिं दर्शयति ***बादरायणस्येति**। न ह्येतन्मतान्तरद्योतनार्थम्, उक्तस्य प्रामाणिकत्वात्, स्वमतस्यावचनाच्च। जैमिनेर्व्यासशिष्यत्वम्, बादरायणस्य च मीमांसाप्रधानभूतशारीरकसूत्रकृत्त्वेन न्यायसिद्धार्थेऽनुविधेयवचनत्वं च महाभारतादिप्रसिद्धम्।

*सुमन्तुं जैमिनिं बैल्वं शुकं चैव स्वमात्मजम्। प्रभुर्वसिष्ठो वरदो वैशम्पायनमेव च॥
वेदानध्यापयामास महाभारतपञ्चमान्। संहितास्तैः पृथक्त्वेन भारतस्य प्रकीर्तिताः॥

इत्यादिना जैमिनेर्व्यासशिष्यत्वं प्रसिद्धम्।

*द्वीपे बदरिकामिश्रे बादरायणमच्युतम्। पराशरात्सत्यवती पुत्रं लेभे परन्तपम्॥

इति बादरायणत्वं सहेतुकमुक्तम्। बादरायणस्य शारीरकशास्त्रकृत्त्वं सर्वसम्मतम्। तदेवं जैमिनिबादरायणयोरेकाशयत्वस्योपक्रमादिसिद्धत्वाद्बादरायणमतविरुद्धैरर्थैर्जैमिनिसूत्राण्युपवर्णयन्तः प्रत्युक्ताः। उभयाभिप्रायवेदी भगवान् **बोधायनो** विंशतिलक्षणीं मीमांसां परस्परसंगमार्थं विस्तरेण व्याख्यादिति वृद्धा विदामासुः। तथा च स्वयमेवाह—*संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरिति। यत्पुनराहुः—कार्यव्युत्पत्तिस्तु पूर्वाधिकरणे, इह तु

मानान्तरवेद्यार्थताप्रत्युक्तितो वेदस्स्वार्थे प्रमाणमित्युक्तम्। अतो वेदो वेदार्थेऽपूर्वे प्रमाणं नान्यदिति; तानिह भौत-कल्पान् दूषयितुमप्यपत्रपामहे, चोदनासूत्रस्यान्यपरत्वस्थापनात्, अपूर्वाधिकरणे च पूर्वव्युत्पत्तेर्निराकरिष्यमाणत्वात्। अत एव प्रभाकरशिरश्श्रूङ्गायमाणे परहितापूर्वे वेदस्य परानपेक्षप्रामाण्यवर्णनस्याशक्यत्वादिति।

अनुभूतित्वमात्रं च प्रामाण्यं वदतामिह। व्यर्थं वेदप्रमाणे च स्वतःप्रामाण्यसाधनम्॥
विपर्ययत्वशङ्कायामनुभूतित्वसाधने। अनुस्मृतित्वाद्बुद्ध्या किं वाक्यजा धीर्निरस्यते॥
सर्वानुभूतिर्मानं चेत्तत्तुल्यविषया मतिः। यथार्थैवं भवेत्सर्वा सा किमर्थं निरस्यते॥
स्वतो विशिष्टधीप्राप्ता दोषाद्वेदाग्रहो यदि। कथं तत्रोपकुर्वीत त्वदुक्तं मानलक्षणम्॥
इह चानुपलब्धेऽर्थे प्रामाण्यं यदसूत्रयत्। तत्रापूर्वैकविषयमीश्वरादौ समत्वतः॥
अतीन्द्रियेऽर्थे प्रामाण्यमनुमित्यैव चिन्त्यते। शारीरके तु सिद्धार्थविशेषे मानता गिराम्॥ ५॥

॥ इति वेदप्रामाण्याधिकरणम्॥ ५॥

---

॥ अथ शब्दनित्यताधिकरणम्॥ ६॥

### 6. सू०—**कर्मैके तत्र दर्शनात्**॥ १. १. ६.॥ (पूर्वपक्षसूत्रम् १)

* औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध इति शब्दार्थसंबन्धस्यानादित्वमुपक्षिप्तम्। तत्र च न कश्चिद्धेतुरुक्तः। तुशब्दोऽप्यवधारणं वैलक्षण्यं पूर्वपक्षव्यवच्छेदं च द्योतयेत्, न तु हेतुम्। अनपेक्षत्वादिति तु हेतुस्स्वतः-प्रामाण्यार्थः। न चानेकं तत्र साध्यम्, अधिकरणभेदप्रसङ्गात्। न च कथंचित्तदर्थविचारानुप्रवेशः, वेदाधिकरणादेरप्येकीकरणप्रसङ्गात्। अत एतदधिकरणसिद्धस्य तत्रानुवादमात्रमेव।

तदिहैवमुत्थानम्। अकारणत्वेन हि वेदस्य स्वतःप्रामाण्यापवादशङ्कानिरासः। अकारणत्वं चासंभावितम्, शब्दार्थसंबन्धस्य साङ्केतिकत्वेन साङ्केतिकशब्दसमुदायस्य वेदस्य सङ्केतात् पूर्वं सद्भावायोगात्। तदेतदभिप्रेत्याह—* **कर्मैके तत्र दर्शनादिति**। एके—वादिनः। शब्दस्य अर्थेन संबन्धम्, शब्दस्येति निर्दिष्टं वाचकत्वमेव वा। कर्म—कार्यम्, साङ्केतिकम्। आहुः। तत्र दर्शनात्—तत्र सङ्केते सति, वाचकत्वदर्शनात्। यदि गवादिशब्दानां सास्नादिमत्पिण्डादिभिस्संबन्धस्स्वाभाविकस्स्यात्, तदा तेषामेव शब्दानां वस्त्वन्तरेषु सङ्केताद्वाचकत्वं न पश्येम। न हि दाहकस्वभावो वह्निः पुरुषेच्छया सेचनक्रियायां विनियुज्येत। न च रूपग्रहणे शक्तं चक्षुः शब्दग्रहणसाधनतया सङ्केत्येत, तथा सत्यन्धबधिराद्यभावप्रसङ्गात्, तत्तच्चिकित्सानैरपेक्ष्यप्रसङ्गात्, अयत्नतः सर्वेषां सार्वज्ञ्यप्रसङ्गाच्च। अतोऽन्यबोधकस्वभावश्चेच्छब्दो न तदन्यबोधकतया कल्पयितुं शक्यः। अतो न शब्दानां स्वतः केनाप्यर्थेन संबन्धः। तथाऽपि सङ्केत एव तत्रतत्रार्थे धियमादधाति। न हि दृष्टेऽनुपपन्नं नाम। आर्यम्लेच्छादिभाषादिषु चैकस्यैव शब्दस्यानियतिर्दृश्यते। किंच, यदि शब्दार्थयोस्स्वाभाविकस्संबन्धः, तदा व्युत्पत्तेः पूर्वमपि शब्दोऽर्थं गमयेत्। संबन्धज्ञानाभावात्सत्यपि संबन्धे धूमादिवन्न गमयिष्यतीति चेत्; तत्र कोऽसौ संबन्धः? न तावत्कार्यकारणभावादिकम्, असंभवात्। नाप्युपश्लेषलक्षणः, अदर्शनात्। न च तुल्यवद्व्यपदेशेन तदवगमः, प्रत्यक्षतो वर्णाद्यात्मना सास्नादिमदात्मना च भेदावगमेन तदसंभवात्। यदि च शब्दार्थयोरुपश्लेष इष्यते, क्षुरमोदकशब्दोच्चारणे मुखस्य

पाटनपूरणे स्याताम् । नापि स्फोटाख्यश्शब्दो वर्णाद्यात्मना च विवर्तत इति तादात्म्यं संबन्धः, वर्णातिरिक्ते त्वदभिमते शब्दे प्रमाणाभावात् । न तावद्गौरिति शब्दोच्चारणे गकारौकारविसर्जनीयातिरिक्तं कंचन शब्दं शृणुमः । शब्दादर्थं प्रतीम इत्येकवचननिर्देशादेकं पदमिति कण्ठोक्तेरनेकेभ्यो गकारादिभ्योऽधिकं शब्दमुपलब्धवन्तो व्यवहर्तार इति चेत्; तन्न ; परिषदा संभावितोऽहम्, एकेयं परिषदित्यादिष्वपि पुरुषाद्यतिरिक्तपरिषदादितत्त्वपरिकल्पनप्रसङ्गात् । योग्यानुपलब्ध्या तद्बाध इति चेत्तुल्यम् । अयोग्यस्तर्ह्यसावस्त्विति चेत्, तर्हि परिषदादितत्त्वमपि तथाविधं कल्पय । कथं वा अयोग्यमुपलब्धम् ? प्रत्येकसमुदाययौगपद्यादिविकल्पानुपपत्त्या वर्णानां वाचकत्वासिद्धौ गत्यभावात्तदतिरिक्तः कश्चिदर्थप्रत्ययहेतुः कल्प्य इति चेत् ; तत्रार्थं प्रत्याययिष्यन् किमिति वर्णानुच्चारयसि ? अर्थप्रत्यायकस्फोटाभिव्यक्त्यर्थमिति चेत् ; स्फोटमभिव्यञ्जयन्तो वर्णाः किमेकैकशः समुदायतो वा, क्रमेण युगपद्वेति परावृत्य पश्य । अतो यादृशैर्वर्णैः स्फोटस्ते अभिव्यङ्क्तुमिष्टः, तादृशैरर्थ एवाभिव्यज्यताम्, किमन्तर्गडुना स्फोटेन ? तदेतन्मन्दाकिनीमनादृत्य मरीचिकानुधावनम्, यत्सकललोकप्रत्यक्षां वर्णात्मिकां वाचं विहाय अत्यन्तापरिदृष्टस्यानुपयुक्तस्यार्थतुल्ययोगक्षेमस्फोटाख्यशब्दस्य कल्पनम् । यद्यपि वैखर्यतिरिक्तमवस्थात्रयमाप्तग्रन्थेष्वभ्यधायि, तथाऽपि वाचकत्वे तन्नोपयुज्यते । भावनादिभेदे तदुपयोगात् । यत्तु * स्फोटस्त्वं वर्ण[समुदाय]सङ्घस्थः इति महाभारतवचनम्, तेनापि न प्रत्यक्षविरुद्धं प्रत्यस्तमितसमस्तवाचकविकल्पोपप्लवस्त्वदभिमतस्स्फोटोऽभिहितः, अपि तर्हि वर्णाश्रयार्थस्फुटीकरणशक्तिः । अन्यथा वर्णाध्यासाधिष्ठानभूतो निर्विशेषस्स्फोट इत्युक्ते कथं देवता तमात्मानमभिमन्येत ? वर्णानां वाचकत्वशक्तिः त्वदधीनेति तु समञ्जसम् । अत एकेन वक्त्रा क्रमनियमेन समुच्चार्यमाणा वर्णा एव पदम् । न च तद्वा तदर्थो वा क्वचिदध्यस्तः, अबाधितत्वात् । न च तयोस्सङ्केतमन्तरेण संबन्धं पश्यामः । न च बोध्यबोधकभाव एव संबन्धः, तन्निमित्तभूतसंबन्धप्रश्ने स एवेत्युक्तावात्माश्रयप्रसङ्गात् । प्रत्यक्षानुमानयोश्च बोधकयोर्बोधकत्वातिरिक्तस्य संबन्धस्य दर्शनात् । अतः परिशेषात् सङ्केत एव देवदत्तादिशब्देषु बोधनौपाधिकतया दृष्टोऽन्यत्रापि स्वीकर्तव्य इति । अत एव तद्ग्रहणात्पूर्वमर्थप्रत्यायकत्वासंभवादस्य शब्दस्यायमर्थ इति व्युत्पाद्य देवदत्त इति सङ्केतमेव पुरस्कुर्वन्ति । प्रयोगश्च भवति—विप्रतिपन्नाश्शब्दास्साङ्केतिकाः, वाचकत्वात्, डित्थादिशब्दवदित्यादिः । यद्वा तत्र दर्शनादित्यस्यायमर्थः, **तत्र**—कर्मत्वे, **दर्शनात्**—श्रुतेः । तथा ह्युत्पन्नस्यार्थस्य पश्चान्नामकर्म समामनन्ति । यथा—* अनपहतपाप्मा वा अहमस्म्यनाहितनामा नाम मे धेहीति । अतः पदपदार्थसंबन्धः पौरुषेयः ॥ ६ ॥

इतश्च— 7. सू०—**अस्थानात्** ॥ १. १. ७. ॥ (पू. २)

* तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियतेति रूपाणामिव नाम्नामपि, अस्थानं—प्रलयः, श्रूयते । न ह्यत्र वर्णस्वरूपप्रलय उच्यते, नामशब्दस्य वाचकाकारे रूढत्वात् । तदाकारकशब्दस्य च प्रलयो वाचकत्वप्रलय एव । न वात्र वाच्यप्रलयाद्वाचकप्रलयोक्तिः, घटादिषु विनष्टेषु तन्नामप्रध्वंसादर्शनात् । विनष्टेषु नरेषु नामशेषत्वप्रसिद्धेः । अविनष्टे च पुरुषे नामान्तरकरणेन पूर्वस्य नामधेयस्य गतत्वव्यपदेशात् । अतो नाम्नः प्रलयस्तस्य पूर्वाभिधेयपरित्याग एव ॥ ७ ॥

इतश्च—8. सू०—**करोतिशब्दात्** ॥ १. १. ८. ॥ (पू. ३)

* नामानि कृत्वेति करोतिशब्दश्च दृश्यते । न चैष प्राक्तनस्य नाम्नः प्रयोगमात्रे घटादिषु दृष्टः ; अपि

तु देवदत्तादीनां सङ्केतकरणे । तथोपबृंहणेऽपि—

*नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥

इति रूपनाम्नोरविशेषेण करोतिशब्दः प्रयुक्तः । उपबृंहणान्तरेऽपि * निर्मम इत्यकरोदित्यर्थकम् । ततश्च यथा रूपेषु जगत्कर्तुः स्वातन्त्र्यं तथा नामस्वपीति सकृदुच्चरितात्करोतिशब्दान्निश्चिनुमहे । अपिच *सर्वाणि रूपाणि विचित्य धीरः, नामानि कृत्वेति क्त्वाप्रत्ययबलेन समानकर्तृकत्वं पौर्वापर्यं च ज्ञायते । तस्मादौत्पत्तिकस्संबन्ध इत्ययुक्तम् ॥ ८ ॥

इतश्च—9. सू०—**सत्त्वान्तरे च यौगपद्यात्** ॥ १. १. ९. ॥ (पू. ४)

**सत्त्वम्**—जन्तुः । गौरित्येवैकश्शब्दः सास्नादिमद्द्रव्ये ततोऽन्यस्मिंश्च वागादौ युगपद्बुद्धिं जनयति । यद्यपि पदान्तरसमभिव्याहारे प्रतिनियतविषया धीर्जायते, तथाऽप्येकपदोच्चारणदशायां तावन्मात्रश्रवणदशायां वा न विशेषो निर्धार्यते, तत्कस्य हेतोः ? अर्थस्य संबन्धनियमस्तस्यास्तीति । नन्वेकं पदं शृण्वन्ननेकार्थान्न प्रतिपद्यत एवेति चेत् ; तत्किं वर्णक्रमनिर्देशवन्मन्यते, अनेकपदश्रवणे वाऽन्यतोऽर्थमवगच्छति ? स्मरत्यर्थमिति चेत् ; किमहेतुकं स्मरति ? अतोऽभिधत्ते वा स्मारयति वाऽनेकानेवार्थानेकपदम् । सङ्केतोपाधेश्च नियमो दृष्टः । तस्मात्सर्वत्र भवितव्यं सङ्केतेन । अथवा सकृदुच्चरितश्शब्दः पदान्तरसमभिव्याहारपरामर्शी युगपदनेकार्थमभिधत्ते ; यथा—*शर्करां पादजिह्वाभ्या-मक्षिरोगी विवर्जयेदित्यादौ । कथमन्यथा श्लेषकाव्यं कवयितारः परिष्कुर्युः । यद्वा, यदा गां दोग्धीति कश्चित्प्रयुङ्क्ते तदैवान्यो गां कृषतीति, तदयमेक एव गोशब्दो युगपत्परस्परं विरुद्धेष्वर्थेषु प्रयुज्यते । यद्येकेन सत्त्वेनास्य प्रबोधकत्व-लक्षणस्संबन्धस्स्वाभाविकस्स्यान्न तद्विरुद्धे प्रयुज्येत, अस्वाभाविकत्वे तु एकत्र बहुषु वा यत्रयत्र सङ्केतस्तावत्सु प्रयोगो युक्तः । एकमेव च नामानेकेषु सङ्केत्यमानमन्यदपि पश्यामः । आर्यम्लेच्छभाषासु च नियमम् ॥ ९ ॥

इतश्च—**10.** सू०—**प्रकृतिविकृत्योश्च** ॥ १. १. १०. ॥ (पू. ५)

दधिशब्दस्य इकारो दध्यत्रेति विक्रियत इत्यन्वशिष्यत् । ततो दधिशब्दस्य वर्णविकारेणान्यथाकरणं दृष्टम् । अन्यथाकरणं च नाम्नः पौरुषेयत्वम् । नचात्र गावीगौण्यादिवद्विकृतिरवाचिकेति वाच्यम्, प्रकृतिविकृत्योर्द्वयो-रपि यौगपद्यात् । अभियुक्ता एव हि केचिदत्र दधीति प्रकृतिं प्रयुञ्जते, तत्रैवार्थे दध्यत्रेत्यपरे तदानीमेव विकृतिम् । तदत्र संस्कृतयोनीनां प्राकृतादिभाषाणामिव दधिशब्दप्रकृतीनां दध्यादिशब्दानामनादित्वं दुर्वचम् ॥ १० ॥

इतश्च—**11.** ॥ सू—**वृद्धिश्च कर्तृभूम्नाऽस्य** ॥ १. १. ११. ॥ (पू. ६)

न केवलं वर्णान्तरभावलक्षणं वैकृतम्, अपि तु [प्रकृतितयाऽभिमतस्य] अस्य—विकृतिशब्दस्य, कर्तृभूम्ना, वृद्धिलक्षणोऽपि विकारो दृश्यते । बहुभिः, प्रबलेन वा केनचिदुच्चार्यमाणः प्रकृतित्वेनाभिमतश्शब्दः उपचिताकार उप-लब्धः । ततश्च व्यापारेणोपचितो यः, सोऽनुपचिताद्भिन्न इति ततो धीर्न शक्तिहेतुका, गाव्यादिवत्सादृश्यमात्रेणाप्युप-पत्तेः । तत्तन्न्यायेन चात्रापि न स्वाभाविकस्संबन्ध इति ॥ ११ ॥

षण्णां क्रमात् षड्भिः परिहारमाह—

**12.** सू०—**समं तु तत्र दर्शनम्** ॥ १. १. १२. ॥ (सिद्धान्तसूत्रम् १)

तुशब्दः परिहारपरः पक्षस्य व्यावृत्त्यर्थः । तत्र—सङ्केते । यद्यथाभिमतार्थवाचकत्वदर्शनम्, तत् कस्मिंश्चिदर्थे स्वाभाविकसंबन्धसदसद्भावयोस्समम् । न हि सहकारिविशेषादापद्यमानमर्थक्रियान्तरं सहकारिनिरपेक्षामन्यत्र शब्दशक्तिं प्रतिरुणद्धि । यथा रेखाविशेषस्य सङ्केताद्वर्णविशेषबोधकत्वेऽपि स्वतः परज्ञापनशक्तिर्नापैति, तथेहापि । तेन न दहनदृष्टान्तः । प्रकृते च यथोपलम्भं स्वभावसहकार्यादिनियमात् । अत एव आर्यम्लेच्छादिभाषासु वाचा नियतिरपि निर्व्यूढा । यत्पुनरुक्तम्, शब्दार्थसंबन्धस्य स्वाभाविकत्वे व्युत्पत्तेः पूर्वमपि बोधकत्वप्रसङ्ग इति ; तदसत्, संबन्धज्ञानस्य सहकारित्वात् । अन्यथा साङ्केतिकत्वेऽपि क्लृप्तसङ्केतश्शब्दस्सङ्केतज्ञानात्पूर्वमेवार्थं गमयेत् । अन्वयव्यतिरेकाभ्यां तज्ज्ञानस्य सहकारित्वं निश्चितमिति वचनं तुल्यम् । कोऽत्र संबन्धः, कथं चात्र तज्ज्ञानस्यान्वयव्यतिरेकाविति चेत् ; बोध्यबोधकभाव एव संबन्धः, तज्ज्ञानस्य सहकारित्वं व्युत्पत्तिपर्यालोचनया सिद्धम् । सा व्युत्पत्तिः कार्यार्थे सिद्धार्थे वा ? प्रथमं तावज्ज्ञायमानशब्दस्यार्थविशेषबोधकत्वज्ञानात्पूर्वमर्थविशेषप्रतीतिर्न जायते, बोधकत्वग्रहणात् पश्चादुपदेशादिना वा अयं शब्दोऽस्यार्थस्य बोधक इत्येवंरूपेण तज्ज्ञानसमनन्तरं व्युत्पन्नस्य परप्रयुक्तात्तस्मादेव शब्दात्तदर्थप्रतीतिर्जायते ; इन्द्रियलिङ्गयोरिव संबन्धान्तरं च किंचिन्न दृश्यते ; अतो बोधकत्वग्रहणमेव अर्थज्ञानौपयिकमन्वयव्यतिरेकावसितम् । साङ्केतिकेष्वसाङ्केतिकेषु वा शब्देषु अस्य शब्दस्यायमर्थ इति व्युत्पादयद्भिरपि न सङ्केतः क्रियते, ज्ञाप्यते वा ; अपि त्वयं शब्दोऽस्य बोधक इति व्यपदिश्यते । अन्यथा स्वेच्छया सङ्केतकरणे सर्वस्य शब्दस्य सर्वत्र प्रयोगप्रसङ्गात् । तस्य च लोकैर्निवार्यमाणत्वात् । बहूनां च यथायथं सङ्केते लोकस्य परस्परवार्तानभिज्ञत्वप्रसङ्गाच्च । तथा, अयं गोशब्दवाच्य इति वदन्तः पूर्वममुकेन सङ्केतित इत्यपि न वदन्ति ; तथाविधस्य कस्यचित्सङ्केतयितृत्वाप्रसिद्धेः, स्वयं चापरिज्ञानात् । साङ्केतिकेष्वपि भाषाशब्देषु वृद्धप्रयोगमात्रमेव व्युत्पाद्यम् । न तु सन्नपि सङ्केतः, तज्ज्ञानमन्तरेणाऽपि उत्तरोत्तरेषां व्युत्पित्सूनामर्थप्रतीतिदर्शनादविरोधाच्च । तदेवमादिमां द्वितीयां च व्युत्पत्तिं पर्यालोचयद्भिर्बोधकत्वग्रहणमेव शब्दस्य स्वार्थप्रत्यायने सहकारीति निश्चीयत इति ततः पूर्वमर्थानवगतिः परस्ताच्चावगतिरुपपद्यते । यत्पुनस्सर्वशब्दानां साङ्केतिकत्वसाधनमनुमानम्, तत्किं प्रत्युच्चारणं सङ्केतं साधयति ? उत प्रतिमर्त्यम् ? यद्वा साधारणेनादौ कदाचित्केनचित्पुरुषेण सङ्केतः कृत इति ? नाद्यः, अशक्यत्वात् ; सङ्केतकरणार्थशब्दप्रयोगस्यापि सङ्केतापेक्षत्वात् । अत एव न द्वितीयः, भाषाणां बहुपुरुषसाधारणत्वभङ्गप्रसङ्गाच्च । नापि तृतीयः, जगदादिसद्भावे प्रत्यक्षानुमानयोरप्रवृत्तेः । शास्त्रतस्तत्सिद्धौ तत एव शब्दार्थसंबन्धानादित्वस्यापि सिद्धेः । नन्वेवं सति म्लेच्छादिभाषासु का वार्ता ? न हि तत्रापि प्रत्युच्चारणप्रतिमर्त्यादिसंभवः, अतस्सर्वभाषानादित्वं सर्वसाङ्केतिकत्वं वा प्रसक्तमिति चेन्न ; सर्वभाषानादित्वेऽस्मदिष्टस्य साधुभावात्, परेष्टस्य वा पौरुषेयबुद्ध्यादिप्रामाण्यस्यासिद्धेः । पैशाचमागधादिभाषा भवत्वनादिरादिमती वा, तन्मयस्तु बौद्धार्हताद्युपदेशग्रन्थस्तत्तत्कर्तृकृत इति तैरेवोक्तं प्रसिद्धं च । नचेह तथेति वक्ष्यते ।

वस्तुतस्तु विशेषं ब्रूमः । संस्कृतयोनितयैव तावत्प्राकृतादीन्यभियुक्तैरनुशिष्यन्ते । न चैवं संस्कृतस्य काचिद्योनिर्दृश्यते । प्रादेशिकानि पामरपरिगृहीतानि च तानि । इदं तु सार्वत्रिकं सत्परिगृहीतं च । अपभ्रंश इत्येव तेषां व्यवहारः, अस्य तु संस्कृतमित्येव । तदा[था]हुः—*शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितमिति । नचात्र कश्चित्सङ्केतयिता स्मर्यते । तेषु तु सन्नपि न स्मर्यताम्, अवान्तरापभ्रंशपारम्पर्येण स्वरूपनिष्पत्तिरुपपद्यते । इह तु यदि सङ्केतयिता स्यात्, तन्मयस्य वेदसन्दर्भस्यापि स एवान्यो वा कश्चित्कर्ताऽवश्यंभावी, स च स्मर्तव्यत्वे सत्यस्मरणान्नास्तीति वक्ष्यामः ।

एवमनादौ संस्कृते वर्तमाने अन्यासामुदयविलयभाजां भाषाणां संभवः। न चैवमिहापि तत्तत्पदविशेषाणामुदयनविलयन-सद्भावात्कालक्रमेण वेदसन्दर्भस्यापि विप्लव इति शङ्कनीयम्; सर्वतस्संप्रदायाविच्छेदात्, व्याकरणाद्यङ्गोपाङ्गैस्सुरक्षितत्वाच्च। अन्तिमयुगवैयाकुली च न वेदमत्यन्तायास्कन्दति। विशिष्टदेशवासिभिश्च महर्षिभिर्युगान्तरे पुनर्यथावद्वेदः प्रवर्त्यत इति न कश्चिद्दोषः। अतोऽन्यत्र सङ्केतेन बोधकत्वदर्शनेऽपि वृद्धव्यवहारपारम्पर्यव्युत्पन्नस्य सङ्केतयितृपुरुषसंभावनारहितस्य संस्कृतशब्दराशेर्न साङ्केतिकत्वमुत्प्रेक्षणीयमिति। यच्च नाम्नः कर्तृदर्शनमुदाहारि; तदपि तत्तन्नामादिमत्त्वानादि-मत्त्वयोस्समम्, न त्वादिमत्त्वैकान्तम्। यथाभूतसंस्थानविशिष्टस्य पूर्वस्मिन् कल्पे यन्नाम, उत्तरस्मिन्नपि कल्पे तथाभूत-संस्थानविशिष्टस्य तदेव नाम क्रियते। तत्र यद्यपि संस्थानादिनिबन्धनास्तेते शब्दाः, तथाऽपि शोधन (?) संस्कार [रेऽपि] विशेषलाभात् * अनपहतपाप्मा वा अहमस्म्यनाहितनामा नाम मे धेहीत्याम्नातम्। स च संस्कारः पूर्वपूर्वरुद्रादिप्रयुक्तेनैव नाम्ना निर्वर्त्यत इति नापूर्वनामकरणम्। स्मृतिरपि वेदशब्देभ्य एव नामरूपव्याकरणं व्याचष्टे—

* सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥

इति। वाचकानुसन्धानपूर्विका च वाच्यसृष्टिराम्नायते—* स भूरिति व्याहरत्, स भूमिमसृजत—इति। अतश्श्रौतं नामकरणदर्शनमपि तत्तन्नाम्नां प्रवाहानादितयाऽप्युपपद्यमानं नैकान्ततस्साङ्केतिकतां स्थापयितुमलम्॥ १२॥

यत्तु नाम्नः प्रलयः श्रूयत इति, तत्राह—

**13. सू०—सतः परमदर्शनं विषयानागमात्॥ १. १. १३.॥** (सि. २)

प्रलयदशायामपि तज्जातीयवाचकतयेश्वरबुद्धौ सत एव नाम्नः केवलमदर्शनम्, वाच्यस्य तदानीमनारम्भात्। यदा तु कल्पान्तरे पुनस्तज्जातीयं वाच्यमारभ्यते, तदा तस्यैव नाम्नः पुनर्दर्शनं स्यात्; यथा कुण्डले विलीने कुण्डल-नाम न दृश्यते, पुनः कुण्डले कृते तदेव नामागच्छति, एवमिहापि। यत्तु घटध्वंस इति, तत्किं घटनाम तदानीं तस्मिन् द्रव्ये वर्तते? निमित्तव्यावृत्त्या तदपि व्यावृत्तमिति चेत्; किं तावताऽतिरिक्तमधीमहे? रूपविभागे हि नामविभाग-स्तदभावे तत्र तन्न प्रयुज्यत इत्यभिप्रेत्य * तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत इत्याम्नातम्॥ १३॥

करोतिशब्दं निर्वहति—**14. सू०—प्रयोगस्य परम्॥ १. १. १४.॥** (सि. ३)

केवलं प्रयोगस्य वाचकोऽयं * नामानि कृत्वेत्यादौ करोतिशब्दः, वेदशब्देभ्यो नामानि चकारेत्युप-बृंहणात्। वाचकप्रतिसन्धानपूर्वकवाच्यसृष्ट्याम्नानस्योदाहृतत्वाच्च। नचामुख्यः स्यात्, स्वतन्त्रस्य यथापूर्वकरणेऽपि कर्तृत्ववाचोयुक्तेरनपायात्॥ १४॥

यत्त्वनेकार्थशब्दानां नानार्थप्रत्यायनादियौगपद्यम्, तत्राह—

**15. सू०—आदित्यवद्यौगपद्यम्॥ १. १. १५.॥** (सि. ४)

यथैकस्यादित्यस्य प्रभारूपशक्त्या युगपदेव तत्संबन्धिनानार्थप्रकाशनम्, तथैकस्यैव गोशब्दस्य संबन्धसा-दृश्यपुरस्काराभावेनानन्यथासिद्धप्रयोगवशादनेकेष्वर्थेषु शक्तिभेदसिद्धेर्यथाविवक्षं तत्तदर्थेषु बोधजननं न विरुद्धम्। न ह्येकस्य युगपदनेकसंबन्धमात्रं विरुद्धम्, सर्वत्र दर्शनात्। न चानेकसंबन्धनियमः, आर्द्रेन्धनदहनादिभिरनेकैर्धूमादे-स्संबन्धनियमोपलम्भात्। अत एव नाप्यनेकबोधनम्, धूमादेरादित्यचक्षुरादेश्च युगपदनेकबोधकत्वप्रसिद्धेः। तद्वदेव

विरुद्धानेकबोधकत्वमपि न विरुद्धम् । ननु सामग्रीभेदात्तत्र स्यात्, अत्र तु न तदिति चेन्न ; अत्रापि तत्तद्विवर्ति-पदान्तरसमभिव्याहारादिसामग्रीविशेषमुपजीव्य तत्तदर्थविशेषबोधनात् । यदा त्वेकं पदं श्रूयते, तदाऽनेकार्थे शब्दे विवक्षितविशेषानिश्चयात्सन्देग्धि पुरुषः । नहि वह्निमुपाददाने कस्मिंश्चित्पार्श्वस्थः प्रथमं पाकार्थं प्रकाशार्थं मशकार्थं वेति संदेग्धीति तावता वह्नेस्स्वाभाविक्यस्तास्ताश्शक्तयः पराधीनास्स्युः । विष्फारिताक्षाश्च युगपदेकयैव सामग्र्या प्रदेशभेदनियतान् घटतदभावादीन् विरुद्धान् जानन्ति । नच तत्र सामग्रीभेदः, तदसिद्धेः ; युगपदनेकेषां ज्ञानानामुत्पत्तेश्च । संबन्धग्रहणाग्रहणाभ्यां च पुरुषभेदेन नियतानेकबोधनमनुमानेऽपि दृष्टम् । अतो न साङ्केतिकत्वनिबन्धनमिदं यौगपद्यम् ॥ १५ ॥

यत्तु विकृतिपदानामनादित्वं नोपपन्नमिति तत्राह—

**16.** सू०—**शब्दा [वर्णा] न्तरमविकारः** ॥ १. १. १६. ॥ (सि—५)

यो विकारत्वेन निर्दिष्टो दध्यादिशब्दः, स तु दधिशब्दाच्छब्दान्तरम् । एतदुक्तं भवति । दधिशब्दो दध्यशब्दश्चो [दधिदध्यशब्दावु] भावप्यनादी, तत्प्रयोगश्च प्रतिनियतविषयः, ततश्चानन्तानां प्रतिपदोपादानस्य दुश्शकत्वात्सौकर्यायौत्सर्गिकापवादकल्पनया प्रकृतिविकृतिवदनुशिष्टम् । एवं पदान्तरेष्वपि । अत एव व्याकरणान्तरेण प्रकृतिविकृतिवैपरीत्यमपि न शङ्कनीयम् । सौकर्योपायभेदेन हि नानाव्याकरणोत्थानम् । नच सादृश्यात्प्रकृतिविकृतिभावश्शङ्क्यः, वैपरीत्यस्यापि प्रसङ्गात् । सदृशेष्वपि दधिकुन्दादिषु तदभावात्, असदृशेष्वपि गोमयवृश्चिकादिषु तत्सद्भावात् ॥ १६ ॥

यत्तु वृद्धिरूपविकारदर्शनम् , तत्राह—

**17.** सू०—**नादवृद्धि[ः] परा** ॥ १. १. १७. ॥ (सि. ६)

अयमभिप्रायः—न ह्यत्र वाचकस्वरूपान्यथाभावलक्षणा वृत्तिः प्रत्यक्षेणोपलभ्यते, अपि तु रसादिष्विव तीव्रत्वादिलक्षणा ; सा च नादशब्दाभिधेया वर्णेष्वेव सामग्रीविशेषाद्भवति । न च तावता बोधकाकारे कश्चिद्विशेषः, मन्दतीव्रादिभावानादरेण वर्णविशेषक्रमनियमादिभिरेव वाचकाकारव्यवस्थापनादिति ॥ १७ ॥

तदेवं षण्णां षड्भिरुत्तरं दत्तम् । अथ वाचकापौरुषेयत्वे हेतव उपन्यस्यन्ते—

**18.** सू०—**नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्** ॥ १. १. १८. ॥ (सि. ७)

वाचकश्शब्दो नित्यस्स्यात् , न तु साङ्केतिकः । कुतः ? दर्शनस्य परार्थत्वात् । दर्शनम्—प्रयोगः । वाचकप्रयोगस्य परप्रत्ययार्थत्वादित्यर्थः । एतदुक्तं भवति । पुरुषो हि समयं कुर्वन्नस्मिन्नर्थेऽयं शब्दो मया सङ्केतित इति परं प्रत्याययेत् । तत्र सङ्केत्यमानशब्दव्यतिरिक्तैस्सर्वैश्शब्दैः प्रागेव सङ्केतितार्थैर्भवितव्यम्, सङ्केत्यानामिव तेषामपि बोधकत्वात् ; एवं तद्व्युत्पादनार्थशब्दान्तरेष्वपीत्यनवस्था । अतो न कदाचिदपि परप्रत्ययो जायेत । अत्र [तो] वृद्धव्यवहारे व्युत्पन्नशब्दान्तरं पुरुषं प्रति कश्चिच्छब्दस्सङ्केत्येत ; कथं तत्र विवदेत ? अविरोधात् । नच वृद्धव्यवहारे सङ्केतग्रहः, बोधकत्वग्रहणमात्ररूपत्वादित्युक्तम् । एवं पूर्ववृद्धानामपीति वाचको न साङ्केतिकः ॥ १८ ॥

भवतु केषांचिच्छब्दानामनादिव्यवहारः, केषांचित्सङ्केतस्संभवति, तदुभयसंवलनं च वेदे शङ्कितुं शक्यम् ; तत्राह—

**19.** सू०—**सर्वत्र यौगपद्यात्** ॥ १. १. १९. ॥ (सि. ८)

सर्वत्र—देशे काले च, सर्वेषां शब्दानाम् । न ह्येतस्मात् कालात्परमयं शब्दः प्रवृत्त इति वयमनुस्मरामः । न च केनचित्सङ्केतितस्यैकस्य शब्दस्य सर्वदेशवर्तिभिर्ग्रहणमुपपद्यते, येन सर्वत्र प्रयुज्येत ॥ १९ ॥

अथ स्यात्, साङ्केतिकेषु शब्देषु लिङ्गवचनविभक्तिकृत्तद्धितसमासादयोऽनुशिष्यन्ते प्रयुज्यन्ते च वृद्धैः, अतस्साङ्केतिकासाङ्केतिकसंवलनं शक्यमिति ; तत्राह—

**20. सू०—संख्याभावात् ॥ १. १. २०. ॥ (सि. ९)**

न ह्येते शब्दा नित्याः, एते तु साङ्केतिका इति लौकिकैः परीक्षकैः पाणिनिकात्यायनपतञ्जलिप्रभृतिभिर्वा शब्दमनुशासद्भिस्संख्यानं क्रियते । यच्च साङ्केतिकेष्वपि शब्देष्वप्रकृतिभूतेषु प्रत्ययाद्यनुशासनम्, तदपि तथैव वृद्धव्यवहारपारम्पर्यमुपजीव्य । तच्च यथादर्शनं लोकमात्र एव द्रष्टव्यम् ॥ २० ॥

ननु पाणिन्यादय एवाचार्या मतभेदेन देशभेदेन शब्दान् कांश्चिद्विकल्पयन्ति ; * लोपश्शाकल्यस्य, * एङ् प्राचां देशे इत्यादिषु । अतः केषांचिच्छब्दानां पुरुषमतिभेदमूलत्वात्काचित्कत्वात्साङ्केतिकत्वमुन्नयामः, ततश्च सर्वानाश्वास इत्यत्राह—

**21. सू०—अनपेक्षात् ॥ १. १. २१. ॥ (सि. १०)**

विकल्पानुशासनस्य सङ्केतानपेक्षत्वात् । न ह्यत्र शाकल्यादेस्सङ्केत उपदिश्यते, अपि तु मतम् । तच्चानादित्वेऽपि वैकल्पिकेषु केषुचिदभिमतेरुपपद्यते । पूजार्थं च कचिदाचार्यान्तरकीर्तनम् । देशभेदोपाधिकोऽपि प्रयोगोऽनादिरेव ज्ञाप्यते, विपर्यये प्रमाणाभावात् । प्राचां देशाभिधानस्य यस्य पदस्याचामादिरेङ् भवति, तद्वृद्धसंज्ञं भवति, तत्र *वृद्धाच्छ इति छप्रत्ययः ; तेन च भोजकटीय इत्यादिपदनिष्पत्तिः । तच्च पदं तदर्थविवक्षया सर्वत्र प्रयुज्यते, न केवलं प्राचां देशे । एवमितरत्रापि । अतो नानेन साङ्केतिकसंवलनशङ्का ॥ २१ ॥

अथ स्यात्, योगिनां नानाशरीरपरिग्रहः कीर्त्यते—

* आत्मनो वै शरीराणि बहूनि मनुजेश्वर । प्राप्य योगबलं कुर्यात्तैश्च सर्वां महीं चरेत् ॥

इत्यादिभिः । ततश्च कश्चियोगी वा महायोगेश्वरो हरिरेव वाऽनन्तानि शरीराणि परिगृह्याद्यतनप्रयोज्यप्रयोजकवृद्धादिवत्स्वयं व्याजहार, व्यवजहार च । तत्राद्यतना बाला इव जगदादिसंभवास्सर्वाः प्रजा व्युत्पाद्यन्ते । एवमयमीश्वरोपज्ञं प्रवृत्तस्सर्वशब्दव्यवहारः । ते च न्यायाचार्यमायावत्समयादय इति । तत्राह—

**22. सू०—प्रख्याभावाच्च योगस्य ॥ १. १. २२. ॥ (सि. ११)**

ईदृशस्य योगस्य, प्रख्याभावात् । प्रकृष्टा ख्यातिः—प्रख्या, प्रत्यक्षादिभिः प्रसिद्धिरित्यर्थः । न ह्यर्वाचीनेषु नानादेहपरिग्रहपर्यवसितं कञ्चियोगं पश्यामः । अनुमानं च योगिनामीश्वरस्य च नास्तीत्युक्तम् ; समर्थयिष्यते च शारीरके । अतः परिशेषात्तथाविधातिशये शास्त्रमेव प्रमाणं स्यात् । तच्चेच्छास्त्रं प्रमाणम्, कृतं प्रामाण्यार्थेन साङ्केतिकत्वसंरम्भेण । अथाप्रमाणम्, कृतं प्रत्यक्षाद्यगोचरासंभावितताद्दशातिशयमूलसाङ्केतिकत्वोत्थानेन । यस्तु परमास्तिकपरिग्रहादेव वेदप्रामाण्यं तन्मूलं च पारमेश्वरं योगातिशयं पुरस्कृत्य सर्वशब्दानां साङ्केतिकत्वं ब्रूयात्, न तावत्तेन सह वेदप्रामाण्यादौ विवादः । साङ्केतिकत्वं तु प्रमाणाभावाद्विपर्यये प्रमाणसद्भावाच्च प्रतिषेधामः ॥ २२ ॥

इतश्च—**23.** सू०—**लिङ्गदर्शनाच्च** ॥ १. १. २३. ॥ (सि. १२)

साक्षान्नित्यत्वे लिङ्गदर्शनात् । *तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् । इत्यन्यपरमपि नित्यत्वमनुवदति । तदेतत्सङ्केताभावे लिङ्गं भवति । न हि वर्णमात्रं वाक्च्छब्देनोच्यते ; कचटतपादिनिर्देशस्यार्थप्रत्यायकत्वाभावात्, तेन रूपेण वाचकत्वाभावे वाक्छब्दावाच्यत्वात्, अनन्वयप्रसङ्गाच्च । अतोऽर्थप्रत्ययजनकं पदं वा वाक्यं वा वाचेति परामृश्यते । तत्राद्यपक्षे सिद्धस्सङ्केताभावः । द्वितीये तु पदस्य साङ्केतिकत्वे वाक्यनित्यत्वासंभवादाक्षिप्तः । ननु श्रुतिप्रामाण्ये सिद्धे तदर्थयाथात्म्यनिबन्धनपूर्वपक्षोत्थानम्, ततश्च तदप्रामाण्यसाधनमिति व्याघातः ; श्रुतिप्रामाण्यमनभ्युपगच्छतश्श्रुत्यैवोत्तरं दीयत इत्यात्माश्रयश्च । मैवम्, युक्तिविशेष [स्थ] मूले पूर्वपक्षे प्रमाणतया सिद्धान्त्यभ्युपेता श्रुतिरपि संवादिनीत्यनुग्राहकतया श्रुत्युदाहरणात् । तत्परिहारार्थं च सिद्धान्ते श्रुत्युपपादनात् । एवमन्यत्रापि द्रष्टव्यम् । न चात्मनिर्वाहे विशेषः, वेदाधिकरणपूर्वपक्षे एतदधिकरणसिद्धान्ते च परैरपि श्रुत्यनुप्रवेशभाषणादिति । ये तु वर्णनित्यतापरमिदमधिकरणं वर्णयन्ति ; तेषां निरर्थकमिदमधिकरणम् । वर्णानामनित्यत्वेऽपि पूर्वपूर्वपुरुषोच्चारितक्रमसजातीयक्रमेणैवोत्तरोत्तरेषामुच्चारणमिति पुरुषस्वातन्त्र्यरहितानादिव्यवहार उपपद्यते । यथा वाच्यस्य घटादेरनित्यत्वेऽपि तज्जातिसंगृहीताकारेणानन्यव्यभिचारपरिहारः, तथा वाचकेऽपि तत्तद्वर्णादिजातीयसंगृहीताकारेण व्युत्पत्तिरविरुद्धा । ननु, वाच्ये वाचके च संस्थानातिरिक्ता जातिर्भवद्भिर्नाभ्युपगम्यते, तत्कथं दृष्टान्तो दार्ष्टान्तिके गतिरिति ? उच्यते, यादृशेन संस्थानादिना परेषां जातिरभिव्यज्यते, तादृशेनैव सांदृष्टिकेन तत्तद्व्यवहार इति किमत्र दुष्यति ? यस्य तु जातिस्संस्थानातिरेकिणो स कथं तयैव [संग्रहे] वर्णनित्यतामभिनिविशते । तत्तज्जातिकविशेषोच्चारितानां तु तत्तज्जातीयवर्णानां यथाव्युत्पत्ति तदर्थबोधकत्वमिति नार्थप्रत्ययेऽपि वर्णनित्यतोपकरिष्यति । सिद्धान्ते च वर्णस्वरूपनित्यत्वोपपादनमपि न वाचकानादित्वोपपादकम् । म्लेच्छादिभाषास्वयतनैश्च यथारुचि क्रियमाणेषु साङ्केतिकेषु शब्देषु वर्णानादित्वमिच्छतामपि पुरुषस्वातन्त्र्यानुप्रवेशस्याभ्युपगमात् । शब्दस्वरूपोत्पत्तिविनाशयोश्च सृष्टिप्रलयप्रकरणादिषु बहुशः प्रपञ्चितत्वेन दुस्त्यजत्वात् । यच्चेदं परेषामाक्षेपवार्तिकम्—

*यद्यनित्यत्वपक्षोऽपि शब्दादेवावगम्यते । अनादिव्यवहारश्च नित्यत्वं किं न साध्यते ॥

इति । न तस्याद्यापि सम्यञ्चं समाधिं पश्यामः ; *क्रमः क्रमवतामित्यादेः प्रतारणायमानत्वात् । ननु महाप्रलयेन वेदानित्यतां परिचोद्य परिहृतं शारीरके—*समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च इति । तत्र कथं न वर्णानित्यतां परिहरिष्यतीति मंस्यते ? उच्यते, नहि तत्र वर्णानित्यतामात्रेण वेदानित्यत्वं शङ्कितम्, अपि तर्हि प्रवर्तकस्य प्रजापतेः प्रलयात्प्रवर्तनीयस्याचित्परिणामविशेषगुणभूतस्य वेदाख्यशब्दराशेस्स्वाधारपरिणतिविशेषविलयेन प्रवर्तयितुमशक्यत्वाच्च वेदानित्यत्वं परिचोदितम् । ईश्वरेण पुनस्तज्जातीयत्वादिसृष्ट्या समाहितमिति ।

सङ्केतादर्शनादन्यकालेऽन्यत्रापि संभवात् । धातुर्यथापुरं सर्गाच्च साङ्केतिकता गिराम् ॥
सजातीयेषु वर्णेषु विजातीयक्रमान्वयात् । व्युत्पत्तिर्दृश्यते तत्र नित्यानित्यकथा वृथा ॥
साङ्केतिकेषु शब्देषु वेदानां पौरुषेयता । नान्तरीयकसिद्धेति तन्निरासोऽयमर्थवान् ॥
पदनित्यतया वेदनित्यत्वं न प्रशास्महे । तदनित्यतया प्राप्ता निषेद्धव्या त्वनित्यता ॥ २३ ॥

॥ इति शब्दनित्यताधिकरणम् ॥ ६ ॥

## ॥ अथ वेदस्यार्थप्रत्यायकताधिकरणम् ॥ ७ ॥

**24.** सू०—**उत्पत्तौ चावचनास्स्युरर्थस्यातन्निमित्तत्वात्** ॥ १. १. २४. ॥ (पू. १)

पदपदार्थसंबन्धे पुरुषापेक्षा निराकृता, पदसमुदायरूपसन्दर्भे तु तदपेक्षा निराकरिष्यते । इह तु पदानां पदार्थेषु स्वाभाविकशक्तिसद्भावेऽपि लोकदृष्टविजातीयेऽर्थे प्रमित्युत्पादनशक्तिर्नास्तीत्याशङ्क्य परिह्रियते । यद्यपि पदपदार्थयोरौत्पत्तिकस्संबन्धः, स च वृद्धव्यवहारेऽध्यवसितः, शब्दप्रामाण्यं च सामान्येन प्रतिष्ठितम्, न च प्रामाण्ये संवादाद्यपेक्षा, अत एव च वेदे पदपदार्थज्ञानं च जायत एव, न च साक्षाद्बाधादिकमपि दृष्टम्, तथाऽपि वेदवाक्यानां लोकोत्तरेष्वर्थेषु प्रामाण्यं न संभवति, विवक्षितविपरीतव्याप्त्यपहतत्वात् । तथा हि—यद्यपि कर्त्रादेश्शरीरादिमत्त्वदर्शनादशरीरकर्त्रनुमानेऽपि विशेषविरोधादिर्दोषः, तथाऽपि कर्मणां साध्यसाधनभावः आनन्तर्येण वा दृष्टेन वा केनचिद्द्वारेणेति नियमसिद्धौ नापूर्वद्वारफलसाधनत्वं युक्तम् । यथा शशस्य निर्विषाणतयैवोपलम्भाद्विन्ध्याटव्यां शशाश्शृंगवन्त इति वाक्यं साक्षात्प्रत्यक्षादिबाधादर्शनेऽपि विपरीतव्याप्त्या [ना] स्पदं भवति, तथाऽत्रापि । न हि विन्ध्याटव्यां मदमुदितो मातङ्गगणस्तिष्ठतीति वाक्यमिव तत्र शृङ्गवन्तश्शशास्संचरन्तीति वाक्यं विश्वसिमः । अथ राजसेवादिनयेन देवताप्रीतिद्वारा फलप्रदत्वं संभावितमपि ब्रूषे, तत्राप्युक्तन्यायेन देवताशब्दितानां चेतनविशेषाणामलौकिकमतिशयं शब्दः प्रतिपादयितुं न शक्नोति । न हि शशविशेषस्य विषाणवत्त्वादौ, पुरुषविशेषस्य सहस्रनेत्रत्वादौ सर्वज्ञत्वादौ वा कंचन विशेषं पश्यामः । न हि शुक्तिविशेषेषु मुक्तासंभव इव कैश्चिद्दृष्टपूर्वोऽयमर्थः, येन तत्प्रत्ययादाश्वासस्स्यात् । तस्मादयोग्यपदसमभिव्याहाररूपाणि वेदवाक्यानीत्यनपेक्षत्वलक्षणं प्रामाण्यमनुभवितुं नार्हन्तीति पूर्वः पक्षः । तदेतदभिप्रेत्याह—* **उत्पत्तौ चावचनास्स्युरर्थस्यातन्निमित्तत्वादिति** । उत्पत्तौ च—संबन्धौत्पत्तिकत्वादौ सत्यपि । यद्वा, ज्ञानोत्पत्तौ सत्यामपि । अवचनास्स्युः—शब्दास्त एव सन्तोऽपि वेदवाक्यरूपसमुदाये लोकोत्तरस्यार्थस्य न प्रमापकास्स्युः । अर्थस्यातन्निमित्तत्वात्—शब्दार्थस्य शब्दमात्रनिमित्तत्वाभावादित्यर्थः । यदि शब्दार्थस्य शब्दमात्रमेव निमित्तं स्यात्तदा शृङ्गवन्तश्शशा इति [वाक्यम्] शब्दोऽपि शशशृङ्गसत्तानिमित्तं स्यात् । अथ तत्र शशान्तरदृष्टव्याप्तिरनुसरणीयेत्यलौकिकोऽतिशयो न वक्तुं शक्यः ? तर्हि शब्दस्य दृष्टानुसारोऽप्यपेक्षणीय इत्यनपेक्षत्वलक्षणप्रामाण्यासंभवादयुक्तं चोदनालक्षणोऽर्थो धर्म इति ॥ २४ ॥

तत्र राद्धान्तमाह—

**25.** सू०—**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्** ॥ १. १. २५. ॥ (सि. १)

तद्भूतानाम्—तस्मिन्नर्थे भूतानाम्, सङ्केतासंभवाद्बोधकतयैव लब्धसत्ताकानाम् । क्रियार्थेन—अलौकिकचतुर्वर्गरूपश्रेयस्साधनक्रियार्थेन । समाम्नायः—समुच्चारणम्, सपरिकरक्रियारूपार्थबोधनार्थमेव समुच्चारणम् । उच्चार्यमाणा हि वैदिकाश्शब्दा अलौकिकचतुर्वर्गरूपश्रेयस्साधनरूपक्रियावचना उपलभ्यन्ते । **अर्थस्य तन्निमित्तत्वात्**—विलक्षणस्य वाक्यार्थस्य शब्दैकनिमित्तत्वात्, व्याप्तिपरामर्शनिरपेक्षत्वादित्यर्थः । तथा हि—वाक्यादर्थप्रत्यये व्याप्तिपरामर्शापेक्षाऽस्तीति वदता किं तदभावे बोध एव नोत्पद्यत इत्यभिप्रेतम् ? उतोत्पन्नोऽपि व्यापकनिवृत्त्या बाधितविषय इति ? नाद्यः, दिनकरबिम्बचौर्यवदशक्यत्वात् । त्वदुक्तं वाक्यमपि न किंचिद्दूषणं बोधयतीति वैयात्यस्य दुर्वारत्वप्रसङ्गाच्च ।

शशविषाणवाक्यादपि बोधो जायत एव। नापि द्वितीयः, असंभावितकारणदोषस्य दृढोत्पन्नस्य ज्ञानस्य वस्त्वन्तरदृष्टासाधारणस्वभावाभाववद्वस्तुविषयतामात्रेण बाधे पावकौष्ण्यप्रत्ययस्यापि भङ्गप्रसङ्गात्। सर्वभावानामपि हि शक्तयः प्रातिस्विकप्रमाणसामर्थ्यसिद्धा नापह्नवमर्हन्ति। शशविषाणवाक्ये तर्हि का वार्ता? वह्निशैत्यवाक्य इव दृष्टबाधः। अदृष्टे तु यदि वक्ता नाप्तः, तदा कारणदोषशङ्काग्रस्ततया दृष्टव्याप्तया बाध्येतैव। यदि तु वक्ता प्रत्ययितः, तदा कस्तत्र ब्रूयात्तद्विषयाप्तवचन[1]भावादेव तत्परित्यागम्? अन्यथा मुक्ताशुक्तिवृत्तान्तमपि दूरस्थो बाधेतैव। एवं तद्बशरीरकर्तृताविषयं सामान्यतोदृष्टमपि जीवेदिति चेन्न; व्याप्तिपरामर्शमूलत्वादनुमानस्य, व्याप्तेश्च वैपरीत्यग्रस्तत्वात्। वाक्ये त्वाकाङ्क्षासन्निधियोग्यतानामेव परामर्शनीयत्वात्, तावतैव विशिष्टज्ञानोत्पत्तौ बहिरङ्गेनानुमानेन बाधायोगात्। अन्यथा प्रत्यक्षेऽपि बाधप्रसङ्गस्य दर्शितत्वात्। ज्वालैक्यप्रत्यक्षादिकं तु संभवद्दोषजातीयतया बाध्यते। ननु, योग्यतैव विपरीतव्याप्तौ न सिध्यति, यथा अग्निना सिञ्चेदित्यादाविति चेन्न; तत्र प्रत्यक्षेणैव बाधात्। इह तु तदभावात्। यत्र च बाधो दृश्यते यूपादित्यादौ, तत्र चायोग्यत्वं बाधं चेच्छामः। तात्पर्येण तु प्रामाण्यं वक्ष्यामः। एतदुक्तं भवति—यत्र साक्षात्प्रत्यक्षेण बाधः, यत्र वा भिन्नमभिन्नमित्यादाविव भावाभावात्मना साक्षाद्विरोधः, न तस्य प्रमाणता। यत्र तु तथाविधायोग्यत्वरहिते विलक्षणस्वभावे सिद्धे कार्ये वा वस्तुनि शब्दाद्बुद्धिजन्म, न तत्रानुमानेन बाधः। प्रत्युत तेनैव तस्य बाधो युक्तः। अत एवागमबाधितमनुमानाभासोदाहरणमिति ॥ २५ ॥

अथ शशविषाणवाक्यप्रतिबन्दीमुद्धरति—

**26. सू०—लोके सन्नियमात्प्रयोगसन्निकर्षस्स्यात्** ॥ १. १. २६. ॥ (सि. २)

योऽयं लोके सन्नियमात्प्रयोगः—असद्भूतशशविषाणादिवर्जनेन प्रयोगः, स सन्निकर्षस्स्यात्; सन्निकर्षमूलत्वात्, सन्निकृष्यत इति वा। [सन्निकृष्टं वस्तु] प्रत्यक्षादिदृष्टविषयो हि लोके वाक्यप्रयोगः, शशविषाणादिकं तु न केनचित् दृष्टं सदिति न तद्विषयः प्रयोगः। वक्तुश्श्रोतुर्वा योग्यानुपलम्भनिराकृतविषयतया शशविषाणादिवाक्यमप्रमाणम्, नतु विपरीत [मात्र] बलेनेत्यभिप्रायः। यत्तु परैर्भाषितम्, पदसङ्घातात्मानो वेदाः, पदसङ्घाताश्च पुरुषकृता दृष्टाः, यथा नीलोत्पलाद्यर्थविषयाः, अत एतेऽपि कृत्रिमा इति तद्विशेषप्रदर्शनार्थमिदं सूत्रमिति; तत्र तावदस्मिन्नधिकरणे सूत्रमिदमसङ्गतं स्यात्। न ह्यत्र पदसङ्घातस्य पौरुषेयत्वशङ्कयोत्थानं परैरभ्युपगतम्। तादर्थ्ये निवेशश्च न स्पष्टः। तथा च सति वेदाधिकरणमप्यत्र निवेशितव्यम्। व्यवधानं पदद्वयविपरिणामश्च परैरेव कण्ठोक्तः। तथा च **काशिका**—*सन्नियमादितिपदव्यवहितः प्रयोगशब्दो लोक इत्यस्यानन्तरं संबन्धनीयः। तदयमर्थः—**लोके**, प्रयोगः, **सन्नियमः**—सम्यङ्निबन्धनात्मको युक्तः, चक्षुरादिसन्निकर्षात्; नतु वेदे, अतीन्द्रियार्थत्वात्। इदं च विपरिणामव्यवहितकल्पनयोस्साधारणमप्युदाहरणम्, विपरिणामस्योक्तत्वात् व्यवधानमात्रोदाहरणत्वेनोक्तमिति वेदितव्यम्—इति। अध्याहारानन्त्यगुणकल्पनादिकं कथंचित्सहामहे। विपरिणामं तु सूत्रान्यथाकरणरूपं कथं मृष्येमहि। न च नियमशब्दो निबन्धे प्रसिद्धः। सन्निकर्षशब्दस्य च समनन्तरसूत्रेऽत्र च प्रयुक्तस्य विरूपार्थकल्पनमयुक्तम्। तत्र सन्निकृष्टाः—कालार्वाचीनाः, इति व्याचख्युः, इह तु, लौकिकेष्वर्थेषु प्रत्यक्षेणार्थमुपलभ्येति चक्षुरादिसन्निकर्षविवक्षां प्रत्यविन्दन्। अस्मदुक्तयोजनायां तूपचारमात्रं सह्यमिति।

ये पुनरिह पदतत्सङ्घातपदार्थप्रभृतीनां वाक्यार्थप्रत्ययं प्रति हेतुत्वानुपपत्त्या साङ्केतिकी वाऽमूला वा वाक्यार्थप्रतीतिरिति पूर्वपक्षेण वेदाप्रामाण्यमाशङ्क्य, पदैरभिहिताः पदार्था वाक्यार्थं बोधयन्तीति वाक्यार्थस्य समूलतया वेदप्रामाण्यमाहुः ; तेषामिदमधिकरणं मीमांसाशास्त्राद्बहिष्ठमेव स्यात्, न्यायविस्तरसाध्यत्वादस्यार्थस्य । तथा हि— अष्टादशसु विद्यास्थानेषु धर्मविद्यास्थानानि चतुर्दश । अत्रापि द्वादशोपदेशशास्त्राणि । मीमांसा न्यायविस्तर इत्युभे हेतुशास्त्रे । तयोरपि न्यायविस्तरस्सामान्येन लोकव्यवहाराविरुद्धसपरिकरप्रमाणचिन्तायामधिकृतः । आत्मादिप्रमेयचिन्तनं तु शारीरकक्रृत्यमपि शास्त्रस्य परमप्रयोजनप्रदर्शनाय क्रियते । तेनैव प्रत्यक्षादिवदागमाख्यमपि प्रमाणं साधनीयम् । तदर्थं वाक्यार्थस्य समूलताऽपि वक्तव्या । एवं स्थिते धर्माधर्मेश्वरादिप्रमेयेषु वेदाख्यशब्दस्य प्रवृत्तिप्रकारो न्यायविस्तरसिद्धसामान्यलक्षणैस्तर्कविशेषैर्मीमांसया साध्यः । ततश्चास्मिन्प्रमाणलक्षणे सामान्येन शब्दप्रामाण्ये स्थितेऽपि वेदस्याप्रामाण्यं यथा स्यात्तथैव पूर्वपक्षो वक्तव्यः । सिद्धान्तेऽपि वेदप्रामाण्योपयुक्तं वक्तव्यम्, नत्वनधिकृतं सामान्यं शब्दप्रामाण्यादिकम् । यदि परम्परयोपकारमात्रेण तदप्यत्र साधनीयं स्यात्, तदा पृथक्पृथक्संख्यातं न्यायविस्तराख्यं विद्यास्थानं निर्विषयमेव स्यात्, प्रमाणसामान्यादेरपि परम्परयोपकारिणोऽत्र चिन्तनीयत्वापातात् । किंच कार्यकारणभावाद्यभावे श्रेयस्साधनत्वादिकं सर्वं दुर्वचनम् ; अतस्तदर्थमप्यधिकरणानि कल्प्यानि स्युरिति । अत इदमधिकरणं न वाक्यमात्रप्रामाण्यार्थम् । तथा चोक्तं **तत्त्वरत्नाकरे** मीमांसाप्रस्तावे *तत्र च प्रथमाध्याये पादे च सर्वप्रामाण्येन अन्येषु च न्यायविस्तरप्रामाण्योपजीवनेन वैदिकेषु वाक्यविशेषात्मकेष्वपौरुषेयत्वनिबन्धनं प्रामाण्यं यथा वर्णितम्, तथा शब्दे प्रादीदृशामेति । स्थापितश्चायमर्थोऽस्माभिर्न्यायपरिशुद्धौ ।

अन्ये त्वाहुः—शब्दसंबन्धस्य वृद्धव्यवहारसिद्धत्वेऽपि न वैदिकः पदसमुदायो वृद्धव्यवहारे व्युत्पन्नः, पदसमुदायान्तरस्यैव वृद्धव्यवहारे व्युत्पन्नत्वात् । न चान्यत्र व्युत्पन्नोऽन्यत्रार्थं बोद्धुमलम् । यद्यपि च पदानामावापोद्वापवशात्पदार्थेषु शक्तिनिष्कर्षः, तावतैवाकाङ्क्षादिवशात्समुदायान्तरेऽप्यन्वितप्रतीतेः ; तथाऽप्याकाङ्क्षादिनिरूपणे प्रमाणान्तरमन्वेषणीयमिति प्रमाणान्तरागोचरार्थविषयवैदिकपदसमुदायस्य विशिष्टधीजननासामर्थ्यात्, प्रमाणान्तरगोचरत्वे च पौरुषेयतादिशङ्काग्रस्तत्वादनपेक्षत्वलक्षणं प्रामाण्यं न संभवतीति पूर्वः पक्षः । सिद्धान्तस्तु—लोकव्युत्पत्तिमूलैव वेदेऽपि वाक्यार्थावगतिः, पदपदार्थयोरनन्यत्वात् । यद्यपि चावापोद्वापवशात्पदार्थस्वरूपमात्रे शक्तिनिश्चयः, तथाऽप्यन्विताभिधायिपदसमुदायान्तर्गतानां पदानामन्वितैकदेशभूतपदार्थेषु शक्तिनिश्चय इति लौकिकानामेव पदानां वैदिकेऽपि वाक्ये स्थितानां कार्यान्वितबोधनमविरुद्धमिति । अयमपि पक्षो दत्तोत्तरः । तथा हि—शब्दप्रामाण्ये सामान्यतः स्थिते वेदप्रामाण्यमात्रमेव ह्यत्र पूर्वपक्षे प्रतिक्षेप्तुं युक्तम्, नच तदत्र शक्यते । यदि व्युत्पन्नसमुदायात्समुदायान्तरत्वमात्रेणाबोधकत्वमिति शङ्क्यते, तदा प्रतिव्यवहारं पदानामावापोद्वापभेदेन समुदायान्तरत्वसिद्धेः परस्परवार्तानभिज्ञो लोकस्स्यात् । अथ व्युत्पन्नपदसमुदायैकदेशतया प्रागेवावापोद्वापवशाद्गृहीतशक्तीनां पदानां समुदायान्तरेऽप्यन्वितबोधकत्वमिति लोकव्यवहाराविरोधं मन्यसे, वेदेऽप्ययं न्यायः केन वारितः ? प्रमाणान्तरायोग्यार्थविषयत्वादिति चेन्न ; लोकेऽपि श्रोतुः प्रमाणान्तरागोचरं द्वीपान्तरविशेषं यदि कश्चिद्ब्रूयात्, अन्वितप्रतीतिर्न स्यात् । अथ तत्र प्रमाणान्तरयोग्यत्वमस्ति, वक्तुश्च प्रमाणान्तरसिद्ध इति ब्रूषे ? तन्न, अनुपकारकत्वात् । नहि व्युत्पन्नानां पदानां स्वशक्त्याऽन्वितप्रतिपादने श्रोतुर्वक्तुर्वा प्रमाणान्तरयोग्यत्वादिकं क्वचिदुपयुज्यते । आकाङ्क्षासत्तियोग्यतार्थं लोके प्रमाणान्तरम्, वेदे तु तन्नास्तीति चेत् ; लोकेऽपि श्रोतुः

प्रमाणान्तराप्रतिपन्नेऽर्थे कथमाकाङ्क्षादिनिश्चयः? पदानां पदार्थानां च प्राचीनत्वादिति चेत्; तुल्यं वेदेऽपि। अथ मतम्, अलौकिकं कार्यमपूर्वाख्यं वेदवाक्यप्रतिपादितम्, तत्र न लोके व्युत्पत्तिः, क्रियाकार्यमात्रविषयत्वात्तस्याः; अतः अन्विताभिधानशक्तानामपूर्वकार्यान्वितं स्वार्थाभिधानं न लोके व्युत्पत्तिसिद्धमित्यबोधकत्वमेव वेदस्येति। एवं तर्हीदृशस्य पूर्वपक्षस्यानुत्तरमेव सिद्धान्तः, देवतानुग्रहादतिरिक्तस्यापूर्वस्य कल्पने प्रमाणाभावात्, तत्कल्पनेऽपि तद्वाच्यत्वक्लृप्तेर्निरर्थकत्वात्, लिङादीनां च तत्र व्युत्पत्तौ पदान्तराणां तदन्वितप्रतिपादनाविरोधात्। अव्युत्पत्तौ तु तदन्वितशक्तिविचारस्यानुत्थानात्। अत्रैव च तद्व्युत्पत्तावन्योन्याश्रयणात्। अन्वयवैघट्यपरिहारायापूर्वाख्यवाच्यक्लृप्तिः, ततस्तद्व्युत्पत्तिसमनन्तरमेव तदन्विताभिधानमित्यपूर्वव्युत्पत्तिरपूर्वाधिकरण इति भवद्भिरेवोक्तम्। अतोऽत्रास्मदुक्तावेव पूर्वपक्षसिद्धान्तौ।

सिद्धे शब्दप्रमाणत्वे लोकोत्तीर्णेषु वस्तुषु। तदसंभवमाशङ्क्य साधिता श्रुतिमानता॥
कृत्स्नवेदप्रमात्वाय सामान्यादिह साधितः। न्यायश्शारीरके क्वापि प्रतिसंस्क्रियते पुनः॥
न्यायविस्तरसाध्यं तु नात्र सूत्रयितुं क्षमम्। न च तादर्थ्यमेतेषु सूत्रेषु स्पष्टमिष्यते॥
समुदायान्तरत्वादिशङ्काऽत्यन्तलघीयसी। अतोऽस्मदुक्त एव स्याद्विचारोऽत्र समञ्जसः॥ २६॥

**॥ इति वेदस्यार्थप्रत्यायकताधिकरणम्॥ ७॥**

---

**॥ अथ वेदापौरुषेयताधिकरणम्॥ ८॥**

## 27. सू०—वेदांश्चैके सन्निकर्षं पुरुषाख्या॥ १. १. २७.॥ (पू. १)

पदानां पदार्थेषु स्वाभाविकीं शक्तिमुपपाद्य पदद्वारकपौरुषेयत्वशङ्का वेदानां निराकृता। पदानामेव यथाव्युत्पत्ति समभिव्याहारविशेषेण वाक्यभूतानां लोकोत्तरार्थप्रमितिजननशक्तिः स्थापिता। इदानीं वाक्यद्वारकपौरुषेयत्वशङ्का निराक्रियते। तत्रैवं विचार्यते, किं वेदवाक्यानि पौरुषेयाणि उत नेति। तदर्थं काठकादिसमाख्याविशेषादयः किं सकर्तृत्वैकान्ताः उतान्यथासिद्धा इति। एवमिह पूर्वपक्षः, यद्यप्यस्मदादीनां परतन्त्रतयोच्चारणान्न वेदकर्तृत्वम्, यद्यपि चान्यः कश्चित् कर्ता न दृष्टः, तथाऽपि वचनान्तरसामान्यात्कर्ता तावत्सामान्यतस्संप्लवते। वेदवाक्यानि पौरुषेयाणि, वाक्यत्वात्, रथ्यापुरुषवाक्यवदिति। न चात्र स्मर्तव्यस्य कर्तुरस्मरणेन बाधः, कणादप्रभृतिभिः कैश्चित् स्मरणेन सर्वैरस्मर्यमाणत्वासिद्धेः। स्मरन्ति चैके महर्षयः—*प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते इति। श्रुतयश्च—*तस्माद्यज्ञात्सर्वहुतः। ऋचस्सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्मात्। यजुस्तस्मादजायत, *तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः, *विश्वामित्रस्य सूक्तं भवति, नम ऋषिभ्यो मन्त्रकृद्भ्यः, इत्यादिकाः। काठकं कालापकं पैप्पलादकमित्यादयस्समाख्याविशेषा दृश्यन्ते। न चैते *तेन प्रोक्तमिति प्रवचननिमित्ताः, बहुषु प्रवक्तृषु सत्सु विशेषनिर्देशासंभवात्। असाधारणेन हि विशेषणं युक्तम्। नाप्याद्यप्रवचननिमित्ताः, नित्यत्वपक्षे तदयोगात्। नाप्यन्यशाखाप्रवचनव्यवच्छेदार्थाः, महर्षीणां शाखान्तरप्रवचनाभावे प्रमाणाभावात्। अद्यापि केषुचिदनेकशाखाप्रवचनं दृश्यते। अतः परिशेषात् *कृते ग्रन्थ इति कर्तृविशेषनिमित्ता इति निश्चीयन्ते। कृतेश्चासाधारण्यं युक्तम्। यो यथा पुरुषान्तरोच्चरितमहमपि तथैवोच्चारयामीत्यभिसन्धिमन्तरेण स्वातन्त्र्येण स्वेष्टक्रमेण पदानि वाक्यतया निबध्नाति स हि वाक्येषु कर्तेत्युच्यते। न चेदृशस्वातन्त्र्यमेकस्मिन्वाक्येऽनेकेषां दृष्टम्। यदृच्छया संभवदपि न महति ग्रन्थराशौ। अतः कर्तृ-

विशेषणं युक्तम् । तदयं सूत्रार्थः । **एके**—वादिनो महर्षयः । **वेदान्**—वेदानपि । कर्मेत्याहुः । *कर्मैके तत्र दर्शनादिति पदानां पौरुषेयत्वप्रक्रमात्समुच्चयशक्त्या चानुषङ्गो ज्ञायते । **पुरुषाख्या च, सन्निकर्षम्**—पुरुषेन्द्रियादिसन्निकर्षम्, वेदार्थस्य ज्ञापयति । सन्निकर्षमूलत्वात्सन्निकर्षः ; कृतक इत्यर्थः । स च काकाक्षिनयेनोभयत्रान्वेतव्यः । सन्निकृष्यत इति वा सन्निकर्षः । तेन अर्वाचीनत्वमर्थलब्धम् ॥ २७ ॥

## 28. सू०—अनित्यदर्शनाच्च ॥ १. १. २८. ॥ (पू. २)

अनित्याः—उत्पत्तिविनाशवन्तः, वेदार्थतया श्रूयन्ते । तथा च—*बबरः प्रावाहणिरकामयत, *कुसुरुबिन्द औद्दालकिरकामयत इत्येवमादयः । प्रवाहणस्यापत्यं प्रावाहणिः, उद्दालकस्यापत्यं औद्दालकिरिति शब्देनैवामीषामुत्पत्तिः प्रतीयते । अत एव चानित्यत्वमर्थलब्धम् । तदिहौद्दालकिप्रभृतीनां जन्मनः पूर्वमयं ग्रन्थो न विद्यते चेत्कथमयं नित्यस्स्यात्? विद्यते चेत्कथमयं वाक्यार्थस्संपत्स्यते ? न हि तदुत्पत्तेः पूर्वं सोऽकामयतेति निर्दिश्यते । न चाकामयतेत्यस्य कामयिष्यत इत्यर्थः । तथात्वेऽपि वा तदुत्पत्तेः पश्चादर्थव्याघातः । न च कालभेदेन शब्दस्यार्थभेदक्लृप्तिर्युक्ता । तदेवमनित्यार्थसंयोगश्रवणादनित्या वेदाः ॥ २८ ॥

नन्वस्तु वेदानामनित्यत्वं सकर्तृकत्वं च ; तथाऽपि महाजनपरिग्रहनिमित्तभूताप्तप्रामाण्येन वेदानामप्रामाण्यशङ्का निराक्रियतामिति चेत् ; नैवम्, शास्त्रमन्तरेणाप्तप्रणीतत्वे प्रमाणाभावात् । शास्त्रप्रामाण्यनिश्चयपूर्वकत्वाच्चाप्तप्रामाण्याध्यवसायस्य । न ह्येवंविधेऽर्थेऽर्वाचीनानामुपलम्भशक्तिरस्तीति संभावयामः । प्रत्युत विप्रलम्भाद्यभिप्रायमूलतयैव संभाव्यते । तत एव परिग्रहोऽपि भ्रान्तिमूल एव स्यात् । ईश्वरस्य चानुमानागोचरत्वं शारीरके वक्ष्यति । अतो यद्यपि वेदवाक्याद्वाक्यार्थप्रत्ययो जायते, यद्यपि च प्रत्ययानां स्वतः प्रामाण्यम्, तथाऽपि सकर्तृकेषु वेदेषु तत्कर्तृदोषशङ्कया बाध्यत इति कथं चोदनालक्षणोऽर्थो धर्म इति ? तत्राह—

## 29. सू०—उक्तं तु शब्दपूर्वत्वम् ॥ १. १. २९. ॥ (सि. १)

यत्तावद्वाक्यत्वात्पौरुषेयत्वानुमानम्, तद्विपक्षे बाधकाभावेन निरस्तम् । यदि वेदवाक्यान्यपौरुषेयाणि, किं तत्रापहीयते ? कर्तारमन्तरेण रचना कथं स्यादिति चेन्न ; अध्ययनरूपस्य पारतन्त्र्येण रचनस्याद्यत्ववत्सर्वस्योपपत्तेः । स्वतन्त्रपुरुषबुद्धिरचनायास्सिषाधयिषितत्वेन तदभावस्य प्रसञ्जनीयत्वासंभवात् । प्रमाणसिद्धस्य हि परित्यागः प्रसञ्जनीयः । महाजनपरिग्रहाभावस्तस्य प्रसज्यत इति चेत् ; अप्रामाण्यं विवक्षतो महाजनपरिग्रहमूलतया कर्तरि साधिते कथं विवक्षितं सिद्धम् ? यस्तु प्रामाण्यमिच्छन्नाप्तप्रणीतत्वमन्तरेण बहुजनपरिग्रहो न स्यादिति मन्यते ; तं प्रति ब्रूमः, यद्यनादितयैव वक्तृदोषशङ्का निवर्तते, तत एव च परिग्रहस्सेत्स्यति, किमनेनाप्तेन कल्पितेन ? न हि चोदनावाक्यान्न जायते प्रत्ययः । न च संशयात्मा । नच प्रत्यक्षादिभिर्बाधसंभवः । अतः कारणदोषशङ्कामात्रमेव निराकर्तव्यम् । तत्र वक्तुरभावादेव यदि वक्तुर्दोषा न स्युः, किमनेन वक्तृदोषेण कल्पितेन ? यथा हि कारणाभावादेव तद्दोषरहिता परमेश्वरबुद्धिः प्रमेति वस्सिद्धान्तः, एवं वक्तुरभावादेवासंभवद्वक्तृदोषा वेदाः प्रमाणमिति किं न पश्यसि ? एनया दिशा विपक्षे बाधकं नास्ति, अस्ति तु पक्षे बाधकम् । न ह्यसौ कर्ताऽस्मदादिभिरुपलभ्यते । बुद्धादिग्रन्थे तु परम्परया स्मर्यते । न च जीर्णकूपारामादिवदनुपयोगात्कर्तुरस्मरणमिति वाच्यम् ; प्रमाणान्तरागोचरकालान्तरभाविफलसाधनबहुवित्तव्ययकाय-

क्लेशादिपूर्वकप्रवृत्तिसाध्ये वक्तृप्रत्ययमन्तरेण प्रेक्षावतामनुष्ठानासंभवात् । जीर्णकूपादिषु तु देशोच्छेदादिना पुरुषविच्छेदात्प्रयोजनाभावाच्च कर्त्रस्मरणम् । इह त्वनन्तैः पुरुषैरस्खलितमात्रास्वरवर्णसन्दर्भमध्येतृपरम्परयाऽधीयमाने सति प्रयोजनवति च कर्तुर्विस्मरणं न युक्तम् । अतोऽवश्यस्मर्तव्यस्य कर्तुरस्मरणादवगम्यते नासावस्तीति । यत्तु वैशेषिकादिस्मरणम्, न तदनुष्ठानौपयिकमहाजनस्मरणम् [तदनुष्ठानोपेतं महाजनस्मरणम्] । नह्यध्येतृपरम्परया कर्तृविशेषस्य स्मरणं तैरपि वक्तुं शक्यम्, अपि तु केनचित्सामान्यतोदृष्टेनानुमितः कर्ता यौक्तिकैस्तदनुसारिभिश्च कैश्चिदनुस्मर्यते । अत एव हि तेषां कर्तृविशेषविवादः, प्रजापतिर्वा पशुपतिर्वा हिरण्यगर्भो वेति । परम्परया सर्वत्र स्मर्यमाणो हि कर्ता बुद्धादिवन्मन्वादिवच्च न विहीयेत । अतो दृश्यादर्शनबाधितमेवेदमनुमानम् ॥ २९ ॥

यत्तु महर्षयस्स्मरन्तीत्युक्तम्, तत्तु विपरीतम् । सर्वैरपि महर्षिभिर्वेदस्य नित्यत्वमेव घुष्यते । तदाह मनुः—

*अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः ॥ इति ।

अत एव *प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत इत्येतदप्यनन्तेषु वेदेषु तत्तत्कालानुरूपधर्मभेदोचितवेदांशविशेषप्रकाशनाभिप्रायम् । धर्मश्च कालादिभेदेन मात्रया भिद्यत इति स्मरन्ति—

*अन्ये कृतयुगे धर्मास्त्रेतायां चापरे तथा । अन्ये च द्वापरे धर्मास्तथा चान्ये कलौ युगे ॥

इत्यादि । अतो महर्षयोऽपि कर्तारं न स्मरन्ति; किं तु प्रतिषेधन्ति । कृतज्ञास्सत्यवादिनश्च महर्षयः परमोपकारकं वेदवक्तारं सन्तमपि निषेधन्तीति साहसमिदम् ।

यत्पुनर्वेदा एव वेदानां सकर्तृकत्वमाहुरित्युक्तम्; तदप्यसत्; *अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षदिति वेदनित्यत्वश्रुतेः । अत एव *ऋचस्सामानि जज्ञिरे इत्यादिकमपि तत्तद्वेदाभिमानिदेवतोत्पत्तिपरम्, तादात्विकप्रादुर्भावपरं वा । न खल्वीश्वरस्य शक्तस्यापि क्रमान्तरकल्पने प्रमाणमस्ति । प्रत्युत *यथापूर्वमकल्पयदिति न्यायस्सर्वत्र सञ्चारणीयः, प्रागुक्तश्रुतिस्मृत्यनुसारात् । अत एव ऋषीणां सूत्रकाण्डमन्त्रकृत्त्वमपि प्राचीनकर्मानुगुणं प्रजापतिप्रदत्तशक्तिविशेषाणां तत्तदधिकारानुगुणमनधीतवेदभागसाक्षात्करणमेव । तदेवं न वेदकर्तेति सर्वदा परतन्त्रपुरुषपरम्पराधीता एव वेदाः । तदेतत्सर्वमभिसन्धाय सूत्रितम्—***उक्तं तु शब्दपूर्वत्वमिति** । तुशब्दः पक्षव्यावर्तकः । सर्वेषामध्येतॄणां वेदोच्चारणप्रवाहस्य पूर्वपूर्वोच्चारणरूपशब्दपूर्वत्वमुक्तम् । अस्मर्यमाणकर्तृकत्वादीनां पदस्य साङ्केतिकत्वप्रतिक्षेपनयेन दूषणमुक्तप्रायमित्यर्थः । अथवाऽस्मरणबाधितस्य कर्तुरनुमानासंभवाज्जगत्कर्तारमुपस्थापयन्ती श्रुतिरेव कर्तृसद्भावेऽपि प्रमाणमिति स्यात्, ततश्च वेदकर्तृसंभवं साधयता वेदाख्यशब्दस्य पूर्वत्वम्—अनादित्वमुक्तं स्यादिति स्ववचनविरोधः । यद्वा याभिः श्रुतिभिर्वेदानां सकर्तृकत्वं सिषाधयिषसि, ताभिरेव तत्कर्तृतयाऽभिमतेश्वरव्यापारस्य वेदशब्दपूर्वकत्वमुक्तम् । यथा *वेदेन रूपे व्यकरोत् सतासती प्रजापतिः, *स भूरिति व्याहरत् स भूमिमसृजत । स भुव इति व्याहरत् । सोऽन्तरिक्षमसृजत, इत्यादि । तथा—

*सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥ इति ॥ २९ ॥

यत्तूक्तं काठकादिसमाख्याविशेषाः कर्तृनिमित्ता इति, तत्राह—

**30.** सू०—**आख्याप्रवचनात्** ॥ १. १. ३०. ॥ (सि. २)

काठकादिसमाख्या । प्रवचनात्—प्रकृष्टाद्वचनात्, निमित्तादेव । प्रकृष्टं हि वचनमद्यत्व इव कस्यचिदेव भवतीत्यसाधारण्यात्तेन निर्देशः । न हि योग्यानुपलब्धिनिराकृतसद्भावं कर्तारमन्यथाऽप्युपपन्ना श्रुत्याद्यपेक्षया दुर्बला च समाख्या साधयितुमलमिति भावः । किंच कार्तयुगाः पुरुषाश्शक्त्यतिशयात्सर्वान्वेदानधीतवन्तः, ततः कालक्रमेणापचीयमानशक्तीन्पुरुषानालोक्य वेदान्वैदिकं च धर्ममभिरक्षितुकामेन वैयासिकीं व्यक्तिमातिष्ठता भगवता वासुदेवेन व्यस्तशाखा वेदाश्शिष्यानध्यापिताः । एवं प्रतिद्वापरम् । ततश्च यो वेदांशो येनाधीतोऽध्यापितश्च स तेन विशिष्य समाख्यात इति व्यासवृत्तान्तविदां सुगमोऽयमर्थः । तेनात्र शाबरमपि सङ्गतम् । यथाऽऽह—*स्मर्यते च [भगवान्] वैशम्पायनः सर्वशाखाध्यायी, कठस्त्विमामेकां [कठः पुनरिमां केवलां] शाखामध्यापयांबभूवेति, [स] बहुशाखाध्यायिनां सन्निधावेकशाखाध्यायी अन्याः[न्यां] शाखा[म] अनधीयानः, तस्यां च प्रकृष्टत्वादसाधारणमुपपद्यते विशेषणम्—इति । एवं च व्यासादिवत्कठादिप्रवाहोऽप्यनादिरिति नित्यं तेनतेन ससोंऽशो निर्दिश्यते । यत्तु कठादिशब्दाश्चरणविशेषवाचिनः, तत्तच्चरणैः पुरुषैरधीयमानाश्शाखाः काठकं कालापकमित्यादिसमाख्यया निर्दिश्यन्त इति कैश्चिन्निर्व्यूढम् ; तत्रापि तस्य चरणविशेषस्य कठादिसंज्ञकपुरुषविशेषप्रवाहविकारेण कठादिशब्दोपचार इतीतिहासपुराणप्रामाण्यमिच्छद्भिरभ्युपगन्तव्यम् ॥

यत्तु समाख्यायाः कर्तृनिमित्ततामुत्तम्भयितुं प्रावाहणिरौद्दालकिरित्याद्यनित्यार्थसंयोगप्रदर्शनम्, तत्राह—

**31. सू०—परं तु श्रुतिसामान्यमात्रम् ॥ १. १. ३१. ॥** (सि. ३)

प्रावाहणिरित्यादयश्शब्दा यद्यप्यपत्यार्थाः, तथाऽपि नानित्यार्थसंयोगः, प्रवाहणोद्दालकतदपत्यप्रवाहस्याप्यनादित्वात् । तत्र परं श्रुतिसामान्यमात्रम्, यथा कौमुदगन्ध इत्यादयश्शब्दा अनित्येष्वर्थेषु प्रयुज्यन्ते, तथा प्रवाहनित्येष्वपि तेषु तेषु पुरुषेषु तत्तदपत्यविशेषात् प्रावाहणिरौद्दालकिरिति केवलं श्रुतिसामान्यमात्रम् । एवं श्रुतिसिद्धेषु सर्वेष्वर्थेषु रूपेष्वपि केनचिन्निमित्तेन व्रीह्यादिष्विवैकशब्दनिवेशोऽनुसन्धेयः । यत्तु परैर्भाषितम्—प्रवहतीति प्रावाहणिः, बबर इति शब्दानुकृतिः, तेन यो नित्योऽर्थः तमेवेमौ वदिष्यतो वायुम्; अत उक्तम्—*परं श्रुतिसामान्यमात्रमितीति । एषा योजना ह्यर्धचार्वाकेभ्य एव रोचते, अन्यथा कथमकामयतेत्यस्याप्यन्वयः । तत्रापि चेदर्थान्तरं कल्प्यते, किं सर्वत्रैवं न कल्प्येत ? अर्थवादानामपि प्रत्यक्षाद्यविरुद्धानां गुणवादमन्तरेण यथाश्रुतार्थे प्रामाण्यमुपपादयिष्यामः । किंच *भृगुर्वै वारुणिः, वरुणं पितरमुपससार, * श्वेतकेतुर्हारुणेय आस । तं ह पितोवाचेत्यादिष्वपत्यार्थतैव स्वीकर्तव्या, कथमन्यथा पितृपदसमभिव्याहारः ? संवादोदाहरणं वा ? तद्वदत्राप्यपत्यार्थत्वे को दोषः ? अत एकरूपं समाधिं पश्यतामुभयत्र प्रवाहनित्यतया वा सर्वत्रार्थवादतया वा अन्यपरत्वेन वा निर्वाह्य इत्यपत्यार्थविवक्षाभङ्गोऽनुपपन्नः । **शारीरकदेवताधिकरणे** तु * शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्, *अत एव हि नित्यत्वम्, * समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च इति सूत्रत्रयेणानित्यार्थसंयोगपरिहारः, सूत्रकाण्डमन्त्रकृत्त्वाद्यविरोधः, कल्पान्तरेऽपि तस्यैव वेदसन्दर्भस्य प्रवर्तनं चैतदधिकरणाभिप्रेतमेव प्रसङ्गाद्विवरिष्यत इति न किंचिदनुपपन्नम् ॥ ३१ ॥

कथं चोदनाप्रामाण्यम् ? * वनस्पतयस्सत्रमासतेत्याद्युन्मत्तवाक्यप्रायशब्दराशिमध्यस्थत्वाच्चोदनानाम्, नहि वनस्पतिशब्दनिर्दिष्टा भूतसङ्घातविशेषास्सत्रमासीरन् ? तदभिमानिनो वा भवद्भिस्तथा संज्ञिताः ? अतः कथं तत्संज्ञाश्चेतनास्सत्रमासीरन्निति संभावयाम ? अतो जरद्गवादिवाक्यवदुन्मत्तवाक्यमिति, तत एव तदेकराशि चोदनावाक्यमपीति । तत्राह—

**32.** सू०—**कृते वा विनियोगस्स्यात् कर्मणस्समत्वात्** ॥ १. १. ३२. ॥ (सि. ४)

वश्शङ्कानिवृत्त्यर्थः। बालोन्मत्तादिकृते चोदनावाक्ये सति, अविनियोगस्स्यात्। विनियोगोऽत्राकाङ्क्षा-योग्यतासन्निधिभिः परस्परेण संबन्धः। एवमिव हि चोदनावाक्यमुपलभामहे—इदं कर्तव्यम्, एभिः करणैः, एत-दर्थम् इति। नह्यत्राग्निना सिञ्चेदित्यादिवल्लोकतो विरोधं पश्यामः। नचालौकिके कालान्तरभाविफलसाधनत्वे बाधसंभा-वनाऽपि। तदेवं परस्परसमन्वितार्थे पदसमुदाये यद्युन्मत्तादिकृतत्वशङ्का, अयमबाधितो विनियोगो न स्यात्। तदेव-मन्वितार्थचोदनावर्गसन्निधियोगे रुमाप्रक्षिप्तकाष्ठलवणभावन्यायेन *वनस्पतयस्सत्रमासतेत्यादीन्यपि प्रमाणीकृत्याग्नि-ष्टोमादिना सत्रकर्मणस्समत्वात्, तत्स्तुत्यर्थम् वनस्पतयोऽपि नामाचेतनास्सत्रमासत, किं पुनरितरे विद्वांसो ब्राह्मणा इत्युच्यत इति शाबरस्समाधिः। अस्माभिस्तु बादरायणीयमभिप्रायमनुसन्दधानैरुच्यते—*तत्तेज ऐक्षत, *ता आप ऐक्षन्त, *तं पृथिव्यब्रवीत् इत्येवमादीनामभिमानिदेवताविषयत्वम् *अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् इति सूत्रितम्। तदेवमिह *वनस्पतयस्सत्रमासतेत्यादिष्वपि वनस्पत्याद्यभिमानिन्यो देवता एव सत्रकर्तारः प्रशंसार्थमुदा-ह्रियन्ते। देवताभिरप्यनुष्ठितोऽयमर्थः किं पुनरर्वाचीनैरित्युक्ते हि स्तुतिरतिशयिता भवति; वनस्पतिमात्रोदाहरणं तु स्तुतौ मन्दम्। अयथार्थेन प्ररोचना चायुक्ता। देवतानां तु विग्रहादियोगः अर्थित्वं सामर्थ्यमधिकारश्च शारीरके समर्थ-यिष्यते। अतः **कर्मणस्समत्वा**दिति सूत्रखण्डो देवतानां मनुष्याणां च सत्रादिकर्मसाम्यमाह। एवं सत्येषैवास्मदुक्ता प्ररोचना। यद्वा तिष्ठत्वियमर्थवादाधिकरणसाध्या, पौरुषेयत्वानुमानस्य प्रतिकूलतर्क एवानेन सूत्रेणोच्यते। वेदे, **कृते**, प्रेक्षावतां स्वानुष्ठानप्रमित्यङ्गतया तस्या **विनियोगस्स्यात्**, हेतुदर्शनशून्यैर्ग्रहणधारणार्थानुष्ठानादिर्न स्यादित्यर्थः। कर्मण-स्समत्वात्, अग्निहोत्रादिकमेव हेतुदर्शनरहिता महान्तो जनाः परिगृह्णन्ति। तदवश्यं न कृतो वेदः। अतस्तदन्तर्गतानां चोदनानामपि वक्तृदोषासंभवात्प्रामाण्यं सुस्थितमिति सुप्रतिज्ञातोऽयं चोदनालक्षणोऽर्थो धर्म इति।

आख्याया अन्यथासिद्धेः स्मर्तव्यस्मृत्यभावतः। श्रुतिस्मृत्यादिभिश्चात्र पौरुषेयानुमा हता ॥
वेदांश्च प्रहिणोतीति श्रूयते परमः पुमान्। क्रमान्तरविनिर्माणकल्पना च गरीयसी ॥
कालभेदे च मन्त्राणां न शक्तिरपहीयते। यतस्तत्संपरित्यज्य सृजेन्मन्त्रान्तरं प्रभुः ॥
अत ईश्वरमिच्छद्भिरनिच्छद्भिश्च वादिभिः। इदंप्रथमता वेदेष्वनुमातुं न शक्यते।
श्रूयते नित्यमित्येव श्रुतिशब्दोऽत्र रूढिमान्। आहुश्च सर्वे निगमा न कृत्रिमसरस्वतीम् ॥

अनितरपरिदृष्टेष्वस्तबाधेषु वस्तुष्वखिलनिगमवाचो बुद्धिमुत्पादयन्त्यः।
सहजमनपवादं मानभावं दधानास्समजनिषत विष्णोश्शाश्वतं शासनं नः ॥ ३२ ॥

॥ इति वेदापौरुषेयताधिकरणम् ॥ ८ ॥ इति प्रथमः पादः ॥

---

## ॥ अथ द्वितीयपादे अर्थवादप्रामाण्याधिकरणम् ॥ १ ॥

यदाज्ञाव्यतिषङ्गेन यद्वा यस्मिन्समन्वयात् । प्रामाण्यमर्थवादादेस्तमीश्वरमुपास्महे ॥

**33.** सू०—**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते** ॥ १. २. १. ॥ (पू. १)

सशिरस्कवेदप्रतिपाद्यकर्मोपासनात्मकधर्मसमुदाये चोदनानां प्रामाण्यमुपपादितम् । तदर्थोपक्षिप्तसकारणदोषाद्यभावाविशेषेणार्थवादानामपि प्रामाण्यमुपन्यस्तम् । तदिदानीं मुखान्तरेणाक्षिप्य समाधीयते । यद्वा वेदानामप्रामाण्यं बाह्यहेतुमूलकं निरस्यते । प्रागुक्तास्तु नैगमिक्यः पूर्वपक्षयुक्तयो बाह्यहेत्वनुग्राहकत्वेन प्रदर्शिता इति मन्तव्यम् । किंच, उद्भटापराधोपेक्षायोगात् पौरुषेयत्वादयस्स्पष्टतरा दोषाः पूर्वं परिहृताः; अथ तथैव स्पष्टास्पष्टतरशङ्काः परिह्रियन्त इति क्रमः । तत्रास्मिन्पादे विध्युद्देशव्यतिरिक्तस्य कृत्स्नस्य वेदभागस्य सप्रयोजनार्थबोधनेन प्रामाण्यमुपपाद्यते । नामधेयानां तु विध्युद्देशान्तर्गततया पादान्तरीयता । तत एवानित्यदर्शनादिभिः प्रस्तुतत्वादर्थवादानां विधिविश्रमेण विधिपरतया च प्रकृतमनुवदन्त्यर्थवादाः, तानधिकृत्य विचार्यते—किं ते प्रमाणं न वेति ।

यदत्र कैश्चिदुक्तम्, अस्मिन्नधिकरणेऽपि विध्यतिरिक्तानां सर्वेषामानर्थक्यं पूर्वपक्षीक्रियते, सिद्धान्ते च स्वाध्यायविधिवशेनार्थवत्तया भवितव्यमित्येतावत्साधारण्येनाभिधास्यते, पश्चात्क्रमेण स्तुत्याद्युपयोगविशेष इति वेदितव्यम् । तत्र प्रथममर्थवादेषु सिद्धान्तकथनात्तावदेवोदाहृत्य चिन्त्यत इति ; तदसत्, न हि सामान्येन दूषणानुयोगे विशेषविषयमुत्तरं प्रक्रम्येत । विशेषविषयानुयोगे तु सामान्यतस्समाधानं संभवेदपि । ततश्च * **अतदर्थाना**मिति सामान्यनिर्देशोऽपि विशेषार्थ एव । अन्यथा सामान्यविशेषचिन्ताभ्यामधिकरणभेदप्रसङ्गात् । अध्ययनविधिबलेन सिद्धान्तस्थापनं वारयिष्यते । ततोऽर्थवादा एवाक्षिप्य समाधित्सिताः । असाधारणैस्तु हेतुभिः पश्चान्मन्त्रनाम्नोराक्षेपसमाधाने प्रवक्ष्यतः । यच्चान्यैरुक्तम्, यो हि परमते वेदान्तानां सिद्धोऽर्थः, सोऽप्यात्मज्ञानचोदनैकवाक्यतया कार्यप्रधानक इति ; तत्समन्वयसूत्रे निराकरिष्यते । यत्पुनरुक्तम्, न वेदान्तानां चोदनैकवाक्यता, न चास्मिन्शास्त्रे तत्प्रामाण्यप्रतिज्ञा, * अथातो ब्रह्मजिज्ञासेति शास्त्रान्तर एव सिद्धेरिति ; तत्प्रागेवैकशास्त्र्योपपादनेन निरस्तम् । अयं च कबन्धमीमांसकपक्षो राहुमीमांसकपक्षवदुपेक्षणीयो वेदविद्भिः । आह च **वेदार्थसंग्रहे** *सर्वमेकं शास्त्रमिति वेदवित्सिद्धान्त इति । अतोऽत्रैव लक्षणे कृत्स्नस्य वेदस्य प्रामाण्यं समर्थनीयमिति शास्त्रस्वरूपादिविषयाणामपि वाक्यानां प्रामाण्यं समर्थनीयम् । नन्विहैव यदि तेषां प्रामाण्यं साध्यते, न भवितव्यं चतुस्सूत्र्या; अथ किंनिमित्तं तर्हि शास्त्रभेदमन्तरेण प्रमाणलक्षणादीति ? उच्यते, न शारीरकेऽर्थवादविशेषाणां प्रामाण्यं साध्यते, अपि तु प्रमाणानां सतां ब्रह्मणि प्रामाण्यमात्रसाधनम् । अनिर्धारितविषयविशेषं प्रामाण्यं कथं प्रसाधनीयमिति मावोचः, सर्वत्रैवानुयोगप्रसङ्गात् । सिद्ध एव प्रामाण्ये संशयपूर्वपक्षसिद्धान्तास्तदर्थविशेषेषु वर्तिष्यन्ते । तद्यदि विषयविशेषनियतमेव प्रामाण्यमिह साध्येत, कथं पुनस्संशयसंभवः? नन्वेवमपि विध्येकवाक्यतयाऽत्रार्थवादानां प्रामाण्यमुपपाद्यते, *विधिना त्वेकवाक्यत्वादित्यादिना, * तत्तु समन्वयादिति प्रवृत्तिनिवृत्तिपरत्वमन्तरेण स्वरूपे विश्रमस्साधयिष्यते ; अतः पूर्वापरविरोधो वा तेषामिहानिरूपणं वा प्राप्तमिति । मैवम् ; इह हि निष्प्रयोजनमृषावादरूपतयाऽर्थवादानामप्रामाण्ये प्रसक्ते सप्रयोजनसत्यार्थविषयतया प्रामाण्यं वक्तव्यम् । तत्र केषांचिद्विध्येकवाक्यतया स्तुत्याद्यर्थत्वेन केषांचित्स्वतः प्रयोजनभूतब्रह्मप्रतिपादनेनैव सार्थकत्वमिति विभ-

ज्योत्तरे वक्तव्ये गूढाभिप्रायस्सूत्रकारः प्रामाण्यं यावता सर्वत्र कथयितुं शक्यं तदिहासूत्रयत्। विध्येकवाक्यतया तावत्केषांचित्प्रामाण्यं वक्तव्यम्; इतरेषां तूपासनविध्येकवाक्यतया भिन्नवाक्यतया प्रामाण्यानुवचनम्। तत्र यद्येकहेलया वेदाप्रामाण्यवादी निराकर्तुं शक्यः, किमस्य सहसा ब्रह्मणोपदिष्टेनेति मन्वानो विध्येकवाक्यत्वमुखेन सार्थकतां समर्थितवान्। अतो न विरोध इति।

तदिहैवं पूर्वपक्षः—यद्यपि प्रमाणानां स्वतःप्राप्तं प्रामाण्यम्, शब्दार्थसंबन्धश्च स्वाभाविकः, पदानि च लोकोत्तरमर्थं प्रतिपादयितुं शक्नुवन्ति, वक्तृदोषोऽपि वेदे दुर्लभः; तथाऽपि तदेकदेशभूतेष्वर्थवादेषु प्रामाण्यं दुरुपपादम्, निष्प्रयोजनमृषावादप्रायत्वात्। तथा हि—*सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्, *स आत्मनो वपामुदक्खिदत्, *देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्, *वायुर्वै क्षेपिष्ठा देवता इत्येवमादीन्यर्थवादवाक्यानि किं विध्युद्देशेनैकीभवन्ति प्रमाणम्? उत पृथग्भवन्ति? नाद्यः, अनुपयोगात्। यदि हि विध्युद्देश एव स्वार्थं विदधीत पुरुषोऽपि तत एव प्रवर्त्स्यति, कृतमर्थवादैः। न ह्यमी करणेतिकर्तव्यतादिविधेयकोटिघटितं कंचिदर्थमुपस्थापयन्ति। न द्वितीयः, *आम्नायस्य क्रियार्थत्वात्। यद्यपि प्रमाणान्तराणि स्वविषयावबोधपर्यवसितानि प्रवृत्तिनिवृत्त्यनुपयुक्तमपि शिलाशकलादिकं बोधयन्ति, तथाऽप्यागमाख्येन प्रमाणेन प्रवृत्तिनिवृत्तिपर्यन्ताभिधायिना भवितव्यम्। अन्यथा वक्तृश्रोत्रोर्वचनश्रवणादिप्रवृत्तिवैयर्थ्यप्रसङ्गात्। न ह्यत्र गीतवच्छब्द एव स्वदत इति शृणोति। न च नाट्यवद्रसात्मतयाऽवदधते। अतः प्रमाणेन सता आगमेन श्रोतृप्रवृत्तिनिवृत्त्युपयोग्यर्थाभिधायिना भवितव्यम्। ततश्च भूतान्वाख्यानमात्रेष्वर्थवादवाक्येषु वायसरदनवाक्येष्विव क्व वा प्रवर्तेत? कुतो वा निवर्तेत? अतः, **अतदर्थानाम्**—प्रवृत्तिनिवृत्त्यन्वयविरहिणामर्थवादवाक्यानाम्। **आनर्थक्यम्**—निष्प्रयोजनत्वम्। तस्मादर्थवादवाक्यम् अनित्यमुच्यते। नपुंसकतया सामान्यवचनं सर्वार्थवादसंग्रहसूचनार्थम्। तन्मुखेन कृत्स्नवेदाक्षेपसूचनार्थं वा। एकदेशमुखेन कृत्स्नाक्षेपश्शारीरकत्रिपाद्यामिवात्रापि नानुपपन्नः। तत्र चोक्तं **दीपे**—*द्वितीयतृतीयचतुर्थपादेषु कानिचिद्वेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणीति तन्मुखेन सर्वाक्षेपमाशङ्क्य तान्यपि ब्रह्मपराणीत्युक्तम्—इति। नित्यत्वे वेदस्य प्रामाण्यं समस्ति, अनित्यत्वे वा पुंप्रत्ययाभावादप्रामाण्यमिति कार्योद्देशेन कारणमुक्तम्। इह चौपचारिकमेवानित्यत्वं परैरभ्युपगतम्। यथा भाषितम्—*यद्यपि नित्यानि, तथाऽप्यनित्यकार्यमपि कुर्वन्तीति। आह च **भवनाथः**—*नित्यं हि हेत्वनपेक्षं स्वरूपे, अन्यदपि हेत्वनपेक्षमर्थे गौणं नित्यं तन्नेत्यनित्यमिति। अध्याहारविपरिणामगुणकल्पनादिभिर्विधिपरत्वमाश्रीयेत, अव्यवस्थितिस्स्यात्। रुद्ररोदनवाक्ये हि शिष्टाचारोपन्यासाद्रुद्रवद्रोदितव्यमिति कवयेम। यद्वा महतामपि तथाविधं प्रमादं प्रकाश्य प्रयत्नेन वर्जनीयमिति। अतो यथारुचि कल्पनादव्यवस्था; अशक्यविधानता च। न हीष्टवियोगादिकमन्तरेण विधिमात्रप्रेरितेन रोदितुं शक्यम्; नच प्रजापतिवदात्मनो वपोत्खेदनम्, तस्याश्च स्वयमग्नौ प्रेरणम्, ततस्तूपरपशूत्थानम्, तेन च स्वयं यजनमित्यादीनीदानींतनेषु घटते; न च देवयजनाध्यवसानसमनन्तरं स्वेच्छया दिङ्मोहस्साधयितुं शक्यः। अत एवंजातीयकानि दूरं गत्वाऽपि नैरर्थक्यासिद्धमात्रपर्यवसितान्येव। तत्र यदि सिद्धमर्थं प्रमिमीमहि, ततः किम्? यदि च न, ततोऽपि वा किम्? किञ्च, प्रामाण्ये निश्चिते प्रयोजनवदर्थपर्यवसानकल्पनम्, तत्कल्पनेन तन्निश्चय इत्यन्योन्याश्रयणम्। न च सिद्धप्रतिपादने निष्प्रयोजने सति श्रुतहानेनाश्रूयमाणप्रयोजनवदर्थान्तरपरताक्लृप्तिर्युक्ता। यथोक्तं **यामुनाचार्यैः**—*न खलु काकावलोकनमनभिमतमिति कनकाव-

लोकनता कल्प्येतेति । न च प्रयोजनानुगुणा प्रमाणव्यवस्था ; प्रयोजनं हि प्रमाणानुगुणम्, स्वविषयावबोधपर्यवसायित्वात्सर्वप्रमाणानाम् । अन्यथोपेक्षादिफलेषु तृणकण्टकादिविषयेषु प्रमाणेषूपादानोचितार्थक्लृप्तिप्रसङ्गात् । न च तर्हि तृणादिप्रत्यक्षवदेव प्रामाण्यमस्तीति वक्तुं शक्यम्, पुरुषव्यापारनैरर्थक्यप्रसङ्गस्योक्तत्वात् । न च तत एव प्रसङ्गात्प्रयोजनविश्रमः, भ्रान्त्याऽपि तद्व्यापारोपपत्तेर्ध्वाङ्क्षदन्तेयत्तावाक्यस्येव प्रामाण्यस्थापनस्यैवायुक्तत्वात् । न च वाच्यम् स्वाध्यायविधिना कृत्स्नस्य वेदस्य पुरुषार्थाय नियम्यमानत्वादर्थवादेष्वपि प्रयोजनेन भवितव्यमिति । शक्यमेव हि विधिना प्रयोजनमुपादीयेत । न च सिद्धार्थज्ञानमात्रं प्रयोजनम्, वैषयिकज्ञानवत्स्वयं स्वादुत्वादर्शनात् । दर्शनेऽपि ज्ञानमात्रे प्रीत्युत्पत्तावर्थसत्यतायामनिर्बन्धात् । न चात्र कार्यदर्शनं क्लृप्तितश्शक्यत इत्युक्तम् । दृष्टार्थत्वासंभवे चाध्ययनस्यैव वरमदृष्टार्थत्वं कल्पयितुम्, न तु तद्बलेनाशक्यदृष्टक्लृप्तिः । अध्ययनविधिश्च नार्थज्ञानपर्यन्त इति साधितमादौ । अक्षरग्रहणस्य प्रयोजनवत्त्वमर्थवादभागानामर्थपरत्वाभावेऽपि पारायणाद्यदृष्टेनापि सिध्येत् । न च तत्र प्रामाण्यापेक्षा, हुमादिसमानयोगक्षेमत्वात् । यथा च हुमादीनां स्तोभाक्षराणामर्थज्ञानमन्तरेणापि ऋगाद्यभिव्याप्तसामभागपूरणेन सप्रयोजनता वक्ष्यते, एवमिहाप्यर्थवादानामर्थज्ञानेतरप्रयोजनवत्तायामध्ययनविधेः का हानिः ? न चैवमस्त्विति वाच्यम्, अपौरुषेयस्यानन्तस्य वाक्यराशेः प्रतीतिमुत्पादयतोऽप्यविवक्षितार्थत्वे शिष्टेऽप्यनाश्वासप्रसङ्गात् । भवतु वाऽध्ययनविधेर्दृष्टार्थत्वबलादसंभवद्दृष्टानामर्थवादानां स्वाध्यायबहिर्भावः । सन्ति चाख्यानरुचीनामुपाध्यायानां मन्दप्ररोचनार्थमालापाः । इदानीन्तनेष्विव ग्रन्थेषु परिग्राह्यतया प्रथितेन केनचित्प्रक्षेपाच्च तदुपज्ञं परिग्रहपारम्पर्योपपत्तिः । एतदपि सूचितम् ***तस्मादनित्यमुच्यत** इति । *तदेषाऽभ्युक्ता, *तदुक्तमृषिणेत्यादीनि चार्थवादवाक्यानि मन्त्रान् संवादयन्ति । अतोऽप्यवगच्छामो मन्त्रेभ्योऽर्वाचीनतामर्थवादवाक्यानाम् । अतः कृत्स्नस्य वेदस्यापौरुषेयत्वं प्रामाण्यं च दुर्वचमिति ॥ १ ॥

नचानर्थक्यमात्रादप्रामाण्यम्, अपि तु बाधाच्चेत्याह—

**34.** सू०—**शास्त्रदृष्टविरोधाच्च** ॥ १. २. २. ॥ (पू. २)

शास्त्रविरोधात् दृष्टविरोधाच्छास्त्रदृष्टविरोधाच्चेति प्रत्येकसमुदायपरमिदम् । द्वौ शास्त्रदृष्टविरोधौ परिहारसूत्रक्रमसंख्यानुरोधात् । शास्त्रविरोधस्तावत् *स्तेनं मनोऽनृतवादिनी वागित्यादिषु । यद्येतद्भूतान्वाख्यानमात्रम्, तदा विद्यमानत्वेऽपि नैरर्थक्यात्, अविद्यमानत्वे मृषावादरूपत्वात्, स्तेनं मनः, अनृतवादिनी वाक्, अतः स्तेयादिकं न कर्तव्यमित्यनन्वयात् कर्तव्यमित्येव कल्प्येत । सर्वशरीरेषु चेष्टायां वाङ्मनसयोः प्रधानत्वादितरभूतेन्द्रियैरपि तच्चरितमनुवर्तितव्यमिति वा, निमीलनोन्मीलनादिवत्स्वभावस्य दुरतिक्रमत्वात् तत्करणिना पुरुषेणापि तत्तन्त्रवाहिना भवितव्यमिति वा सः । तथा च स्तेनानृतप्रतिषेधकशास्त्रेण विरोधः । न च षोडशिग्रहणादिवद्विकल्पः, प्रत्यक्षान्निषेधात्कल्प्यस्य विधेर्दुर्बलत्वेनातुल्यत्वात् । रागप्राप्तप्रतिविध्यनुपजीविनो निषेधस्यैव बलीयस्त्वात् । स्तेयानृतयोश्च रागप्राप्तत्वात्, तत्र चानपेक्षिततया विधेरनुदयात् । नियमादेश्चात्रासंभवात् । अतोऽत्र विधिकल्पने शास्त्रविरोधस्सौत्रः, विध्यसंभवस्त्वर्थसिद्ध इति । दृष्टविरोधस्तु *तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः....तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूम इत्यादिषु स्पष्टः, दिवानिशमुभयोरुपलब्धेः । यच्चानेन समर्थ्यते—अस्माल्लोकादुत्क्रम्याग्निरादित्यं गत आदित्यश्च तमिति, तदपि हेत्वसिद्धेर्मृषावादः । अत एव तन्मूला अग्निसूर्ययोर्नक्तंदिवं व्यवस्थितज्योतिष्ट्वेन स्तुतिरपि मृषा, न ह्यसत्या स्तुतिरुपपद्यत इति ।

अथ शास्त्रदृष्टविरोधः—* न चैतद्विद्मोऽब्राह्मणा वा स्मो वयं ब्राह्मणा वेति । [न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वेति] ब्राह्मण्यं विशिष्टमातापितृसंबन्धविशेषरूपोपाधिः, स च क्वचिद्दृष्टः क्वचिदनुमेय इत्येके । मातापितृसंबन्धविशेषसहकृतचक्षुर्ग्राह्यो जातिविशेष इत्यपरे । अत उभयेषामप्येतद्दृष्टविरोधोदाहरणम् । वयं तु ब्रूमः—शास्त्रविरोधस्यैवैतदुदाहरणमिति । नहि वयं गवादिवद्ब्राह्मणक्षत्रियादिविभागमापाततोऽध्यक्षयामः, न च रत्नतत्त्वमिवाभ्यासपाटवादिना । न च देशान्तरागतमुपदेशात्पूर्वमयं ब्राह्मण इति निश्चिनुमः । न च ब्रह्मसूत्रादिलिङ्गभेदान्निश्चयः, दुष्टशूद्रादिभिर्व्यभिचारात् । अत एव न लिङ्गविशेष एवैतत् । एतेनाचारविशेषो ब्राह्मण्यमित्यपि दत्तोत्तरम् । * चण्डालमपि वृत्तस्थम्....तं देवा ब्राह्मणं विदुः इत्यादि तु क्रियास्तुतिपरमेव, अन्यथा सर्वसंक्षोभप्रसङ्गात् । किंच, ब्राह्मण्यादिजातिविशेषमधिकृत्य क्रियाविधिः, सा चेत्तत्, आत्माश्रयस्स्यात् । एतेनाचारविशेषाभिव्यङ्ग्यत्वमपि निरस्तम् । अथ विशिष्टमातापितृसंबन्धरूपम् ? किं तद्वैशिष्ट्यं नाम ? न तावदाचारादिकम्, उक्तदोषानतिक्रमणात् । नापि मातापितृब्राह्मण्यमेव, पूर्वपूर्वमातापितृब्राह्मण्यनिरूपणेऽपि पूर्वपूर्वमातापितृब्राह्मण्यनिरूपणसापेक्षत्वादिनाऽनवस्थानात् । मातापितृब्राह्मण्यस्योपदेशसिद्धत्वान्नानवस्थेति चेन्न ; तद्ब्राह्मण्यमपि ह्युपदिश्यमानं ब्राह्मणेन ब्राह्मण्यामुत्पत्तिरूपम्, ततश्चोत्पत्तिमात्रमतिप्रसङ्गि । तदतिरिक्तं तु ब्राह्मणशब्दनिमित्तं पूर्वपूर्वेष्वपि न सिध्यतीति निरालम्बनस्तद्व्यवहारः । अथ ब्राह्मण्याख्यो जातिविशेषो मातापित्रोः प्रत्यक्षः, तत्संबन्धज्ञानेन पुत्रे तदभिव्यक्तिरिति । तदपि न, मातापितृब्राह्मण्येऽपि तन्मातापितृब्राह्मण्यसापेक्षत्वेनानवस्थानात् । पूर्वपूर्वप्रत्यक्षमूलोपदेशपरम्परया न दोष इति चेन्न ; उपदेशपरम्परातिरिक्तप्रत्यक्षपरम्परायां प्रमाणाभावात् । न हि विशिष्टमातापितृप्रसूतोऽयमित्युक्तेऽपि तद्वाक्यार्थनिश्चयादधिका क्षत्रियादिव्यावृत्तिधीरध्यक्षा जायते । यस्तु विशिष्टमातापितृप्रसूतत्त्वाद्ब्राह्मणोऽयमिति व्यवसायः, सोऽपि ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मण इति सामान्योपदेशमूल इति नाध्यक्षमूलः । सङ्करजातानां तूत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वाऽन्यवर्णतापत्तिरित्यत्र त्वागम एव शरणमिति सर्वैरभ्युपगतम् । तथा च यथा तृणारणिमणिभ्यो जायमानस्याशुशुक्षणेः कारणवैषम्यपरिज्ञानेऽप्यवान्तरजातिरप्रत्यक्षा, एवमिहापि । तत्रापि चेज्जातिभेदः प्रत्यक्ष इष्येत, अनयैव दिशा द्रव्यादीनां धर्मत्वं प्रत्यक्षं भविष्यति देवानांप्रियस्य । एतेन * न हि यद्गिरिशृङ्गमारुह्य गृह्यते तदप्रत्यक्षमित्यादीनि स्त्रीपुंस्कोकिलविभागोदाहरणविषयाणि विषयवाक्यानि निरस्तानि । किंच यदि मातापितृसंबन्धविशेषस्तदभिव्यङ्ग्या वा जातिर्ब्राह्मण्यादि, ततः कथं परमपुरुषमुखबाह्वादिजातानामन्येषां च मानसानामगस्त्यवाल्मीकिद्रौपदीधृष्टद्युम्नादीनामयोनिजानां जातिविशेषा व्यवतिष्ठेरन् । नच ते न सन्ति, प्रत्यक्षाद्यविरुद्धविषये अर्थवादादेरितिहासादेश्च प्रामाण्यस्याभ्युपगमात् । अतो योनिजायोनिजसाधारणमन्यदेव ब्राह्मण्यादिकम् । यथा गोमयप्रसूते वृश्चिकप्रसूते च वृश्चिकत्वमविशिष्टम्, तथा योनिजेष्वयोनिजेषु च ब्राह्मण्यादिकम् । अनियतहेतुकं च ब्राह्मण्यादि सङ्करेषु सप्तमे पञ्चमे वाऽन्यतरवर्णोत्पत्तौ दृष्टम् । तच्च ब्राह्मण्यादिकं सर्वं प्रसवितुः परस्य पुंसः प्रजापतिप्रभृतीनामृषीणां च प्रत्यक्षम्, इतरेषां तु प्राक्तनप्रत्यक्षादिसिद्धगोत्रप्रवराद्युपदेशपारम्पर्यनियतसंबन्धावसेयमित्यौपदेशिकम् । यथा स्मरन्ति—

* वर्णाश्रमोक्तमन्त्र....नताबुद्धिसमन्विते । कर्मण्ये मिथुने जातो द्विजोऽन्यस्सङ्करस्स्मृतः ॥ इति ।

एतच्चास्मदादीनां योनिजशरीरेषु जातिविशेषज्ञापनाय लक्षणकथनं, न पुनः प्रमाणशतप्राप्तमयोनिजवर्गं व्यवच्छेत्तुं क्षमम् ।

ननु काऽसौ ब्राह्मण्यादिजातिः ? न तावत्संस्थानातिरिक्ता पराभिमता जातिर्भवद्भिरभ्युपगम्यते । यथोक्तं भाष्ये—

* संस्थानातिरेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात्तावतैव गोत्वादिजातिव्यवहारोपपत्तेरतिरेकवादेऽपि संप्रतिपन्नत्वाच्च संस्थानमेव जातिरिति । न चात्र मनुष्यत्वातिरिक्तं क्षत्रियादिव्यावृत्तं ब्राह्मणादिषु संस्थानं पश्यामः । न च निपुणनिरूपणेऽपि दोषधातुषु रूपादिषु वा गुणेषु भयादिषु वा विकारेषु वैषम्यमुपलभ्यते । न च आयुर्वेदादिषु भेषजादिविधिभेदः ; अतोऽध्यवस्यामः साङ्केतिक एवायं ब्राह्मणादिविभाग इति । अपि च,

अनादौ खलु संसारे दुर्वारे मकरध्वजे । कुले च कामिनीमूले का जातिपरिकल्पना ॥

तस्मादनुपलम्भादनुपपत्तेश्च नास्ति ब्राह्मण्यादिजातिरिति । अविदितागमसिद्धान्तानामिदं चोद्यम् । शरीरारम्भकद्रव्यसमवेतानां सत्त्वरजस्तमसां तारतम्यविशेष एव ब्राह्मण्यादिजातिरिति महर्षयो विभजन्ते । एतदपि गुणतारतम्यं तत्तत्पुरुषकर्मतारतम्यनिबन्धनत्वान्न निर्मूलम् । अन्तःकरणगुणतारतम्यं तद्विरुद्धमपि न जात्यादिनियामकम् । दर्शनस्पर्शनाद्यनुज्ञापरिहारावपि शारीरगुणतारतम्यनिबन्धनावेव । पुण्यापुण्य [नियामकं] हेतुकं वृत्त्यादिभेदनियामकं वर्णानां गुणतारतम्यं **श्रीमद्गीताभाष्ये**—

* ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप । कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥

इत्यत्र स्पष्टं व्याचकार—*ब्राह्मणक्षत्रियविशां स्वीयो भावस्स्वभावः, ब्राह्मणादिजन्महेतुभूतं प्राचीनं कर्मेत्यर्थः ; तत्प्रभवास्सत्त्वादयो गुणाः ; ब्राह्मणस्य स्वभावप्रभवो रजस्तमोऽभिभवेनोद्भूतस्सत्त्वगुणः, क्षत्रियस्य स्वभावप्रभवस्तमस्सत्त्वाभिभवेनोद्भूतो रजोगुणः । वैश्यस्य स्वभावप्रभवस्सत्त्वरजोभिभवेनोद्रिक्तस्तमोगुणः, शूद्रस्य स्वभावप्रभवस्तु रजस्सत्त्वाभिभवेनोद्रिक्तस्तमोगुणः । एभिस्स्वभावप्रभवैर्गुणैस्सह प्रविभक्तानि कर्माणि शास्त्रैः प्रतिपादितानि ; ब्राह्मणादय एवंगुणकाः, तेषां चैतानि कर्माणि, वृत्तयश्चैता इति हि विभज्य प्रतिपादयन्ति शास्त्राणीति । न चावयवसन्निवेश एव सर्वत्र जातिरित्यस्माभिरङ्गीकृतम् ; यथोक्तं भाष्य एव—*संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तु संस्थानमनुसन्धेयमिति । या च कामिनीमूलत्वादिरुपप्लवाशङ्का, सा सर्वप्रवृत्तिविघातिनी, अतिशङ्कायास्सर्वत्र सुलभत्वात्, दर्शनस्य चाविशिष्टत्वात्, अनुमानस्य चागमादिविरोधे विपक्षे बाधकाभावे चानुदयात् । नच स्त्र्यपराधमात्रेण पुरुषस्यान्यप्रसूतत्वमनुमातुं शक्यम् ; अपराधिनीनामपि भर्तृनिमित्तप्रसवस्यापि दर्शनेनानैकान्त्यात् । सवर्णेन चान्येन संयोगे सङ्कराभावात् । सङ्करजातानामप्युत्कर्षा [दीनां] दिना सप्तमे पञ्चमे वा वर्णान्तरापत्तिस्मरणाच्च । किंचेदमुपप्लवचोद्यं अर्धलोकायतिकमतमिव सेश्वरमत्यन्ताय नास्कन्दति । तथा हि—भगवान् पुरुषोत्तमः स्थावरजङ्गमात्मकं सर्वं जगदुपसंहृत्य पुनस्सृष्टिकाले तत्तत्कर्मानुरूपपरिणाममापन्नैरचिदंशैर्ब्राह्मणादीन्सृजति । तत्पारम्पर्यप्रसूताश्च ब्राह्मणादयो भवन्ति । एवमनुपप्लुत एवायं विभागो युगान्तरेषु । अद्यापि च विशिष्टदेशेष्वनुवर्तते । युगविपर्यासादिभिरुपप्लुतांश्च सर्वानुत्साद्य पुनः कृतयुगे महर्षिप्रभृतिभिश्शुद्धं जातिविभागं प्रवर्तयति । एवं सर्वोपसंहारे पुनः कल्पान्तेऽपीति संसारानादित्वेऽपीश्वराभिसन्धिवशेन शुद्धसन्तानप्रवर्तनात्सर्वत्रोपप्लवानुमानं दूरापाक्रान्तम् । यश्च महर्षिप्रभृतिषु प्रमादः, स तु प्राक्तनैः पश्चात्तनैर्वा तपःप्रभृतिभिरनुपप्लुत इति प्राञ्चः । अत ईश्वरमहर्षिप्रभृतीनां प्रत्यक्षं ब्राह्मण्यादिकम् । अस्मदादीनां चाबाधितस्मृत्युपदेशपरम्पराधीनलक्षणविशेषसिद्धमिति ।

अथायमपरश्शास्त्रदृष्टविरोधः—*को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेतीति । अत्र प्रश्नार्थत्वे नैरर्थक्यात्प्रतिषेधपरिशेषे शास्त्रदृष्टेन परलोकादिना विरोधः । पारलौकिकप्रतिषेधे स्वर्गार्थानां चोदनानामप्रामाण्यं स्यात्,

ताश्चेत्प्रमाणं तद्विरोधादर्थवादाप्रामाण्यम् । नच विकल्पः, अतुल्यार्थत्वात्, सिद्धे च तदसंभवादिति । शास्त्रदृष्टविरोधोऽपि मुखभेदेन शास्त्रदृष्टविरोध एव ॥ २ ॥

इतश्च—**35.** सू०—**तथा फलाभावात्** ॥ १. २. ३. ॥ (पू. ३)

येष्वर्थवादेषु फलं निर्दिश्यते, न तत्तथा दृश्यते । समुच्चयार्थो वा तथाशब्दः । यदेतद्गर्गत्रिरात्रब्राह्मणं प्रकृत्याधीतम्—* शोभतेऽस्य मुखं य एवं वेद, * आस्य प्रजायां वाजी जायते इति, किं तत् सिद्धसङ्कीर्तनम्? उताध्ययनफलोक्तिः? नाद्यः, तदानीं विद्यमानविषयत्वे नैरर्थक्यात्; अविद्यमानविषयत्वे मृषावादत्वात् । न द्वितीयः, विध्यनुवादविकल्पानुपपत्तेः । न ह्यत्र फलविधिः, द्रव्यसंस्कारादिषु फलाभावस्य वक्ष्यमाणत्वात् । अत एव न तदनुवादः असदनुवादत्वापातात् । अत एव न स्तुत्यर्थताऽपि ॥ ३ ॥

नार्थवादिकफलस्याभावमात्रम्, केषुचित्तदभ्युपगमे दोषश्चास्तीत्याह—

**36.** सू०—**अन्यानर्थक्यात्** ॥ १. २. ४. ॥ (पू. ४)

अन्यानर्थक्यप्रसङ्गादित्यर्थः । * पूर्णाहुत्या सर्वान्कामानवाप्नोति, * सर्वांल्लोकान्पशुबन्धयाज्यभिजयति [पशुबन्धयाजी सर्वान् लोकानभिजयति] * तरति मृत्युम्, *तरति पाप्मानम्, *तरति ब्रह्महत्यां योऽश्वमेधेन यजते, य उ चैनमेवं वेद इत्यादिषु यदि पूर्णाहुत्यादिभिस्सर्वकामादिसिद्धिः, अन्येषामग्निहोत्रसोमाश्वमेधादीनामानर्थक्यं स्यात्; पूर्णाहुत्यादिव्यतिरेकेण तेषामननुष्ठानात् । यानि पुनरेकफलसाधनान्यपि परस्परनिरपेक्षाणि कर्माण्युपासनानि वा तत्र महीधरस्थमध्वर्थं मार्गभेदेन गमनवद्यथारुचि परिग्रहान्नानर्थक्यम् । अनित्यफलेषु देशकालस्वरूपाद्यतिशयापेक्षया समुच्चयोऽपि स्यात्; यथा शारीरके साधनलक्षणे वक्ष्यते—* काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावादिति । इह तु न विकल्पः, पूर्णाहुत्याद्यकरणे तदुत्तरकर्मानधिकारात् । नापि समुच्चयः, प्रथमेनैव सर्वफलसिद्ध्या तदुत्तरनैरर्थक्यात् । न च फलविशेषेणोत्तरेषां सार्थता, अविशेषश्रवणे कर्मविशेषेष्वप्रत्यक्षस्य सतः फलविशेषस्य कल्पने प्रमाणाभावात् । असता च स्तुतिर्न संभवतीत्युक्तम् ॥ ४ ॥

इतश्च—**37.** सू०—**अभागिप्रतिषेधात्** ॥ १. २. ५. ॥ (पू. ५)

प्रतिषेधाभागिनः प्रतिषेधात् । प्रसक्तं हि प्रतिषेधभागि भवति । न चान्तरिक्षे दिवि वा चयनं प्रसक्तम्, येन * न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवीति प्रतिषिध्येत । तेन नैष नित्यानुवादः, अक्रियार्थत्वेनानर्थक्यात् । नापि पर्युदासः, पर्युदासितव्याभावादेव; नान्तरिक्षे न दिवि चेति यद्विध्यर्थं पर्युदस्यते, तच्च पृथिवीचयनं नित्यप्राप्तमिति न विधेयम् । विधीयमानमपि न पृथिव्यामग्निश्चेतव्य इत्येव यदि विवक्षा, तदा चयनविधिना बाधः । न चानेन तद्बाधः, अरागप्राप्तेः । विधिप्राप्ते तु तदुपजीविनोऽस्यैव दुर्बलत्वात् । न ह्यत्र विकल्पसंभवः, विधेः कामसंयोगेन चाग्नेः पाक्षिकत्वं सिद्धमिति विकल्पस्य व्यर्थत्वात् । तत्स्वीकारस्य च पाक्षिकबाधगर्भतयाऽष्टदोषदुष्टत्वाच्च । नच चयनफलं तदचिन्वानस्यापि स्यादिति संभवति । नापि चयननिषेधेन चयनप्ररोचनाबुद्धिः । अतस्स्वात्मानं विध्यन्तरं चाकुलयद्वाक्यमिदमप्रमाणमेव ॥ ५ ॥

इतश्च—**38.** सू०—**अनित्यसंयोगात्** ॥ १. २. ६. ॥ (पू. ६)

पूर्वस्मिन्नधिकरणे वेदप्रामाण्यं सिद्धं कृत्वैवानित्यसंयोगस्य श्रुतिसामान्यमात्रेण परिहार उक्तः; इह तूक्तैर्हेतुभिरर्थवादांशस्याक्षेपे तदुपष्टम्भकतया पुनरुत्थाप्यते। यद्वा, प्रक्षिप्तस्य पुनरुत्थापनं मन्दम्। न चार्थवादेष्वधिकाशङ्काऽस्ति। सत्यपि तत्रैव परिहर्तव्या। असाधारण्येन च तत्रैव व्याख्यातमस्माभिः। अतोऽन्यथा व्याकुर्मः। उक्तैर्हेतुभिर्भवत्वनित्यमर्थवादवाक्यजातम्, तथाऽपि चोदनाभागे किमायातमिति यदि कश्चिद्ब्रूयात्तं प्रत्याह—* **अनित्यसंयोगादिति**। उक्तप्रकारेणानित्यलक्षणापन्नैरर्थवादवाक्यैः संयोगादन्यत्राप्यनाश्वास इति। अथवा विध्यर्थवादयोर्भिन्नवाक्यतापक्षे ह्यानर्थक्यादिदूषणमुक्तम्। अथैकवाक्यतापक्षं प्रतिक्षिपति—* **अनित्यसंयोगादिति**। नित्यसंयोगाभावोऽनित्यसंयोगः। न हि विध्यर्थवादयोर्नित्यसंयोगः, परस्पराकाङ्क्षायां हि तयोस्संबन्धनियमस्स्यात्। न चात्र साऽस्ति, अर्थवादान्वयमन्तरेण विध्युद्देशस्य प्रवर्तकत्वशक्तेः; यथाऽर्थवादरहितस्य। न ह्यर्थवादस्सर्वेषु विधिषु सार्वभौमः, *वसन्ताय कपिञ्जलानालभेत इत्यादिषु तदभावात्प्रधानविधिष्वपि। न चाङ्गाङ्गिनोरन्योन्यार्थवादेन सार्थकत्वम्; अन्यविषयप्ररोचनाया अन्यत्र प्रवृत्तिहेतुत्वाभावात्। अर्थवादानां च भूतान्वाख्यानमात्रविश्रान्त्या निराकाङ्क्षत्वात्। प्रयोजनार्थविध्यनुधावनस्य प्राक्तनदूषणम्। विध्युपयुक्तस्य च फलकरणादेरन्यतमस्याप्यनभिधानात्। प्रवृत्तेश्च स्तुत्याद्यपेक्षानियमाभावात्। अशब्दाच्च स्तुत्यादेः कल्पनेऽन्योन्याश्रयणात्, एकवाक्यतया स्तुतिनिन्दात्वक्लृप्तिः, स्तुतिनिन्दात्वेन चैकवाक्यता। न च प्रमाणान्तरेणान्यत्र प्रसिद्धिः, येन नान्योन्यापेक्षा स्यात्। अतः प्रत्यक्षेण विध्युद्देशेनैकवाक्यत्वासंभवादध्याहारादिभिरन्यत्र कल्प्यमानत्वेऽव्यवस्थितिप्रसङ्गात्, यथाश्रुति गृहीतेऽर्थे नैरर्थक्यात्, क्वचित्प्रमाणान्तरबाधेनासदर्थत्वात्, असता च स्तुत्यसंभवात्, अर्थवादवाक्यान्यप्रमाणम्। एतदुक्तं भवति—केचिदर्थवादाः कुण्डमजाजिनं पिण्ड इत्यादिवदाकाङ्क्षाविरहादनन्विताः, यथा * यजमानः प्रस्तरः इत्येवमाद्याः; अबोधका ह्येते। केचित्तु * अग्निरुष्णः, आपो द्रवा इत्यादिवत् बुद्धबोधकाः, यथा * आपो वै शान्ताः इत्येवमादयः; अनपेक्षिता ह्येते। केचित्तु भ्रान्तविप्रलम्भकवाक्यवद्विपरीतबोधकाः, यथाऽऽत्मवपोत्खेदनग्रावप्लवनादिविषयाः; बाधिता ह्येते यथायथं प्रत्यक्षाद्यैः। सर्वेऽप्येते विधौ न पर्यवस्यन्ति। अक्रियार्थस्वार्थमात्रप्रतिपादनेन च नोपयुज्यन्ते। तदेवमबोधनाद्बुद्धबोधनाद्विपरीतबोधनादनुपयुक्तबोधनाच्चार्थवादांशस्य प्रामाण्यं दुर्वचमिति॥ ६॥

तत्र सिद्धान्तमाह—

**39. सू०—विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः॥ १. २. ७.॥** (सि. १)

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। विधिः प्रेरणात्मा लिङाद्यर्थविशेषः। तथा चानुशिष्यते—* विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् इति। विधिः—प्रेषणमिति च व्याचख्युः। लिङादिस्तु तत्प्रतिपादनात्परम्परया विधिः। तेन लिङादिनाऽवयवभूतेन समुदायो विध्युद्देशो लक्ष्यते। वेदे वक्तुरभावात्कथं प्रेषणम्? इत्थम्; नित्या एव हि वेदाः परमपुरुषप्रशासनरूपा इति प्रागेव स्थापितम्। तत्र प्रेषणं शाब्दमर्थलब्धं वेत्येतावदेव चिन्त्यम्। तत्र समभिव्याहृतनिमन्त्रणादिसमानयोगक्षेमतया विधिशब्दनिर्दिष्टस्य प्रेरणस्य शब्दवाच्यत्वम्। तथा च साङ्ख्याधिकरणभाष्यम्—* स्वशासनावबोधिशास्त्रं च प्रदिश्येति। अत्र शासनं हि शास्त्रेणावबोधनीयमुक्तम्। शासनमेव हि प्रेषणम्। अयमेव च विधिशब्दार्थो वेदानामभिमत इति। परेऽपि केचिदनुवदन्ति। **तत्त्वरत्नाकरकारैश्चोक्तम्।** एवं च प्रेषणे शाब्दे तस्य निर्विषयस्य बोधयितुमशक्यत्वात्, धात्वर्थस्य कर्तव्यत्वमप्यध्यवसितमेव। अथापि प्रेषण-

विषयस्य धात्वर्थस्य साध्यत्वाभिधानं न केवलस्य। तदभिप्रायेण शारीरकाद्ये भाष्यम्—* विधिवाक्येषु धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धं लिङादेर्वाच्यमित्यध्यवसीयत इति। एतदेव च **वेदार्थसंग्रहे**ऽप्युक्तम्—* लिङादेः कोऽयमर्थः परिगृहीतो भवति? * यज देवपूजायामिति देवताराधनरूपयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयोऽभिदधतीति न किञ्चिदनुपपन्नम्। कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसंबन्धप्रकारो हि वाच्यः। भूतवर्तमानतादिमन्ये वदन्ति। लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्तीति। तत्रैव **द्रमिडभाष्य**मुपात्तम्—* स्वशासनानुवर्तिनं ज्ञात्वा कारु [ण्यात्स भगवान् वर्धयेत] ण्यस्वभावाच्च वर्धयेत विद्वान् कर्मदक्षः—इति। अनन्तरं च भगवद्गीतायामेवायमर्थो दर्शितः—

* ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः। श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः॥
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्। सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः॥

इति स्वाज्ञानुवर्तिनः प्रशस्य विपरीतान् विनिन्द्य, पुनरपि स्वाज्ञानुपालनमकुर्वतामासुरप्रकृत्यन्तर्भावमभिधायाधमा गतिश्चोक्ता इति। यत्तु **दीपे** कर्त्रधिकरणे प्रोक्तम् * यजेतोपासीतेति हि कर्तृलकारः, अतः कर्तारमेव बोधयति शास्त्रमिति; तदात्मनः कर्तृत्वं श्रुतिसिद्धमित्येतदर्थम्, न तु लिङादिप्रत्ययवाच्यविशेषनिष्कर्षणपरम्। यद्वा—यजेतेत्यादौ स्वव्यापारसाध्ययागादिविशिष्ट इति कर्तृप्राधान्येन बोधनमभिप्रेतम्, कर्ता चाख्यातान्तरसाधारणत्वान्न लिङादेर्विशेषतोऽर्थः। एवम्—* स्वर्गकामो यजेते [त्येवमादिषु] त्यादिषु लकारवाच्य [चक] कर्तृविशेषसमर्प [णपराणां] काणां स्वर्गकामादिपदानां नियोज्यसमर्प [णपरत्वं] कत्वं शब्दानुशासनविरुद्धमिति **वेदार्थसंग्रहो**ऽपि। इत्थं प्रेषणस्य शाब्दत्वपक्षे निर्वाहः। गम्यमानत्वपक्षेऽप्येषां ग्रन्थानां न कश्चिद्विरोधः। अनुशासनं तु कथंचिन्नेयम्। अतो विधिः प्रेषणम्, तदर्थत्वाल्लिङादिरिह विधिः। यद्वा विधीयते, कर्तव्यतया बोध्यते विशिष्टो यागादिरनेनेति चोदनावाक्यमेव विधिः। स्वर्गकामस्साध्ययागादिविशिष्ट इति हि विध्युद्देशार्थः। अतश्चोदनावाक्येनार्थवादानामेकवाक्यत्वात्, अर्थवादाः, विधीनाम्, स्तुत्यर्थेन स्युः। स्तुत्या निन्दाऽप्युपलक्षिता। विधिनेत्युपक्रम्य विधीनामिति बहुवचनं विध्यन्तर्गतेन येनकेनचिदंशेन स्तावकतयाऽन्वयद्योतनार्थम्।

एतदुक्तं भवति। यदुक्तं विध्युद्देशेनैकवाक्यतया चार्थवादानां प्रामाण्यं न सिध्यतीति। तत्र तिष्ठतु तावत् प्रादेशिकी स्वावसरसाध्या भिन्नवाक्यता। सामान्येनैकवाक्यतायां तावदानर्थक्यं न पश्यामः, स्तुत्यादिमुखेन सप्रयोजनत्वात्। तत्र यान्यसंभवत्स्वार्थानि दर्शितानि तानि विचारयिष्यामः। यानि पुनरविरुद्धस्वार्थानि तानि तावदजहत्स्वार्थानि स्तावकतयैकवाक्यत्वं लभन्ते। यथा * वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीत्यादि। इह किल राजसेवादिवाक्ये राजगुणवर्णनवद्देवपूजाविधायिनि वाक्ये देवतास्तुतिर्लोकव्युत्पत्तिप्रकारानतिक्रमेण समन्वेतीति सांप्रत्ययिकोऽयं पन्थाः। क्षिप्रदेवताकं च कर्म क्षिप्रफलदं भवतीति कर्म प्ररोचितं भवति। यद्यपि विधिबलादेव पुरुषः प्रवर्तते, तथाऽप्येवमर्थवादैः प्ररोचितं कर्म शीघ्रमनुष्ठानाय घटत इत्यपि लोकप्रसिद्धम्। ततश्च यत्र सन्त्यर्थवादास्तत्प्ररोचितं कर्म कर्तव्यम्; यत्र न, तत्र विधिमात्रेणेत्यपि न दोषः। न चात्र स्तुतिपरत्वेऽर्थवादानां स्वार्थप्रहाणम्, स्वार्थेषु तदुपयोगिषु तदयोगात्। यथा ऋध्येयं गौः, इयं हि संपन्नक्षीरेत्यादिषु। अबोधनं विपरीतबोधनं च सिंहो देवदत्त इत्यादिवदुपचारवृत्त्या परिहृतम्। लोकोत्तरेषु प्रागुक्तनयेन यथाश्रुतम्, वैपरीत्याभावाच्च। बुद्धबोधनं तु प्ररोचनार्थानुवादतया। इति संग्रहः।

इदं च सर्वं शारीरकदेवताधिकरणे भाष्यकारैरेव स्पष्टमुक्तमिति तदेवात्र लिख्यते—* कर्मविधिशेषभूतमन्त्रार्थवादेष्वपि * वज्रहस्तः पुरन्दरः, * तेनेन्द्रो वज्रमुदयच्छदित्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव । न चानुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तराविवक्षा शक्यते वक्तुम्; स्तुत्याद्युपयोगित्वात्, तेन विना स्तुत्याद्यनुपपत्तेश्च । गुणकथनेन हि स्तुतित्वम् । गुणानामसद्भावे स्तुतित्वमेव हीयेत । न चासता गुणेन कथितेन प्ररोचना जायते । अतः कर्म प्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः । मन्त्राश्च कर्मसु विनियुक्तास्तत्र तत्र किञ्चित्करत्वायानुष्ठेयमर्थं प्रकाशयन्तो देवतादिगतविग्रहादिविशेषमभिदधत एव तत्र किंचित्कुर्वन्ति । अन्यथेन्द्रादिस्तुत्यनुपपत्तेः । न च निर्विशेषा देवता धियमधिरोहति । तत्र प्रमाणान्तराप्राप्तान्गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति, गुणविशिष्टं वा प्रकाशयन्ति, प्राप्तांश्चानूद्य तैः कर्मप्ररोचनप्रकाशने कुर्वन्ति । विरुद्धत्वे तु तद्वाचिभिश्शब्दैरविरुद्धान् गुणान् लक्षयि [त्वोप] त्वा कुर्वन्ति । कर्मविधेश्च देवताया ऐश्वर्यमपेक्षितमेव । कामिनः कर्तव्यतया कर्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तरभाविनः फलस्य स्वर्गादेस्साधनमपेक्षते । मन्त्रार्थवादयोश्च * वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति, * यदनेन हविषाऽऽशास्ते, तदश्यात्तदृद्ध्यात्, तदस्मै देवा राधन्तामित्यादिषु देवतायाः कर्मणाऽऽराधितायाः फलदायित्वं तदनुगुणं चैश्वर्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते—इति । **वेदार्थसंग्रहे**ऽप्युक्तम्—* सर्वो ह्यर्थवादभागो देवताराधनभूतयागादेः साङ्गस्याराध्यदेवतायाश्चादृष्टरूपान् गुणान् सहस्रशो वदन् कर्मणि प्राशस्त्यबुद्धिमुत्पादयति । तेषामसद्भावे प्राशस्त्यबुद्धिरेव न स्यादिति कर्मणि प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव बोधयति, इत्यनयैव दिशा सर्वे मन्त्रार्थवादगता ह्यर्थास्सिद्धा इति ॥ ७ ॥

अथ स्यात्, केचिदुपाध्याया मन्दप्ररोचनौत्सुक्यात् स्वयं चाख्यानरुचित्वादर्थवादान् प्रक्षिपेयुः; तन्मूलं च पारम्पर्येण पठनं स्यात्; वक्तृप्रत्ययाभावाच्च न प्रामाण्यम्, पौरुषेयापौरुषेययोश्च नैकवाक्यत्वमिति; तत्राह—

**40. सू०—तुल्यं च साम्प्रदायिकम् ॥ १. २. ८. ॥** (सि. २)

चश्शङ्कानिवृत्त्यर्थः । यद्वा विध्येकवाक्यतया सह सांप्रदायिकतुल्यत्वं समुच्चिनोति । संप्रदायप्रयोजकं सर्वं विधिभागेन तुल्यमर्थवादानाम् । न ह्यनादिनिधनाविच्छिन्नसंप्रदायतयाऽनन्तैरध्येतृभिरभ्यस्यमाने स्वरादिमात्रान्यथाकरणेऽपि बहुभिर्निवार्यमाणेऽर्थवादांशे प्रक्षेपसंभवः । अन्यथा विधिष्वप्यनाश्वासः । समं चास्मर्यमाणकर्तृकत्वं विध्यर्थवादयोः । न चार्थवादानवधूय स्वाध्यायोऽध्येतव्य इत्युच्यते । न च तथा प्रेक्षावद्भिरप्यनुष्ठीयते । अध्यायानध्यायाचार्योच्चारणानूच्चारणशिष्याचार्यभावादिस्तुल्य एवार्थवादभागेऽपि । न च निरर्थके क्वचिदेवमादरस्संभवति । अविघ्नार्थाश्चैते नियमाः, अध्ययनसंबन्धस्मृतेस्सन्निहितप्रयोजनवदध्ययनपरित्यागे हेत्वभावात्; तत्र चाविघ्नस्यापेक्षितत्वात्; दृष्टे संभवत्यदृष्टक्लृप्त्ययोगात्; क्रतुसाधनत्वरूपेण नियमेऽविदूरत्वापकारित्वप्रसङ्गाच्च । न च निरर्थकेषु अविघ्नापेक्षा, विघ्न एव हि तत्र वरम् । अतोऽनादिभिरर्थवद्भिरर्थवादैर्भवितव्यमिति ॥ ८ ॥

एवं विध्यर्थत्वे समर्थिते विधिविरोधस्य शीघ्रपरिहरणीयत्वात्तदभिप्रायेण च दूषणोद्देशक्रमात् शास्त्रदृष्टविरोधादित्यत्र शास्त्रविरोधं तावत्परिहरति—

**41. सू०—अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधस्स्यात्, शब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ १. २. ९. ॥** (सि. ३)

चस्तादर्थ्ये तदविरोधं समुच्चिनोति । या सा रोदनात्मवपोत्खेदनस्तेयानृतवादादिषु शास्त्रविरोधात्मिकाऽनुपपत्तिरुक्ता, साऽत्र प्ररोचनार्थत्वपक्षे न । स्तेयादेः, प्रयोगे—अनुष्ठाने हि, अर्थवादानां विवक्षिते प्रत्यक्षया तत्तन्निषेधश्रुत्या विरोधस्स्यात् । न चार्थवादरूपशब्दस्य अर्थस्त्वनुष्ठानात्मा दृश्यते । तस्मादुपपद्येत, अर्थवादप्रामाण्यम् । **अप्राप्तां चानुपपत्तिम्**, **अप्राप्तं चानुपपत्तिमि**त्यन्यौ पाठौ अध्याहारादिपरिग्रहक्लेशात्, * सा न प्राप्नोतीति शाबरयोजनाननुरूपत्वात्, प्रथमान्तपाठस्यापि सर्वैस्स्वीकृतत्वाच्चानादरणीयौ । प्रक्षेपबुद्ध्यैव वार्तिककृताऽपि पाठान्तरद्वयं व्याख्यातम् ॥ ९ ॥

यद्यपि विध्येकवाक्यतया स्तुतिनिन्दार्थत्वेनार्थवादप्रामाण्यं संभवति, तथाऽपि व्यधिकरणे स्तुतिनिन्दे कथं विधेरुपकरिष्यतः ? * वेतसशाखया चावकाभिश्च विकर्षतीति विधेः * आपो वै शान्ता इत्यपां स्तुतिः कोपयुज्यते ? न ह्यश्वगुणोक्त्या गौः क्रय्येति स्यात् । तत्रैव चासिद्धो गुणः कथ्यमानो न प्ररोचनायै घटते । यदाहुर्द्रमिडाचार्याः—* नासता स्तुतिरुपपद्यत इति । न ह्यत्र पयः पिब, शिखा ते वर्धिष्यत इत्यादिबालातुराद्युपच्छन्दनन्यायोऽपि संभवति, परीक्षकादिकृतत्वात् । अतः प्रतारणसमाधिरेवात्र स्यादित्यत्राह—

**42.** सू०—**गुणवादस्तु** ॥ १. २. १०. ॥ (सि. ४)

तुशब्दश्चोद्यं व्यावर्तयति । गुणवादः—अमुख्यवाद इत्यर्थः । एतदुक्तं भवति—यत्रार्थवादे साक्षादभिधेयार्थसमन्वयेन विध्येकवाक्यता न संभवति, तत्र लोकवद्गौण्या लक्षणया वा वृत्त्या विध्यन्वययोग्यं कंचिदर्थमुपस्थाप्य तन्मुखेन प्ररोचनादेकवाक्यत्वं भवति । एतेनैव सामान्यतस्सर्वविरोधे गमनिकोक्ता । तत्र यद्वेतसावकयोर्विधीयमानयोरपां स्तुतौ वैयधिकरण्यमुक्तम्, ततस्तयोरेव तथा स्तुतिः, तदभिजाते ह्येते स्वाभिजनस्तुत्या स्तुते भवतः—शान्तानामपां विकारभूते हि ते स्वप्रकृत्यानुगुण्येन शान्तिहेतुतया यजमानस्य कष्टं शमयिष्यत इति । यानि रुद्ररोदनादिवाक्यानि तेष्वपि पूर्वापरपरामर्शात्परस्परसाकाङ्क्षैः पदैः स्तुतिनिन्दामुखेन विध्येकवाक्यत्वं सुव्यक्तम् । तत्र रोदनाद्यसंभवमात्रं परिहर्तव्यम् । न तावद्रुद्रस्य रोदनमसंभवि, तस्यापि **शतपथब्राह्मणा**दिषु शतशस्तद्धेतोः प्रतिपादनात् । अत्र रुद्रशब्दनिर्दिष्टस्याग्नेर्देववर्गनिक्षिप्तधनप्रत्यर्पणनिमित्तशोकस्य रोदनहेतोः प्रामाणिकत्वात् । न चाशरीरस्य कथं रोदनाश्रुपातादिरिति वाच्यम्, देवताविग्रहादेस्समर्थयिष्यमाणत्वात् । न च तदश्रुणो रजताख्यपरिणामे काचिदनुपपत्तिः, वस्तुशक्तेः प्रतिनियतत्वात् । द्रवादीनां परिणामविशेषवशात्काठिन्यादियोगस्य करकादिष्वपि दृष्टेः । गोमयवृश्चिकादिनयेन विलक्षणादपि कार्योत्पत्तेर्नविलक्षणत्वाधिकरणे समर्थयिष्यमाणत्वात् । तृणारणिमणिजाग्निवदश्रुप्रसूतानश्रुप्रसूतरजताभेदस्य संभवात् । शब्दप्रमाणके चार्थे शब्देतरस्माद्बाधायोगात् । द्रव्यविशेषाणां च तत्तद्धातुरूपेण परिणामस्यान्यत्रापि दृष्टेः । महर्षिभिश्चानुमतत्वात् । रुद्रशरीरस्य तैक्ष्ण्यविशेषात्सर्वधातूपादानत्वं युक्तम् । आह च भगवान् वाल्मीकिरम्बिकापतेर्वीर्येण ताम्रकार्ष्णायसादिरूपसर्वधातूत्पत्तिम् । यथा—

* उत्ससर्ज तथा [महा] तेजः स्रोतोभ्यो हि तदाऽनघ । यदस्या निर्गतं तस्मात्तप्तजाम्बूनदप्रभम् ॥
काञ्चनं धरणीं प्राप्तं हिरण्य [ममलं] म्मङ्गलं शुभम् । ताम्रं कार्ष्णायसं चैव तैक्ष्ण्यादेवाभ्यजायत ॥
मलं तस्याभवत्तत्र त्रपु सीसकमेव च । तदेतद्धरणीं प्राप्य नानाधातुरवर्धत ॥ इति ।

एवमश्रुप्रसूतं रजतं स्वकारणानुगुण्येनाश्रुपतनहेतुर्भवतीत्यदेयत्वाय निन्द्यते । यथा कृत्तिकाग्न्याधानादेः गृहदाहाद्यनिष्टकारणत्वम्, तथा रजतस्य बर्हिषि दानं रोदनकारणं भवतीत्यनिष्टकारणत्वम् * तस्माद्बर्हिषि न देयमिति निषेधस्योप-

युक्तमेव; यथा अपगोरणशतयातनासाध्यसाधनभावः *तस्माद्ब्राह्मणाय नापगुरेतेति निषेधस्य। कालनियतफलादर्शनं तु प्रतिबन्धकवलात्कर्मकर्तृसाधनवैगुण्येन च समाधातव्यम्। एवं प्रजापतेरात्मवपोत्खननं लोकोत्तरशक्तेर्न विरुद्धम्। तथाऽपि तस्य जीवनम्, तेनैवाग्नौ वपायाः प्रहरणमित्यादिकं च शक्त्यतिशयादेव। विश्वसृजः प्रजापतेः कर्मसामर्थ्याच्च तथा तूपरपशूत्पत्तेर्न विरोधः। सर्वं चैतत्कर्मस्तुत्यर्थं भवति—अग्नौ प्रहृतमात्रायां प्रजापतेर्वपायामजस्तूपर उदगात्, इत्थं नाम बहवोऽपि पशवस्समभूवन् तदिदं कर्मणस्सामर्थ्यमिति। प्राजापत्यादिक्रमेण प्राजापत्यता च प्रतिपादिता भवति। अतः, *यः प्रजाकामः पशुकामस्स्यात्स एतं प्राजापत्यं तूपरमालभेत इत्यनेन विधिनैकवाक्यतया वपोत्खेदनादिवाक्यं प्रमाणम्। यदपि *देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् इत्यादि, इदमपि *आदित्यः प्रायणीयश्चरुरादित्य उदयनीय इत्यस्य विधेः शेषतया न केवलं वृत्तान्वाख्यानपरम्; नापि विध्यन्तरकल्पकम्, येनोक्तदोषस्स्यात्; किंतु दिङ्मोहमपि शमयत्यसाविति सर्वव्यामोहशमनत्वेनेष्टिः स्तूयते। न चेदमसदन्वाख्यानम्, देवतानामतिशयितज्ञान-शक्तीनामपि कर्मवश्यतया कदाचिद्रजस्तमोभिभवादिदोषसंभवेन दिङ्मोहादौ विरोधाभावात्। न च तेषां देवयजनाध्यव-सानमेव दिङ्मोहकारणत्वेनोच्यते, येनास्मदादिष्वनुपलम्भेन विरोधश्शङ्क्येत; देवयजनाध्यवसानानन्तरं तेषां कदाचित् स्वकारणेन दिङ्मोहस्संवर्तते, स चानेन कर्मणा शमितः, इत्थं नाम प्रशस्तमिदं कर्म, अत इदं कर्तव्यमित्यस्मदादि-ष्वप्यस्य कर्मणो मोहप्रशमनहेतुतायां न विरोधः। न हि निवर्तनीयेन मोहेन तदानींतनेन भवितव्यमित्यस्ति नियमः। अङ्गेषु च फलं प्रधानाविरुद्धं नात्यन्ताय परिहा[प्य]र्यम्। करिष्यमाणे च दर्शपूर्णमासयोरनभ्यस्तसौमिके भवति कर्म-कलापे व्यामोहशमनमपेक्षितम्। तत्राभ्यस्तचरकर्मोपस्थानेनानभ्यस्तावधारणावकाशदायिनोऽप्यदितियागस्य दृष्टद्वारा-ऽप्यवधारणौपाधिकत्वे न कश्चिद्दोषः। आदित्यैनैव ज्ञापितमिति स्तुतिः। एवमेतादृशेष्वर्थवादेषु स्तुतिपरेष्वपि स्वार्थ-सत्यत्वमविरुद्धम्। यत्र तु स्पष्टः प्रमाणविरोधः, तत्र गुणवाद इति।

यत्तु, परेषां स्वार्थेष्वपि रुद्ररोदनादिवाक्यानां गुणवादाश्रयणम्, तदयुक्तम्, रुद्रस्य रोदनादिसंभवस्य दर्शितत्वात्। यत्तु, वर्णसारूप्यान्निन्दन्ननश्रुप्रभवमप्यश्रुप्रभवमित्याहेति, तत्र च यद्वार्तिकम्, *अश्रुणश्शौक्ल्याद्यदि नामैतत्कठिनं भवेत्ततो रजतसदृशं भवेदित्युत्प्रेक्ष्य तत्प्रभवनिन्देति; इदमपि साक्षात्तत्प्रभवत्वसंभवोपपादनेन निरस्तम्। यत्तु *पुराऽस्य संवत्सराद्गृहे रुदन्तीत्यत्र *धनत्यागे दुःखदर्शनात्पुराऽस्य संवात्सराद्गृहे रोदनं भवतीत्याहेति; व्याख्यातं च वार्तिककृता *धनत्यागेनात्यन्तोदारस्यापि गृहजनः पीड्यत इति तत्सामान्याद्वा रोदनोपन्यास इति; तदनेन नूनं प्रहसनकोटौ निवेशितो वेदः। यदि च धनत्यागे दुःखदर्शनेन रजतमदक्षिण्यमदेयमित्युच्यते; कथं ततः प्रकृष्टमन्य-द्दक्षिण्यं विधीयेत? तस्यापि त्यागे दुःखाधिक्यसंभवेन निन्दाधिक्यप्रसङ्गात्। *रजतं हिरण्यमदक्षिण्यमिति विशेषेणोपा-दानमपि ह्यत्र हिरण्यव्यवच्छेदार्थम्। यत्तु स्तुतावाख्यानादिसत्यत्वमतन्त्रं कृत्वाऽप्युक्तम्—*शुक्तिकावत्तु किंचिदालम्बनं श्रुतिसामान्यमात्रेण सर्वत्र योजनीयम्, यथेह महाभूतानि प्रजा इति प्रजापतिशब्देनोच्यते वायुरादित्य आकाशो वा तेषां मध्यवर्तिनस्सारा वपाशब्देनोच्यन्ते यथासंख्यं वर्षं रश्मिर्वायुर्वा तादृश्याश्च वपाया अग्नौ प्रहरणं च वैद्युते वर्षस्य तस्य तत्संबन्धप्रसिद्धेः लौकिके रश्मेः ततस्य तदाप्यायकत्वात् शरीरान्तर्वर्तिनि [आर्चिषे] वायोः तस्यान्तश्चरत्व-सामान्यात् तेजोऽज इत्यजशब्देनाद्यं बीजं वीरुदादिर्वोच्यते जायमानानामपि तेषां सामान्येनानादित्वात्। तदालम्भ-स्तत्प्रकाशनम्, ततः प्रजानां पशूनां चोत्पत्तिः, सर्वासां प्रजानां पशूनां च व्रीह्यादिपरिणामत्वात्। इत्थं काशकुशाव-

लम्बनेन सर्वत्रालम्बनमिति । एतस्मात्परिक्लेशाद्वरं चित्रकथावस्तूनामिव मिथ्यात्वमेव । नहि तत्र कथंचिदित्थमालम्बनं कल्प्यते, न च तदकल्पनेऽपि विवक्षितं रसादि न सिध्यति । एवमिहापि स्तुत्यादि । यच्चानित्यसंयोगभयात् भूतान्वाख्यानस्यान्यथाकरणम्, तदपि प्रवाहानादित्वात्प्रागेव परिहृतम् । **वार्तिककारेणा**पि पुनस्सानुशयेनोक्तं यथा—*मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् सृष्टिप्रलयाविष्येते, तत्र सृष्ट्यादौ प्रजापतिरेव योगी तस्मिन्काले पुण्यकर्मोद्भवाभ्युपगमेन पशूनामभावात् स्वमाहात्म्येनात्मानमेव पशुमभिनिर्माय वपोत्खननादि कृतवान्, ततोऽसमाप्त एव कर्मणि तूपरः पशुरुत्थितः, ईदृशं च कर्म प्रत्यासन्नफलम्, एवं च प्रजापतिना चरितमिति सर्वं सत्यमेव, प्रतिसृष्टि चर्तुलिङ्गन्यायेन तुल्यनामप्रभवव्यापारवस्तूत्पत्तेः नानित्यताप्रसङ्ग इति । एतेन *देवा वै देवयजनमित्यादावपि, कर्मसु कौशलेन दीव्यन्तीति देवा ऋत्विज इति क्लिष्टकल्पना निरस्ता । अत आर्थवादिकान्याख्यानानि सत्यान्येव सन्ति स्तुत्यादिमुखेन विधौ विनिविशन्त इति ॥ १० ॥

*स्तेनं मनोऽनृतवादिनी वागित्यत्र विध्यन्तरकल्पनाभावाच्छास्त्रविरोधः, सन्निहितहिरण्यविध्येकवाक्यतया च नैरर्थक्यं पर्यहियत । असंभवत्स्वार्थे च सामान्यतो गुणवाद इत्यभ्यधिष्महि । तत्र स्तेनं मन इत्यादिना विधेयान्तरस्तुत्यर्थं मनोवाचोर्निन्दा हि क्रियते । न चासता स्तुतिनिन्दे घटतः । न चात्र मनसस्स्तेनत्वमदर्शि, वाचो वा दृष्टमसत्यवादित्वम् । कथमसता स्तेयानृतभावेन निन्द्येयाताम्? तत्राह—

**43.** सू०—**रूपात्प्रायात्** ॥ १. २. ११. ॥ (सि. ५)

**रूपात्**—मनसस्स्तेनत्वं स्तेनसमानरूपत्वादित्यर्थः । स्तेना अपि परकीयं स्वकीयतयाऽभिमन्यन्ते । एवं मनोऽपि । करणे कर्तृत्वाध्यवसायेन स्तेनगुणवादः । स्तेनवच्छन्नरूपतया तन्निर्देश इत्येके । **प्रायात्**—वाचोऽनृतत्वबाहुल्यात्; बाहुल्येन हि साऽनृतं वक्ति, तावतैव सत्यवादतिरस्कारिणा निन्दोपपद्यते । अतस्सतैव स्वभावभेदेन उभे निन्द्येते ॥

यत्तु *धूम एवाग्नेर्दिवा ददृश इत्यादि दृष्टविरुद्धमुक्तम्, तत्राह—

**44.** सू०—**दूरभूयस्त्वात्** ॥ १. २. १२. ॥ (सि. ६)

दूरेऽन्यतरस्य भूयस्त्वेनोपलम्भादित्यर्थः । दिवा धूमो रात्रौ चार्चिर्दूरस्थैर्भूयस्त्वेनोपलभ्यते । तावता धूम एवार्चिरेवेत्यवधारणम् । यद्वा, दूरस्यैव भूयस्त्वादर्चिर्दिवा कदाचिन्नैव दृश्यते, रात्रौ च धूमः, अतस्तात्त्विकीयमवधारणा । अस्त्वेवमवधारणोपपत्तिः, तथाऽपि तेजसोर्मिथस्संक्रमणहेतुत्वमयुक्तम् । न हि दूरस्थैरनुपलभ्यमानानि वस्त्वन्तरेषु संक्रामन्ति । माभूत्संक्रमणम्, असंक्रान्तेऽपि संक्रान्तवाचोयुक्तिर्गौणी, अतिवादमूललोकानुपलम्भानुसारेण स्तुत्यालम्बनात् । अत एवातीन्द्रियदेवताकारसंक्रमणविवक्षायामपि न दोषः । एवं च *अग्निर्ज्योतिर्ज्योतिस्सूर्यः सूर्यो ज्योतिर्ज्योतिरग्निरिति मिश्रलिङ्गयोः *अग्निर्ज्योतिर्ज्योतिरग्निस्सूर्यो ज्योतिर्ज्योतिस्सूर्य इति केवलयोश्चाग्निहोत्रमन्त्रयोर्देवताद्वयसन्निधिविवक्षया संक्रान्त्याऽन्यतरसान्निध्यविवक्षया च विधानं स्तुतं मन्येमहि ॥ १२ ॥

अथ *न चैतद्विद्मोऽब्राह्मणा वा स्मो वयं ब्राह्मणा वेत्यत्र विरोधं परिहरति—

**45.** सू०—**स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनात्** ॥ १. २. १३. ॥ (सि. ७)

**नेदं** ब्राह्मण्यप्रतिषेधार्थम्, येन विरोधस्स्यात्, अपि तर्हि ब्राह्मण्यस्य दुर्ज्ञानताप्रतिपादनार्थम्; दुर्ज्ञानत्वं च

स्त्र्यपराधात्, कर्तुश्च पुत्रदर्शनात्। अनपराधायां हि स्त्रियां क्षेत्रिण एव धर्मपुत्र इति निश्चेष्यामः, सा चेदपराध्येत तत्कर्तुरेवायं स्यात्, कर्ता च क्षेत्री वाऽन्यो वेति दुर्ज्ञानम्; अन्योऽपि ब्राह्मण इतरो वेति। अत एव हि श्रूयते—* अप्रमत्ता रक्षथ तन्तुमेतमिति। प्रमादे हि प्रजातन्तुच्छेदोऽत्र प्रतीयते। स्मरति च—* माता भस्त्रा जनयितुः पुत्र इति। अत एव क्वचित्कदुर्ज्ञानमात्रात् * न चैतद्विद्म इत्याद्यज्ञानवचनम्। अज्ञातेऽप्यज्ञातत्ववचनं किमर्थम्? प्रवरानुमन्त्रणप्रशंसार्थम्। प्रवरेण हि व्रियमाणेन अब्राह्मणोऽपि ब्राह्मणो भवेदिति प्रवरानुमन्त्रणं प्रशस्यते। सा च प्रशंसा प्रसिद्धब्राह्मणानां ब्राह्मण्यप्रसिद्ध्यपह्नवसापेक्षेति तदर्थोऽयमज्ञानार्थवादः॥ १३॥

अथ * को हि तद्वेदेत्यादौ विरोधं परिहरति—

**46. सू०—आकल्पिकेप्सा॥ १. २. १४.॥** (सि. ४)

तादात्विकमिहाकल्पिकं न विवक्षितम्। आगमिष्यति वसन्ते यदद्यतनं वसन्तलिङ्गं तदाकल्पिकमित्याहुः। **आकालिक**मिति पाठान्तरेऽप्येषैव विवक्षा। आकालिकेप्सा—अद्यतनफलश्रद्धा हि पुरुषाणां स्वरसवाहिनी, * वरमद्य कपोतः श्वो मयूरादिति न्यायात्। एतदुक्तंभवति—* दिक्ष्वतीकाशान्करोतीति प्रवर्ग्यकाले प्राग्वंशस्य दिक्ष्वतीकाशकरणं धूमक्लेशानुभवनिवृत्तिहेतुतया प्रत्यक्षतात्कालिकफलं प्रशंसितुमामुष्मिकफलमागमैकसमधिगम्यमप्रत्यक्षमात्रेणाविदितमेव भावयन्तीति॥ १४॥

यत्तु * तथा फलाभावादित्युक्तम्, तत्राह—

**47. सू०—विद्याप्रशंसा॥ १. २. १५.॥** (सि. ९)

नैष फलनिर्देशः, अपि तु विद्याप्रशंसा। **गर्गत्रिरात्रा**ध्ययनं ह्यत्र मुखशोभावाजिभ्यां प्रशस्यते। न चैवमसता स्तुतिः, अध्ययनदशायामङ्गनादिमहनीयसौन्दर्यलावण्यादिमुखशोभाभावेऽपि * विद्यासमं नास्ति शरीरभूषणमिति न्यायेन विद्वत्संभाव्यविशिष्टपदवाक्योच्चारणरूपेण परिष्कारेण शोभमानत्वात्। * आस्य प्रजायां वाजी जायते इति चाध्येतुः कुले सन्तताध्ययनश्रवणेन सम्पन्नमेधाब्रह्मवर्चसः पुत्रो वाजम्, * अन्नं वै वाजः, * पात्रमायान्ति सम्पदः इत्यादिन्यायेन प्रतिग्रहादन्नं प्राप्नोतीति॥ १५॥

अन्यानर्थक्यानुयोगं प्रतिवक्ति—**48. सू०—सर्वत्वमाधिकारिकम्॥ १. २. १६.॥** (सि. १०)

पूर्णाहुत्यादिषु यः फलनिर्देशः, नैष फलविधिः, संस्कारकर्मसु फलश्रुतेरविधित्वस्य वक्ष्यमाणत्वात्। स्तौति त्वेवम्। तथाऽपि नासता, परम्परयोपपत्तेः। पूर्णाहुत्यादिभिरग्न्यादिसिद्धौ तत्साध्यैः कर्मभिर्नानाफलैस्सर्वकामावाप्तेः। ये पुनरतत्साध्याः कामाः, न तेऽत्र सर्वशब्देन संगृह्यन्ते। अधिकृतापेक्षं हि सर्वत्वम्, तथैव लोकवेदयोः प्रयोगात्॥ १६॥

नन्वङ्गेषु सर्वकामफलश्रुत्या माभूदन्यानर्थक्यम्, यत्र पुनः परस्परानङ्गभूतेषु कर्मस्वल्पस्य महतश्च कर्मण एकमेव फलं निर्दिश्यते, तत्र दुष्परिहरमन्यानर्थक्यम्। यदि ह्यल्पेनाग्निहोत्रादिना स्वर्गस्सिध्येत्, किं गुरुतरेण ज्योतिष्टोमादिना? यदि हि चातुर्मास्ययाजिनस्सुकृतमक्षय्यं स्यात्, किं कर्मान्तरेण? यदि च कर्मणैव स्वतन्त्रेणाक्षयामृतफलसिद्धिः, किं कर्माङ्गिकया यमनियमादिपरिक्लेशबहुलया दीर्घकालनैरन्तर्यादरसेवनीयया ब्रह्मविद्ययेति। तत्राह—

**49. सू०—फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषस्स्यात्॥ १. २. १७.॥** (सि. ११)

यत्र फलस्य कर्मभ्यो निष्पत्तिर्विवक्षिता, तत्र तेषां कर्मणां लौकिककर्मणामिव परिमाणानुसारेण फलतारतम्यं स्यात्। एतदुक्तं भवति—यथा लोके कृष्यादिकर्मणां व्रीह्याद्येकफलसाधनानामपि कर्मतारतम्यानुसारेण फलतारतम्यम्, एवमिहापि। यद्यपि लोकेऽल्पेन रत्नवाणिज्यादिना महत्तरम्, महता च कृष्यादिनाऽल्पतरं फलं दृश्यते; तथाऽपि वेदे नैवमुत्प्रेक्षितुं शक्यम्, अधिका[र्यविशेषात्]रेऽविशेषे लघौ स्थिते गुरौ नियमेनाप्रवृत्तिप्रसङ्गात्। अतो यथा फलाश्रवणेऽपि विश्वजिदादौ फलं कल्पितम्, एवं फलविशेषाश्रवणेऽपि गुरुतरे कर्मणि विधिबलादेव फलभूमा कल्प्यः। संभवति च देशकालस्वरूपैस्स्वर्गादिफलेषु तारतम्यम्। अनुशिष्यते च श्रुत्यादिभिः। एवं गुरुतरोपासनविधिवैयर्थ्यपरिहाराय * अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति, * अपाम सोमममृता अभूम इत्यादिकम्, * वायुश्चान्तरिक्षं चेत्यादिकं चापेक्षिकं मन्तव्यम्। चातुर्मास्येष्वेव फलतारतम्यमधीमहे; वेदनरहितानां च सर्वेषां कर्मणां बहूनि वर्षसहस्राण्यभ्यस्तानामप्यन्तवत्फलत्वमुपनिषदि घुष्यते; अतो वेदनसंबन्धदशायां भवदक्षयफलत्वं स्तुत्यर्थमभिव्याप्तया निर्दिष्टमित्यपि निर्वोढुं शक्यम्। तदेवमर्थवादप्रसङ्गाद्विध्युद्देशैर्मन्त्रैश्च प्रसक्तमन्यानर्थक्यं परिहृतम्। एवं च सति पूर्णाहुत्यादिष्वपि भवतु फलविधिरेवं, तथाऽपि नान्यानर्थक्यम्; पूर्णाहुत्या सर्वेषां काम्यमे[देन]दानां मात्रया प्रागुपपत्तेः। पशुबन्धयजनेनापि देशकालस्वरूपैरल्पीयसो भोगस्य संभवात्, अश्वमेधब्राह्मणाध्ययनेनापि मात्रया तत्फलसिद्ध्यविरोधात्, आवृत्तिभूयस्तया वा समफलसंभवात्। कर्मणां तु सर्वेषां ज्ञानरहितानां कल्पकोटिसहस्रावृत्तानामपि न ब्रह्मविद्यया फलसाम्यं समस्ति। प्रायश्चित्तादिषु च गुरुलघुविकल्पाः फलतारतम्यात्, अधिकारिविकल्पभेदावृत्त्यादिभिश्च निर्वहणीया इति। नन्वेवं यदि सर्वत्रैव कर्मणामल्पास्थिरत्वमवधारितम्, अथेदानीं मुमुक्षुर्ब्रह्मविचारमारभताम्। मैवम्; अध्यायशेषमन्तरेण कृत्स्नवेदप्रामाण्यस्यानिर्वहणात्। ततःपरमप्यविदितस्वरूपाणां कर्मणां स्वतन्त्राङ्गभेदयोः फलभेदस्य दुर्ग्रहत्वात्। स्वरूपादिकं सिद्धं कृत्वा सङ्गत्यन्तराणां शास्त्रादौ दर्शितत्वात्। अतो निरूपितेषु कर्मस्विममेव सूत्रार्थं यथावत्प्रतिसन्धाय परं निर्वेदमेष्यति, यमेनं श्रुतिराह—* परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेनेति। तथा च **शारीरकाद्यभाष्ये**—* तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वेति। केचित्—इदं सूत्रं कर्मावान्तरभेदविषयम्, कर्मोपासनयोः फलविवेकस्तु शारीरकाद्ये विशिष्टशास्त्रारम्भहेत्वेकदेशानुप्रवेशेन साधनीय इति वर्णयन्ति। तमपि च पक्षं तत्रैव स्थापयिष्यामः। यैः पुनरिदं सूत्रं फलान्वारोहेणान्यानर्थक्यपरिहारपरमिव नीतम्, तैः स्वतन्त्रकर्मफलनिर्देशमूलमन्यानर्थक्यं कथं परिहृतम्? निरूपितकर्मस्वरूपतारतम्यस्य तु पश्चाद्व्यक्तिर्भविष्यति, अस्मिन् पक्षे * कर्मविधिस्वरूप इत्यादि भाष्यमप्यविरुद्धमिति ॥ १७ ॥

अथाभागिप्रतिषेधचोद्यस्योत्तरमाह—

**50. सू०—अन्त्ययोर्यथोक्तम्** ॥ १. २. १८. ॥ (सि. १२)

**अन्त्ययोः**—* नान्तरिक्षे न दिवीति प्रतिषेधयोः। आदिमे * न पृथिव्यामित्यत्र यथोक्तं हिरण्यं निधाय चेतव्यमित्यस्य विधेश्शेषत्वम्, तथा तच्छेषत्वमित्यर्थः। एतदुक्तं भवति—केवलपृथिवीचयननिषेधो हिरण्यस्तुत्यर्थ इति स्पष्ट एव, अन्यथा चयनस्यैवासंभवप्रसङ्गात्। तद्वदन्तरिक्षादिचयननिषेधोऽपि। प्रसक्तेन हि प्रसक्तं सह निषेध्यम्। केवलपृथिवीचयनेन प्रसक्तेनाप्रसक्तं समीकृत्य निन्दति, तेन हिरण्यं स्तुतं भवतीति। **यथोक्त**मित्यत्र वाङ्मनसनिन्दनं यथोक्तं हिरण्यस्तुत्यर्थमिति, तथेत्येके। अनित्यसंयोगस्तु यदा प्रागुक्त एव प्रकृतोपष्टम्भकत्वेनानुषक्तः, तदा प्रकृत-

समाधाने प्रागुक्तमेवोत्तरम् । यदा तु प्रयुक्तिभिरनित्यकोटौ निवेशितैरर्थवादवाक्यैस्संयोगाद्विध्युद्देशभागेऽप्यनाश्वास इति योजना, तदा प्रयुक्तीनां परिहारेणार्थवादानामनित्यत्वप्रसङ्गाभावात्तत्संयोगमूला विध्युद्देशस्यानित्यत्वशङ्का स्वयमेव विलीयत इति नोत्तरं पृथक्सूत्रितम् । यदा पुनरर्थवादविध्युद्देशयोरसंबन्धचोद्यमिदम्, तदाऽप्यानर्थक्यपरिहाराय प्रवृत्तेन सिद्धान्ताद्यसूत्रेणैव विध्यर्थवादयोरेकवाक्यतया दत्तमुत्तरमिति तदेव प्रयोजनमिति सत्यार्थाभिधानात्सर्वेऽर्थवादाः प्रमाणमिति सिद्धम् । प्रयोजनं तु क्षणिकस्य कर्मणः कालान्तरभाविफलसाधनत्वेऽपि कल्पनानिरपेक्षदेवतानुग्रहादिद्वारलाभः, विश्वजिदादिवद्विध्युद्देशेऽप्यनिर्दिष्टफलानां रात्रिसत्रादीनामार्थवादिकप्रतिष्ठादिफलपरिग्रहः, विध्युद्देशनिर्दिष्टानां च स्वर्गादिफलानां दुःखासंभिन्नदेशत्वादिस्वरूपशोधनम्, यथावस्थापितस्वरूपरूपगुणविभवादिसिद्धिश्चेति ।

स्वरूपविश्रमो यत्र स्वत एव प्रयोजने । ततोऽन्यत्रैकवाक्यत्वं प्रतीतं परिगृह्यते ॥
स्तुतिनिन्दादिरूपेण विध्यपेक्षितलम्भनात् । नानर्थक्यं न पार्थक्यमर्थवादेषु कुत्रचित् ॥
प्रत्यक्षादिविरोधस्तु मुख्यार्थे यत्र दृश्यते । तत्रौपचारिकीं वृत्तिमनुसृत्यार्थसत्यता ॥
असंभवद्विरोधे तु मुख्यार्थेऽन्यपरेष्विव । स्वतःप्रामाण्यमुत्सृष्टं को वाऽपवदितुं क्षमः ॥
यत्र च स्तुतिनिन्दादौ तात्पर्यं तदपेक्षणात् । मुख्योऽमुख्योऽपि वा कश्चिदर्थस्सत्यो विवक्षितः ॥
असता स्तुतिनिन्दे तु नादर्तव्ये परीक्षकैः । उपच्छन्दननीतेरप्यत्र नूनमसंभवात् ॥
अतोऽर्धलोकायतिकैरसता स्तुतिकल्पना । अप्रमाणाविवक्षूणामहङ्काराय कल्पते ॥
अजैमिनीयेष्वर्थेषु भाषितेषु प्रतारकैः । गतानुगतिकान्मन्दान् किं करिष्यामहे वयम् ॥ १८ ॥

॥ इति अर्थवादप्रामाण्याधिकरणम् ॥ १ ॥

---

॥ अथ विधिवन्निगदाधिकरणम् ॥ २ ॥

**51.** सू०—**विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम्** ॥ १. २. १९. ॥ (पू. १.)

यदुक्तम्, *विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरित्यर्थवादानां प्रामाण्याय विध्येकवाक्यत्वं स्तुत्यर्थत्वं च, तत्केषुचिदर्थवादेषु न संभवतीत्याशङ्क्य परिह्रियते । इह विध्यभिव्यक्तिरहितवाक्यान्तरसंबन्धिनोऽर्थवादा उदाहरणम् । यथा—*औदुम्बरो यूपो भवतीत्यादिवाक्यैस्संबध्यमानाः *ऊर्ग्वा उदुम्बर ऊर्क् पशवः *ऊर्जं पशूनाप्नोति, *ऊर्जोऽवरुध्या इत्यादयः । ते किं स्वार्थमात्रं विदधति, उत विहितमन्यत्प्ररोचयन्तीति विचार्यते । किं प्राप्तम् ? स्वार्थमेव विदधतीति । कुतः ? **अपूर्वत्वात्**—तदर्थस्य प्रमाणान्तराप्राप्तत्वात् । नायमनुवादः, अपि त्वज्ञातज्ञापनरूपो विधिरेव स्यादित्यर्थः । ततः किम् ? **वादमात्रं ह्यनर्थकम्**—अक्रियार्थवस्तुस्वरूपवादमात्रं ह्यनर्थकमिति पूर्वाधिकरण एवोक्तम् । यदिह परैर्भाषितम्—*इतरथा स्तुतिवादमात्रमनर्थकं स्यादिति, तत्तदर्थकशब्दप्रत्यभिज्ञानाननुरूपम् । स्तुतित्वेऽर्थशून्यत्वोक्तिर्निष्प्रयोजनत्वोक्तिश्च न युक्ता, प्रागेवोभयप्रतिषेधात् । स्वरूपविधिविषयं चानर्थक्यं न प्रतिक्षिप्तमिति तत्प्रत्यभिज्ञानमुचितम् । यद्यपि व्याससूत्रे स्वरूपविधावप्यानर्थक्यं केषुचिद्वाक्येषु परिहरिष्यते, तथाऽप्यपवरकनिहितनिधिसत्तादिवाक्यवत्स्वतःपुरुषार्थभूतवस्तुविषयेषु वाक्येष्वेव तदिति प्रस्तुतेष्वन्येषु चानुयोगावकाशः । ननु पश्वादिरूपोऽपि पुरुषार्थो लोकसिद्धः । सत्यम्, न पश्वादिरूपः पुरुषार्थोऽस्तीत्युपदिश्यते, तल्लोकसिद्धमेव । अलौकिकेऽपि

स्वर्गादौ ब्रह्मसमाधिसंभवेन न दोषः । पश्वादिरूपं पुरुषार्थमौदुम्बरेण प्राप्नोतीत्युक्ते तु लौकिके तदसंभवाद्वेदे तद्विध्यदर्शनात्पश्वादिकं च औदुम्बरेण यूपेन प्राप्नोतीति वाङ्मात्रमेव स्यात्, तथाऽनर्थकमिति सम्यगनुयोगः ॥ १९ ॥

सिद्धान्तिच्छायया पुनराशङ्क्य परिहरति—

**52.** सू०—**लोकवदिति चेन्न पूर्वत्वात्** ॥ १. २. २०. ॥ (पू. २)

यथा लोके विध्येकवाक्यत्वाभावेऽपि गुणकथनात्तदनुरूपविधिकल्पनेन प्रवृत्तिनिवृत्तिपर्यन्तता, शालिसम्पत्तियोग्यं सुक्षेत्रमिदम्, बहुक्षीरेयं गौरित्यादिषु हि तत्प्रयोजनाभिलाषिणः क्रेतव्यत्वादिबुद्धिर्भवति, एवमौदुम्बरादाविति चेत्; तन्न, **पूर्वत्वात्**—लौकिकस्यार्थस्य प्रमाणान्तरदृष्टपूर्वत्वात् । अन्यदीयसुक्षेत्रादिसिद्धेः क्रेतव्यत्वादिना नियमं समधिगम्य तत्प्रयोजनार्थिनां तत्र प्रवृत्तिरुपपन्ना । इह तु न विधिकल्पने प्रमाणमस्ति । तत्कल्पने हि वाक्यं भिद्येत, औदुम्बरो यूपः कर्तव्यः, उदुम्बरेण पशूनाप्नोतीति । न चैवं लोके । बहुक्षीरवत्त्वादेः प्रमाणान्तरसिद्धत्वेन वाक्यस्य तद्विधिपरत्वाभावात्तत एव क्रेतव्येत्यादिविध्यनुसरणोपपत्तेः । ननु करणश्रुत्या साधनत्वेऽध्यवसिते किं विधिना ? प्रत्यक्षादिगोचरेष्वप्यर्थेष्विष्टसाधनताबुद्धिमात्रेण पुरुषाः प्रवर्तन्ते । विधिना विहितसाधनत्वं निश्चित्यैव फलार्थिनः प्रवृत्तिः । तद्यदि साक्षात्करणश्रुत्याऽध्यवसितं तावतैव प्रवृत्तिसंभवे विधिरप्यपेक्ष्यत इति किमियमीश्वराज्ञा ? अतो वाणिज्यादिना धनं प्राप्नोतीत्युक्ते विधिमन्तरेणापि तदुपादित्सा जायते; एवमिहापीति । एतदप्यनेनैव सूत्रेणानुभाष्य परिहृतम्—**लोकवदिति चेन्न पूर्वत्वादिति** । लौकिकवाक्यैरिष्टसाधनतया निर्दिष्टानामर्थानां प्रमाणान्तरगोचरतया ततस्तत्प्रमाणैरेव स्वप्रयत्नाधीनसिद्धिकतामधिगम्य प्रयतन्ताम् । इह तु न तथा, करणत्वे श्रुतेऽपि विधिमन्तरेण कर्तुर्व्यापारसाध्यत्वे प्रमाणाभावात्, *ऊर्ग्वा उदुम्बर इत्यादिना *वसन्तेन सुखं प्राप्नोतीत्यादाविव वस्तुस्वभाववर्णनमेव शब्दात्प्रतीयते, तावति चापूर्वे वस्तुनि विश्रान्ते वाक्येऽत्र किमिति तदतिरिक्तं कल्पयेमहीति । यत्तु परे लोकवदिति चेदिति सूत्रं भिन्दन्तः, इति चेदिति पूर्वोक्तानुवादेन लोकवदिति सिद्धान्तिच्छायया परिहारमाशशङ्किरे; तदसत्, स्वारस्यादेकवाक्यताप्रतीतौ सूत्रभेदानौचित्यात् । अनुवादपरिहारयोर्व्युत्क्रमान्वयात् । इति चेदित्यनुवादस्य मन्दप्रयोजनत्वाच्च । न चैवं सौत्री शैली भज्येत, **शारीरके** तावत् *छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम्, *उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्, *न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन्, *जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् इत्यादिषु बहुषु प्रदेशेष्विति चेदित्यन्तं नेत्यादिनोत्तरेणैकसूत्रतया व्याख्यायि । न चान्यादृशी जैमिनीयसूत्रशैलीति शास्त्रमस्ति । उपरि चैवंविधेषूचितं व्याख्यास्यामः ॥ २० ॥

**53.** सू०—**वेदे व्यक्तमसंवादः** ॥ १. २. २१. ॥ (पू. ३)

न केवलं वादमात्रस्यानर्थक्यमेव, संवादोऽपि न दृश्यते । असंवादः—न संवादः, विसंवाद इत्यर्थः । *ऊर्ग्वा उदुम्बर ऊर्क् पशव इत्यादयो हि प्रत्यक्षेण विसंवदन्ते । अतस्स्वार्थेऽपि न प्रामाण्यम् । कल्प्यमानविधेर्मृषावादमूलत्वात्प्रतारकवाक्यस्येव प्रामाण्यं दुर्वचम् । तस्मात्प्रागुक्तनिष्प्रयोजनमृषावादरूपत्वमेतेषु विध्येकवाक्यत्वादियुक्त्यनपोदितमित्यप्रामाण्यमेवेति ॥ २१ ॥

**54.** सू०—**उक्तं तु वाक्यशेषत्वम्** ॥ १. २. २२. ॥ (सि. १)

उक्तमस्माभिः * विधिना त्वेकवाक्यत्वादित्यर्थवादानां विधिवाक्यशेषत्वम्; इह तु विधिसन्निधिमात्रं प्रदर्शनीयम्। तत्र तावत् * औदुम्बरो यूपो भवतीत्यस्य वाक्यस्य शेषतया * ऊर्ग्वा उदुम्बर इत्यादिकं प्रतीयत एव, अन्यथा कस्यायं फलविधिरिति शङ्क्येत; सौत्रान्तिकादेशवदित्थं फलं भविष्यतीत्याह औदुम्बरेण पश्वादिकमिति। न चाविहितः कश्चिदौदुम्बरो यूपो भवति प्रशस्तः, यूपस्य क्रतुसंबन्धाव्यभिचारादौदुम्बरतायाश्च तद्विशेषणत्वात्। न चायं प्रकृतानुवादः, अनुपदेशात्। अतोऽवगच्छामो वैकृते प्रकृतिवत्प्राप्तस्यौदुम्बरताविधिरिति। अतो यद्यप्यत्र विधिप्रत्ययो न श्रूयते, तथाऽपि विधिरेव; अपूर्वत्वात्, अन्यथाऽनुपपत्तेश्च। लिङर्थे लेडिति पञ्चमो वा लकारो विध्यर्थः। एवं विधिसन्निधौ प्रागुक्तनयेन स्तुत्यादिमुखेनैकवाक्यत्वं सुगमम्। फलवत्ता तावच्छाब्दी, ततः प्रशस्तिस्सिध्येत्। यथालोकमर्थवत्त्वाल्लक्षणा न दोष इति चोक्तम्। यदपि च वेदे व्यक्तमसंवाद इत्युक्तम्, तदपि गुणवादेन सामान्यतः प्रागेव परिहृतम्। आलम्बनमात्रं तु प्रदर्शनीयम्। ऊर्क्सादृश्यादूर्ग्वा उदुम्बर इति। दृश्यते यथा तस्य प्रीतिसाधनत्वम्, एवमौदुम्बरताया यूपद्वारकानुप्रवेशेन प्रीतिसाधनत्वम्। प्रीतिसाधनान्तरेष्वसत्स्वन्नत्वेनोपचारोऽयं फलानुरूपेण, पचेलिमैरंशैरुदुम्बरस्यान्नताध्यवसानार्थत्वात्। * ऊर्क् पशव इत्यपि परिणामविशेषादेवोपपद्यते, अन्नविकारभूता एव हि प्राणिनश्श्रूयन्ते। एवमौदुम्बरादिविशेषतया फलादिवन्निगदानामर्थवादानां स्तुत्यादिमुखेनोपयोगात्प्रामाण्यमिति ॥ २२ ॥

## 55. सू०—विधिश्चानर्थकः क्वचित्तस्मात् स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥ १. २. २३. ॥ (सि. २)

अपि च * विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरित्यत्रार्थवादेषु स्वार्थको विधिरनर्थक इति, तत एव हेतोस्स्तुतिः प्रतीयेतेति साधितं पुरस्तात्। एतदुक्तं भवति—केषुचिदर्थवादेषु स्तुतिपरतयाऽर्थपरत्वेन प्रामाण्येऽभ्युपगते तदितरेष्वपि स्वार्थविधिमात्रेणासंभवत्प्रयोजनेषु तथैव प्रामाण्यमनुवर्तितुं शक्यम्। ततश्च प्ररोचनीयस्य यस्यकस्यचित्परामर्शे क्वचित्प्राकरणिकस्यापि कस्यचित्तथात्वं सिद्धमिति। यदिह परैरभाषि—* अप्सु योनिर्वा अश्वोऽप्सुजो वेतस इत्यादिषु अप्सु योनिरश्वः कर्तव्यः, अप्सुजो वेतसः कर्तव्य इत्यादिविधेरशक्यत्वात् स्वभावसिद्धत्वाद्वा विध्यानर्थक्यम्, तत्रावश्यं स्तुतिः कल्पयितव्या, तत्सामान्यादितरेषु तथात्वम्। किं तत्सामान्यम्? विध्यसंभवस्स्तुतिसंभवश्चेति—तदिदं प्रकृतासङ्गतम्। तथा हि—यदि फलविधिर्न वेति विचारः प्रकृतस्तदाऽध्याहारादिकल्पितकर्तव्यताविध्यानर्थक्यदर्शनेन स्तुतित्वकल्पनमयुक्तम्। अथ प्रकृतेऽपि कल्पनीयकर्तव्यविषयो विचारः, तदा विधिश्चानर्थकः। तथा तत्सामान्यादितरेष्विति वचनमयुक्तम्, विशिष्टत्वात्, फलविधिविचारविषयस्ववाक्यविरोधाच्च। तत एव विरोधात् * औदुम्बरो यूपो भवतीत्यादावविधित्वात् अर्थवादत्वविचारः प्रकृत इति प्रत्युक्तम्; विध्यसंभवस्स्तुतिसंभवश्चेत्युक्तमप्यत्र विपरीतम्। तस्मादस्मदुक्तैव योजनेति ॥ २३ ॥

ननु दर्शपूर्णमासप्रकरणे श्रूयते * यो विदग्धस्स नैर्ऋतो योऽशृतस्स रौद्रो यश्शृतस्स देवस्तस्मादविदहता श्रपयितव्यस्सदैवत्वायेति। तत्र यो विदग्धस्स नैर्ऋत इत्येतदविदहता श्रपयितव्य इत्यनेन नान्वेति। अतो विदग्धविधानं प्राकरणिकविधावन्यत्र चान्वयमलभमानं निरर्थकमेवेति, कथं तत्र प्रामाण्यम्? तत्राह—

## 56. सू०—प्रकरणे च संभवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ १. २. २४. ॥ (सि. ३

*अविदहता श्रपयितव्य इत्येतत्प्रकरणे व्यतिरेकनिन्दामुखेनाविदग्धश्रपणस्तुतिपर्यवसायितया संभवन्विदग्धादिस्तत्प्रकरणा**दपकर्षो** न कल्प्येत । अपकृष्यत इत्यपकर्षः । ***विध्यानर्थक्यं हि तं प्रति**—विदग्धादिकं प्रति नैर्ऋतादिविध्यानर्थक्यं स्यात् । न ह्यत्र प्रकरणे विदग्धोद्देशेन नैर्ऋतादिविधिस्संभवति, उत्पत्तिगुणावरुद्धनयात् । न चान्यत्रोत्कर्षः, प्रकृतोपयोगसंभवादेव प्रकरणबाधायोगात् । न चात्र नैर्ऋतोद्देशेन विदग्धत्वविधिः, अप्रकृतत्वात्, प्रकृतानुपयोगाच्च । अतस्तमप्रकृष्टं प्रति विध्यानर्थक्यमिति वा योजना । यद्वा, प्रकरणे स्तुत्यादिपरतया संभवद्वृत्यन्तरमर्थं प्रत्यभ्युदितेष्ट्यादिवन्नैमित्तिकविधेरानर्थक्यं तत्राह—***विध्यानर्थक्यमिति** । आनर्थक्यपरिहारायैव प्रकरणोपयुक्तस्तुत्यादिपर्यवसायित्वमेष्टव्यमिति । यद्यप्येतदुदाहरणं पूर्वस्मिन्नधिकरणे चिन्तयितुं युक्तम्, तथाऽपि विरुद्धविषयतया विध्येकवाक्यत्वासंभवाशङ्कास्पष्टत्वेन प्रकृतसारूप्यादत्र विचारितमिति ॥ २४ ॥

## 57. सू०—विधौ च वाक्यभेदस्स्यात् ॥ १. २. २५. ॥ (सि. ४)

अपि चात्र स्वरूपविधावभ्युपगम्यमाने *औदुम्बरो यूपो भवतीत्याकारक्रमेण प्रतीयमानमेकवाक्यत्वं भज्येत । न च कथंचित्संभवन्त्यामेकवाक्यतायां तद्भेदो युक्तः । न च परस्परानुपयुक्ततयैकवाक्यता । समर्थितश्चौदुम्बरविधिः । अतो विध्येकवाक्यतायास्स्तुत्यादिपरत्वेन प्रामाण्यं प्रागुक्तमप्रतिहतम् । ननु—*खादिरं वीर्यकामस्य यूपं कुर्यादित्यादिष्विव गुणफलसंबन्धविधिस्स्यात् । अत एव च न वाक्यभेददोषः । न चैवं कामशब्देन फलमुपादेयमित्यस्ति नियमः, तदभावेऽपि रात्रिसत्रादिष्वार्थवादिकफलस्वीकारात् । तत्र तु *य एता रात्रीरुपयन्ति ते प्रतितिष्ठन्तीति न साक्षात् फलसाधनयोस्संबन्धश्श्रुतः; इह पुनः करणश्रुत्यैव प्रकृतस्यौदुम्बरस्य फलेन संबन्धस्साक्षात्प्रतीयत इति विशेषः । एवमपि च प्रामाण्ये सुवचे किमशाब्दस्तुत्याश्रयणेनेति चेत्; सत्यम्, तथाऽपि वैकृतत्वादेव विशेषफलाकाङ्क्षारहिते तस्य फलसंबन्धविध्यनुपपत्तिः । स्तुतिस्तु तत्रापि युक्तेति तन्मुखेन प्रामाण्यं प्रत्यविवादमेव । यत्त्वत्र **कौमारिलै**र्विधित्वेन पूर्वपक्षमुपक्षिप्य कृत्स्नोऽर्थवाद इत्युक्तम्, तत्प्रामाण्याक्षेपसमाधानयोरनुपयुक्तमिति व्यर्थायासमात्रत्वादसङ्गतम् । प्रथमपादमात्रपर्यवसायिनी प्रामाण्यचिन्तेत्यभ्युपगमेऽपि निरर्थकोऽयं विचारः; विधिपरत्वेऽपि प्रामाण्यानुच्छेदेन विरोधाभावात् । सिद्धान्तेऽप्यर्थवादोन्नेयविधिस्वीकारात् । फलविधिपूर्वपक्षेऽपि *औदुम्बरो यूपो भवतीति विधेरवश्याभ्युपगन्तव्यत्वस्थापनात् । अङ्गेषु फलश्रुतेरर्थवादत्वस्यान्यत्र व्यवस्थितत्वेन रात्रिसत्रनयप्रसङ्गप्रतिषेधयोरसंभवाच्चेति । यच्च **प्रभाकरप्रमुखैः** प्रामाण्यमध्यायार्थं प्रतिसन्दधानैरपि औदुम्बरेण यूपः कर्तव्यः, उदुम्बरेण पशूनाप्नोतीति साध्यद्वयभानादेकवाक्यत्वप्रतीतेश्च परस्परविरोधादन्यतरपरित्यागकारणाभावाच्चानध्यवसायादप्रामाण्यमिति पूर्वपक्षितम्; तदतिन्दम्, उक्तन्यायेन विपरीताध्यवसायसंभवे तेनैव पूर्वपक्षीकरणस्योचिततरत्वात् । अतोऽस्मदुक्त एव पन्थाः । तत्र पर्णमय्यधिकरणादिषु पौनरुक्त्यशङ्काया एवाभावात्परेषामिव न विषयव्यवस्थादिपरिक्लेशः । शारीरकेऽपि लिङ्गभूयस्त्वाधिकरणादिषु विचारेष्वेतदुपयोक्ष्यत इति ।

अर्थवादविशेषेषु प्रामाण्यप्रतिपादनात् । अस्मदुक्तनये स्पष्टा सा पादाध्यायसंगतिः ॥
प्रकृतापेक्षितश्चात्र पूर्वपक्षसमुद्भवः । प्रकृतस्थापनेनैव प्रसिद्ध इति संग्रहः ॥ २५ ॥

॥ इति विधिवन्निगदाधिकरणम् ॥ २ ॥

———

## ॥ अथ हेतुवन्निगदाधिकरणम् ॥ ३ ॥

### 58. सू०—हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ १. २. २६. ॥ (पू. १)

पुनरप्यर्थवादविशेषेष्वप्रामाण्यशङ्का परिह्रियते । तत्र पूर्वपक्षी मन्यते, भवतु सर्वत्रार्थवादानां विध्येकवाक्यता, तथाऽपि केषुचिदर्थवादेषु प्रामाण्यं दुष्प्रतिपादम् । तथा हि—ये पुनरेते हेतुवन्निगदाः *शूर्पेण जुहोतीत्यादौ *तेन ह्यन्नं क्रियत इत्यादयः, किं ते प्रतिज्ञातस्य कर्तव्यस्य हेतुमभिदधति, उत प्रशंसामिति विचारणीयम् । न तावत्प्रशंसन्ति, अशाब्दत्वात्प्रशंसायाः । हिशब्दादिश्रुत्यैव हेतुत्वस्य स्पष्टाभिधानात् । श्रुतहानाश्रुतकल्पनयोश्चान्याय्यत्वात् । तदेतदुच्यते ***हेतुर्वेति** । ईदृशानामर्थवादानां हेतुरभिधेयस्स्यात् । कुतः ? ***अर्थवत्त्वोपपत्तिभ्याम्**—हिशब्दार्थवत्त्वात् । अन्यथा श्रुतहानमित्यर्थः । अथैवं हेतुपरत्वे परार्थानुमानप्रयोगवन्नागमतया प्रामाण्यम् । नाप्यनुमानतया, तस्य व्याप्तिपरामर्शसापेक्षत्वात् । यदन्नकरणं तद्धोमसाधनमिति व्याप्तेश्चासिद्धेः । दर्वीपिठरादिषु होमसाधनत्वमसिद्धम्, प्रत्यक्षादेस्तत्र व्यापाराभावात्; शास्त्रेणापीतः पूर्वमसिद्धत्वात् । अथ हेतुनिर्देशमुखेन व्याप्तावेव तात्पर्यमुच्येत, तथाऽप्यश्रुतकल्पनागौरवम् । वाक्यभेदश्च, *तेन ह्यन्नं क्रियत इत्येकस्यैव यदन्नकरणं तद्धोमसाधनम्, अन्नकरणत्वाच्छूर्पो होमसाधनमित्यर्थद्वयविधानाशक्तेः । अथोच्येत, यद्यदन्नकरणं तेन तेन होतव्यमित्येव विधिः कल्प्यते, *शूर्पेण जुहोतीति तद्विशेषविषयोऽनुवाद इति । तदपि न, उक्तोत्तरत्वात्, करणविभक्तिश्रुत्यैव होममवरुन्धानस्य शूर्पस्य कल्पनासिद्धैर्दर्वीपिठरादिभिः कथं बाधो विकल्पः समुच्चयो वा कल्प्येत ? श्रौतेनैव करणेन निराकाङ्क्षो होमः कल्पनीयं करणान्तरं नापेक्षते । अपेक्षित एव च करणान्तरे श्रुतौ श्रूयमाणं करणमुपधावन्होमः करणान्तरकल्पनं प्रतिबध्नीयात् । कल्पकश्च हेत्वपदेशार्थवादः स्तुतिपरत्वेनान्यथाऽप्युपपन्नः । शूर्पस्य तु करणता विध्युद्देशान्तर्गततया स्फुटतरश्रुत्यैव प्रतिपन्ना । विशिष्टानुष्ठानेनैव हि शास्त्रार्थव्यवस्था, न च दर्वीपिठरादिभिः जुह्वतोऽनुष्ठातॄन्पश्यामः । अथ दर्वीपिठरादीनां होमकरणत्वं नास्तीत्यव्यभिचारं मन्यसे ? कथं तर्हि शूर्पस्य तत्करणत्वं मंस्यसे ? परम्परयेति चेत्, तुल्यम् । दर्व्यादेश्च तत्करणत्वाभावे कुत्र व्याप्तिं ग्रहीष्यसि ? न क्वचिदिति चेत्, कथं हेतुः ? न चात्रापि तन्नीतिरपि संभवतीत्यप्रामाण्यमेवाविशिष्टमिति ॥ २६ ॥

तत्र प्रतिविधत्ते—

### 59. सू०—स्तुतिस्तु शब्दपूर्वत्वादचोदना तस्य ॥ १. २. २७. ॥ (सि. १)

*तेन ह्यन्नं क्रियत इत्यादिना स्तुतिः क्रियते । कुतः ? शूर्पादीनां होमकरणत्वादेश्शब्दपूर्वत्वात् । श्रेयस्साधनस्य शब्दैकवेद्यतया हेतुसाध्यत्वाभावादित्यर्थः । अतोऽनाकाङ्क्षितस्य, **तस्य**—हेतोः, **अचोदना** ॥ २७ ॥

### 60. सू०—व्यर्थे स्तुतिरन्याय्येति चेदर्थस्तु विधिशेषत्वाद्यथा लोके ॥ १. २. २८. ॥ (सि. २)

*तेन ह्यन्नं क्रियत इत्यादौ, **व्यर्थे**—अर्थरहिते वाक्ये, स्तुतिरन्याय्या, असता स्तुतेरयुक्तत्वस्थापनात्, होमसाधनदशायां क्रियत इति वर्तमानतया निर्दिष्टस्यान्नकरणत्वस्यासत्त्वादिति चेत्, नैवं व्यर्थत्वम्, अर्थस्तु स्यादेव । कुतः ? **विधिशेषत्वात्; यथा लोके** । न ह्यसौ विधिः, अपि तु तच्छेषः, तेन परशब्दार्थस्वीकारो युक्तः । हेतुविधौ त्वयं दोषः, विधेस्त्वत्यन्ताप्रतिपन्नविषयतया यथाश्रुतान्मात्रयाऽप्यन्यथाकरणाभावात्; अन्नकरणदशायां च होमकरणतासं-

भवात् । विध्यर्थे चास्मिन्ननुवादे परिशेषाद्यथाप्रसिद्ध्यन्नकरणत्वं शब्देनैवानुज्ञातमिति न व्यवहितकरणत्वादिचोद्यावकाशः । पाकनिष्ठं च साधकतमत्वं शूर्पे उपचर्यते । विवक्षातः कारकाणि भवन्ति । * तेन ह्यन्नं क्रियत इति नेतरव्यवच्छेदार्थम्, अपि तु प्रकृष्टकरणत्वविवक्षया । प्रकर्षश्चापेक्षातो निकृष्टापेक्षया मन्तव्यः । इदमपि च न लौकिकम्, यथा वाणिज्येन वर्तेत तेन च धनवान्भवतीति । अत्र च भूतं भविष्यद्वाऽन्नकरणत्वं स्तुत्यर्थं वर्तमानतया व्यपदिश्यते । अवर्तमानादपि वर्तमानस्येष्टप्रीत्यतिशयहेतुत्वात् । शक्तेर्वा वर्तमानत्वं व्यापारे निवेश्य निर्दिष्टम् । तदवस्थायां तस्यां हि पुरुषाणां प्रीतिरतिशयिनी, न पुनस्स्वरूपसत्याम् । * वर्तमानसामीप्ये वर्तमानवद्वेत्यनुशासनं वाऽनुसर्तव्यमिति । इह परैः, इति चेदिति सूत्रं भिन्दानैः, इति पुनर्यदुक्तं तत्परिहर्तव्यम्, इत्यार्षभाषान्तं सूत्रमिह भाषितम् । तदयुक्तम्, एकवाक्यताप्रतीतिभङ्गात्; अध्याहारादेश्च निमित्तत्वात् । एवमुत्तरयोरपि सूत्रयोः परस्परनिरपेक्षशङ्कोत्तरक्रमेण प्रस्पष्टविभागयोरेकतयोपादानमकारणकमनुसन्धेयम् ॥ २८ ॥

एवं हेतुपरत्वं दूषितम् । अथाऽन्वारुह्य वदति—

**61. सू०—यदि च हेतुरवतिष्ठेत निर्देशात् ॥ १. २. २९. ॥** (सि. ३)

* तेन ह्यन्नं क्रियते इत्यसौ यद्यपि हेतुः, तथाऽपि निर्देशादवतिष्ठेत । एतदुक्तं भवति—हिशब्दादेर्हेतुरेवार्थ इति नायं नियमः, नानार्थत्वप्रसिद्धेः । अतः प्रामाण्यानुगुण एवार्थः स्वीकार्यः । प्रसिद्धिप्रकर्षमात्रात्तु यद्यपि हेतुरङ्गीक्रियेत, तथाऽपि शूर्पगतमेवान्नकरणत्वं हेतुरवतिष्ठेत, * तेन ह्यन्नं क्रियत इत्येवं निर्दिश्यमानत्वात् । शब्दप्रमाणके चार्थे यथाशब्दं व्यवस्थानात् । क्लृप्तकल्प्यविरोधे च क्लृप्तस्वीकारस्यैव युक्तत्वात् । न चात्र व्याप्त्यादिपरामर्शापेक्षा, ज्ञापकहेतोरविवक्षितत्वात् । कारकेऽपि विरोधात् । बीजादङ्कुरं जन्यते, तद्धि क्षितिजलादिसापेक्षमिति व्यवस्थितमितिवत् । नच तावता शिलाशकलादिष्वपि प्रसङ्गः, तेष्वदर्शनाद्वा प्रकृतेऽपि क्षितिजलादेः कारणत्वं निवर्तते । एवमिहापि करणभूतस्य शूर्पस्यान्नकरणसामर्थ्यमविशेषकं भवति । न हि शूर्पस्य विशेषणमश्रुतानां तद्विशेषणयोगिनां संग्रहार्थम्, अपि तु शूर्पस्य तद्विशेषणायोगव्यवच्छेदार्थम् । तथाभूते च करणे तद्विशेषणरहितशूर्पान्तरं व्यवच्छिद्यते । न च विशिष्टस्य करणत्वे विधीयमाने विशेषणहेतुत्वग्रहाय प्रमाणान्तरमन्वेषणीयम्, अरुणैकहायन्यादिवत् । अतोऽन्नकरणसमर्थेन शूर्पेण होतव्यमिति विध्युद्देशान्तःपातेन केवलार्थवादतामेव प्रतिक्षिपन्नयं हेतुशब्दः कथमर्थवादतां प्रसञ्जयेदिति ॥ २९ ॥

हेतुविधावपि निर्देशवशात् विशेषव्यवस्थानं दर्शितम् । अथ तदभ्युपगमे बाधकमाह—

**62. सू०—सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥ १. २. ३०. ॥** (सि. ४)

* शूर्पेण जुहोतीति प्रकृतं * तेनेति प्रत्यवमर्शं चानादृत्य * अन्नं क्रियत इति सामान्यमात्रादन्नकरणभूतसर्वोपसंहार इति चेत्; प्रमाणतयाऽभ्युपगतानां **विधीनामव्यवस्था स्यात्**—विध्युद्देशेष्वप्यर्थप्रकरणादिभिरापन्नान्विशेषाननादृत्य पदादिमात्रप्रतिपन्नसामान्येतिकर्तव्यतादिव्यवस्थाभङ्गः प्रसज्येतेत्यर्थः । अतो हेतुवन्निगदानामप्यर्थवादानामप्रामाण्यं वक्तुं न शक्यत इति सर्वेऽप्यर्थवादाः स्तुत्यादिमुखेन सार्थकास्सन्तः प्रमाणमिति ॥

असंगतिरनौचित्यमानर्थक्यं गतार्थता । अस्वारस्यं च सूत्राणामन्योक्तेष्विह सुग्रहम् ॥ ३० ॥

**॥ इति हेतुवन्निगदाधिकरणम् ॥ ३ ॥**

॥ अथ मन्त्राधिकरणम् ॥ ४ ॥

## $ 63. सू०—तदर्थशास्त्रात् ॥ १. २. ३१. ॥ (पू. १)

एवं साधितमर्थवादानां विध्युद्देशेनैकवाक्यतया कार्त्स्न्येन प्रामाण्यम् । अथेदानीं तदेकवाक्यताहीना मन्त्रा विचार्यन्ते किं ते मन्त्राः प्रमाणमुत नेति । तदर्थं च प्रतीयमानेऽर्थे तात्पर्यमस्ति न वेति । तदर्थं च किमेते कर्मोपासनरूपेषु शास्त्रेषु स्वार्थबोधनेनोपकुर्वन्ति, उतोच्चारणमात्रेणेति । उच्चारणमात्रे विवक्षिते ह्यर्थबोधनमानुषङ्गिकम्, अर्थप्रत्यायनपरत्वेऽप्युच्चारणं प्राप्तमिति संशयावकाशः । तत्रैवं पूर्वपक्षः—यद्यपि स्वतः प्रामाण्यादिकं स्थापितम्, तथाऽप्यन्यपरत्वादिह तदपोद्यते । न ह्यतत्परश्शब्दस्तत्र प्रमाणम्, अतिप्रसङ्गात् । न च मन्त्राणां स्वार्थे तात्पर्यं संभवति, तदर्थशास्त्रादिविरोधहतत्वात् । तथा हि—* बर्हिर्देवसदनं दामीत्यादयो मन्त्रा यदर्थाः, तदर्थेष्वेव ते शास्त्रेण विनियुज्यन्ते; विवक्षितार्थत्वे हि स्वशक्त्यैव बर्हिर्लवनादौ विनियोगस्सिद्धः, तत्र किं शास्त्रेण तदर्थेन ? न ह्येषामर्थविवक्षा शक्तिर्वा शास्त्रैरभिधीयते, द्रुमादिष्वतिप्रसङ्गात् । अविवक्षितार्थत्वे तदर्थशास्त्रमर्थवत् । अतोऽवगच्छामो मन्त्राणां स्वार्थेषु न तात्पर्यमिति ॥ ३१ ॥

## 64. सू०—वाक्यनियमात् ॥ १. २. ३२. ॥ (पू. २)

पदसमुदायविशेषो वाक्यम्, तस्य, नियमः—पदानां नियतक्रमयोगित्वम् । अयमभिसन्धिः—न तावत्पदानां क्रमनियमोऽर्थप्रत्यायनाङ्गम्, व्युत्क्रमेणाप्यर्थप्रतीतेः । उच्चारणार्थत्वे क्रमनियमोऽर्थवान्, नियतक्रमैरुच्चारितैरदृष्टोपकारसंभवात् । यद्यपि विध्युद्देशेऽपि व्युत्क्रमेऽप्यर्थप्रतीतिस्स्यात्, तथाऽपि नियतक्रमस्याप्यक्षरराशेः स्वाध्यायशब्दवाच्यत्वात्तथैवाध्ययनं वैधम् । अर्थप्रतीतेस्तु व्युत्क्रमप्रतिसंहितैरपि पदैस्साधनत्वं को वारयेत् ? न चेहापि तथा, व्युत्क्रमेणोच्चारणस्याशास्त्रार्थत्वात् । अनुच्चारणावस्थाभाविन्याऽर्थप्रतीत्याऽनुष्ठानानुपकारात् । न च नियतक्रमार्थप्रत्यायनेनादृष्टमिति नियन्तुं युक्तम्, तादृशोच्चारणेनावर्जनीयेन तत्संभवे तदधीनातिरिक्तोपादानगौरवात् । यत्र त्वानुशासनिकप्रकृतिप्रत्ययसमासादिषु क्रमनियमः, तत्र क्रमभङ्गेऽपशब्दत्वान्यार्थत्वनिरर्थकत्वादिप्रसङ्गात्तथैव क्रमेण नियतेन भवितव्यम् । इह तु न तथाऽनुशिष्टमिति व्युत्क्रमेणार्थप्रत्यायनं को निरुन्ध्यात् ? क्रमभङ्गे कथं मन्त्रत्वमिति चेत्, माभून्मन्त्रत्वम् । न ह्येतदर्थप्रतीतेरङ्गम् । अर्थप्रतीतिसाधनत्वे तदपेक्षामात्रमेव संरक्षणीयम् । अतो मन्त्रत्वपरिरक्षणायार्थप्रत्यायकमपि व्युत्क्रमपाठं [तं] पौरुषेयं वा वाक्यं ध्यानादिकरणान्तरं चानादृत्य क्रमविशेषवत्स्वप्रकरणस्थवाक्यनियमोऽयमर्थाभिसन्धिं प्रतिबध्नाति ॥ ३२ ॥

## 65. सू०—बुद्धशास्त्रात् ॥ १. २. ३३. ॥ (पू. ३)

अपि च केचिन्मन्त्राः कर्ममध्ये प्रयुज्यमानाः परप्रेषणवन्निगदाः प्रतिपन्नास्साधनरूपा दृश्यन्ते; यथा * अग्नीदग्नीन्विहर इत्येवमादयः । प्रतिपन्नो ह्ययमर्थः पाठमात्रेण । न ह्यनधीतवेदोऽविद्वान्कर्मणि नियुज्यते । अतः क्रमात्प्रागेव शिक्षितात्मीयपदार्थमाग्नीध्रं प्रति प्रैषोऽयमनर्थकः । अथ निश्चितात्मीयपदार्थस्यानुष्ठानकाले स्मरणार्थः प्रैष इति

---

$ तदर्थशास्त्रादित्यारभ्य मन्त्रानर्थक्यमित्यन्तमेकं सूत्रमिति कौस्तुभादितोऽवगम्यते । व्याख्यासौकर्यार्थं खण्डश उपादानमिव । अर्थबन्धनादित्यनन्तरम् अर्थविप्रतिषेधात् इति सूत्रोपादानं तद्विवरणं चात्र नोपलभ्यते ।

चेन्न; सादरपटुतरशिक्षितब्राह्मणार्थविज्ञानाभ्यासमहिमसंजनितसंस्कारविशेषादेव तत्प्रसिद्धेः। संस्कारोद्बोधोऽपि निरन्तरेष्वात्मीयपदार्थेषु पूर्वसमाप्तिमात्राद्ब्राह्मणवाक्यादेव सिध्येत्। न च बुद्धे बोधनमर्थवत्। बुद्धेऽप्युच्चारणमदृष्टद्वारेणोपकुरुते, बोधनं तु दृष्टं सिद्धं चेति न साधनमर्हति। ननु संस्कारातिशयाय द्वितीया बुद्धिरुत्पाद्यते। यच्चात्र सोपानत्के पादे द्वितीयोपानत्परिग्रहवदशक्यत्वं परैर्भाषितम्, पिष्टपेषणं च निदर्शितम्, सोऽपि हस्तसमालोचः, वैषम्यात्; शब्दे हि सहस्रशः पठितेऽपि प्रतिपर्यायं बुद्ध्यन्तरोत्पत्तेः; इति चेन्न; शक्यत्वेऽपि कृतकरत्वस्य दुस्त्यजत्वात्। न हि द्वितीयेन बोधेन प्रथमादधिकमुपकृतम्। अदृष्टं तूच्चारणादेव युक्तमित्युक्तम्॥ ३३॥

**66. सू०—अविद्यमानवचनात्॥ १. २. ३४.॥ (पू. ४)**

अविद्यमानमर्थं केचिन्मन्त्रा वदन्ति—

*चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यॉं आविवेश॥ इति।

न ह्येवंविधः कश्चित् वृषभस्संभाव्यते। यद्यपि लोकोत्तरमर्थं शब्दः प्रतिपादयेदिति साधितम्; तथाऽपि यत्रासौ यज्ञे मन्त्रः, न तत्र प्रकृतौ वा चतुश्शृङ्गत्वादिविशिष्टं कर्म तत्संबन्धि वा किंचिदुपलभामहे, यदभिधानेन प्रमाणमसौ मन्त्रः स्यात्। यदि च यज्ञानुबन्धिनि कस्मिंश्चिदर्थे मन्त्रस्यास्य विवक्षा स्यात्, स कथं समस्तशब्दार्थवित् भगवान् पतञ्जलिर्नामाख्यातोपसर्गनिपातादिरूपेण चतुश्शृङ्गतादीन् कल्पयित्वा शब्दविषयमयोजयत्। अविवक्षितार्थत्वे तु स्वेच्छया स्वाभिमते विवक्षा कल्पयितुं शक्यते। न त्वन्यथा, तथा सति विप्लावकत्वप्रसङ्गात्। एतेन संख्यासादृश्यमात्राहृत्विक्सवनादिषु शृङ्गपादादिरूपो गुणवाद इत्यपि प्रत्युक्तम्, अनुष्ठानानुपकारित्वाच्च। अविज्ञातप्रयोगप्रदेशस्यास्य मन्त्रस्य पाठक्रमात्प्रदेशक्लृप्तौ युक्तं तत एव स्वयंपतितोच्चारणार्थत्वम्। यच्च *नमस्ते अस्तु मा मा हिंसीः इत्यादिर्मन्त्रः, सोऽप्यविद्यमानवचनः। नहि तत्र हिंसा प्रक्रान्ता, येन प्रतिषिध्येत। तस्मादप्रतिषिद्धभागिनमर्थं प्रतिषेधन्नयं मन्त्रोऽपि स्यादविद्यमानवचन एव। एवमन्येऽपि॥ ३४॥

**67. सू०—अचेतनेऽर्थबन्धनात्॥ १. २. ३५.॥ (पू. ५)**

अचेतनं बोधयितुं केचिन्मन्त्रा अर्थं निबध्नन्ति। यथा—*ओषधे त्रायस्वैनँ स्वधिते मैनँ हिँसीः *शृणोत ग्रावाणः इत्यादयः, अनन्तरोदाहृताः *मा मा हिँसीरित्यादयश्च। न चाचेतना ओषध्यादयस्तत्प्रविष्टा वा क्षेत्रज्ञा अभिमुखीकर्तुमर्थं वा बोधयितुं मन्त्राणां पदवाक्यश्रवणादौ नियोक्तुं वा शक्यन्ते। नाप्यत्राभिमानिदेवताविवक्षा शक्या कल्पयितुम्, प्रत्यक्षसिद्धद्रव्यविषयत्वाद्विनियोगस्य। न चान्यस्य विनियोगेऽन्यः प्रकाशनीयस्स्यात्। अत उन्मत्तभाषितसमानाः कथमेते मन्त्राः प्रमाणं स्युः?॥ ३५॥

**68. सू०—स्वाध्यायवदवचनात्॥ १. २. ३६.॥ (पू. ६)**

*स्वाध्यायोऽध्येतव्य इति विधिमनुस्मरन्तोऽधिकारिणस्स्वाध्यायवन्न तदर्थं प्रधानमुपदिशन्ति, अपि तु स्वयं निश्चितार्थास्सन्तः सन्निहितमप्यर्थमनादृत्य यावदक्षरग्रहणं स्वाध्यायस्वरूपमेव शिष्यानध्यापयन्ति। येनाकारेणायमुपयोक्ष्यते तत्रैवायं संग्रह इत्युक्तम्। अत उच्चारणशिक्षणमुच्चारणार्थमेव। उच्चारणं च कर्मण्यपेक्षितं ज्ञानार्थत्वेऽप्य-

वर्जनीयं च। अतोऽर्थमशिक्षयद्भिः स्वाध्यायस्वरूपं शिक्षयद्भिश्शिष्टैरुच्चारणरूप उपकारोऽभिप्रेत इत्युत्प्रेक्षामहे। विध्यर्थवादयोरपि साधारणमिदं चोद्यम्। तयोरपि ह्यक्षरग्रहणपूर्वं वृद्धाः प्रवर्तयन्ति। यदा पुनर्बुभुत्सितार्थानामन्तेवासिनां विध्यर्थवादयोरर्थं व्याकुर्वते, तदाऽपि न मन्त्रभागार्थं परिसंख्याय व्याचक्षते। ततोऽक्षरग्रहणदशायामर्थावचनमात्रेण यदि मन्त्राणामविवक्षितार्थता, तुल्यं विध्यर्थवादयोरपीति शास्त्रार[म्भ एवो]म्भे त्रिपाद्यारम्भे चोपक्षिप्य परिहर्तव्यमिदं चोद्यं किं मन्त्रेषु विशिष्येदानीमभिधीयते? एकदेशद्वारा कृत्स्नवेदाप्रामाण्यमुपपिपादयिषितमिति तदभिव्यक्त्यर्थमिदं सूत्रं [गुरुनये] संगच्छत इति चेत्; तथाऽप्येकदेशद्वारिकाणामेव पूर्वपक्षयुक्तीनामिहोपक्षेप्तव्यत्वम्। तथेह न चास्ति। अध्ययनविधेरर्थग्रहणपर्यन्तत्वेऽपि स्वशक्तेरक्षरग्रहणमात्रविश्रान्तत्वात्पूर्वमर्थानभ्यासः, नत्वर्थानादरात्; अत इदं सूत्रमसंगतम्। मैवम्, एकदेशद्वारिकाया एव युक्तेरिहाभिप्रेतत्वात्। अध्ययनदशायामेव जप्तव्यास्सन्ति केचिन्मन्त्राः, यथा *शं नो मित्रश्शं वरुणः, *सह नाववत्वित्यादयः, यथाच ब्रह्मचारिकर्तव्येष्वपि धर्मेष्वनुप्रविशन्तो मन्त्राः। नहि तेऽपि तदानीमर्थतश्शिक्ष्यन्ते, अपि त्वस्खलितमात्रादिना स्वरूपेणैव। यदि तेषु मन्त्रेषु विवक्षितार्थतयाऽर्थोऽपि तैरनुसन्धेयः, तदा कथं विद्वांसो वृद्धाः तत्तन्मत्रस्वरूपमिव तंतमर्थमपि शिष्यान्न शिक्षयेयुः। अत आरम्भे मन्त्राणामुच्चारणार्थत्वेऽवसिते सर्वत्रैवमिति सूत्राभिप्रायः। एवं वा सूत्रं व्याकुर्मः—स्वाध्यायाध्ययनदशायां यत्प्रकारा मन्त्रा अधीताः, न तथा प्रयोगकाले प्रयुज्यन्ते, अपि त्वर्थज्ञानानुपकारिणा नीचैस्त्वोपांशुत्वैकस्वरमात्रत्वादिभेदेन उच्चार्यन्ते। अतोऽवगच्छामस्समानन्यायतया सर्वत्र उच्चारणविशेषनियमेनैवादृष्टमिति ॥ ३६ ॥

## 69. सू०—अविज्ञेयात् ॥ १. २. ३७. ॥ (पू. ७)

अविज्ञानादित्यर्थः। अविज्ञेयत्वादिति वा। अर्थस्येति शेषः। अर्थप्रतीतौ जायमानायां प्रमाणमप्रमाणं वेति चिन्तावकाशः, न पुनः समुद्रघोषादिषु वर्णक्रमपाठादिषु वा। कतिचन मन्त्रा न कथंचिदर्थं बोधयन्ति। यथा—*अम्यक्सात इन्द्र ऋष्टिरस्मे इति, *सृण्येव जर्भरी तुर्फरीतू, *इन्द्रस्सोमस्य कानुका, इति। एवमविदितपदार्थवाक्यार्थानामेषां मन्त्राणां कस्मिन्नर्थे प्रामाण्यं प्रतिपिपन्महे? उच्चारणार्थत्वे तु हुमादिवदविदितार्थैरपि तैस्तत्सिद्धिः। वस्तुतस्तेषामप्यर्थवत्तया वर्णक्रमादेर्हुमादेश्च विशेष इति चेत्, वर्णेष्वर्थमनधिगमयत्सु कथं भवांस्तेषामर्थवत्तां प्रत्यवादीः। न ह्यर्थवन्त इमे मन्त्रा इत्यनुशृणुमः। नाप्यनुमिमीमहे, योग्यानुपलम्भबाधात्, हुमादिभिरनैकान्त्याच्च। अतः ईदृशानां मन्त्राणामुच्चारणमात्रार्थत्वे तुल्यन्यायतयाऽन्येषामपि मन्त्राणां तादर्थ्यं युक्तमिति ॥ ३७ ॥

## 70. सू०—अनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ १. २. ३८. ॥ (पू. ८)

वेदानामपौरुषेयत्वाय वेदानां प्रामाण्याय च पूर्वमनित्यसंयोगावुदाहृतौ। इह पुनर्मन्त्राणामविवक्षितार्थत्वाय मान्त्रवर्णिकस्स एव पुनरारभ्यत इत्येवं मन्यते। यथा—*किं ते कृण्वन्ति कीकटेषु गाव इत्यादयो मन्त्राः कीकटादिसंज्ञितान् जनपदनगरराष्ट्रप्रभृतीननित्यान्पदार्थान् कर्माङ्गभूतानुपाददते। तेषां चेदर्थविवक्षा, नित्येऽनित्यसंयोगविरोधाद्वेदाप्रामाण्यं प्रसज्यते। उच्चारणार्थत्वे तु नैवं दोषः। ईदृशार्थस्य प्रवाहयुक्त्या प्रागेव परिहृतत्वात् वयं नाम्रेडितमर्थमभिदध्महे। मन्त्राणां स्वप्रतिपाद्यैरर्थैः, **अनित्यसंयोगात्**—अनियतसंयोगादित्यर्थः। एकैक एव हि मन्त्रो विनियोगभेदेन तत्तदनुरूपान्नानार्थान्प्रतिपादयतीति निरुच्यते नैरुक्तैः। तत् कस्य हेतोः, ऋते मन्त्राणामविवक्षितार्थ-

त्वात् ? विवक्षितार्थत्वे वा कथं स्वार्थं जह्यात्, अन्यद्वा कथं वदेत् ? एवम् * ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादि-विनियोगबलादिन्द्रादिरूपान् स्वार्थान् परित्यज्य स्वकार्यसामर्थ्यादिनिमित्तनिर्वचनादिमुखेन गार्हपत्यादीनर्थान्मन्त्राः प्रतिपादयन्तीति व्याचक्षते । अतोऽयमनित्यसंयोगप्रभेदः । तदेवं तदर्थशास्त्रादिभिर्ज्ञापकैः प्रत्यायकैश्च युक्तिभेदैरविशेषात् सर्वत्र मन्त्रेषूच्चारणमेव विवक्षितम्, नार्थज्ञानमित्यविवक्षितार्थत्वान्मन्त्रा न प्रमाणमिति ॥ ३८ ॥

अत्र राद्धान्तमारभते—**71. सू०—अविशिष्टस्तु वाक्यार्थः ॥ १. २. ३९. ॥** (सि. १)

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । व्युत्पन्नैः पदैरवगम्यमानो वाक्यार्थो वेदे लोके च समानः । तान्येव च पदानि संहत्य लोकोत्तरमर्थं प्रतिपादयितुं लोकवदेव वेदे व्युत्पत्त्यनुसारेण शक्नुवन्तीत्युक्तम् । स्वतःप्रामाण्यं च प्रागेव साधितम् । कारणदोषाशङ्का च परिहृता । ये पुनस्तदर्थशास्त्रादयः क्षुद्रोपद्रवाः, ते कारणदोषबाधकप्रत्ययरहितप्रतीतिजन्मनैव प्रत्युक्तप्रायाः । मान्त्रवर्णिकप्रतीतिः प्रमाणम्, कारणदोषबाधकप्रत्ययरहितप्रतीतित्वात्, आप्तवाक्यजन्यप्रतीतिवत् ; विध्युद्देशादिवाक्यार्थप्रत्ययवत् ; इति । इदमप्यविशिष्ट इत्यनेनैव सूचितम् । असिद्ध्यन्यथासिद्ध्यादिपरिहारस्तदर्थशास्त्रादिप्रत्युत्तरेणैव सेत्स्यति । एतदुक्तं भवति—तदर्थशास्त्रेणापि कर्मसु विनियुक्तैर्मन्त्रैस्तच्छेषतया तत्रतत्र किंचित्कर्तव्यम्, कर्मणां चानुष्ठानेऽर्थप्रकाशनमपेक्षितम्, मन्त्रैश्चाविहतस्वाभाविकशक्तिभिरर्थप्रकाशो जायमानो दृश्यते । अतोऽनुष्ठानोपयुक्तार्थप्रकाशनेनोपकुर्वत इति युक्तमाश्रयितुम् ; दृष्टे संभवत्यदृष्टकल्पनस्यान्याय्यत्वात् । नियममात्रस्य च दृष्टाविरोधेन सिद्धेः । शक्त्यनुसारेण च विनियोगोपपत्तेः । सन्निहितस्य च वाक्यार्थप्रत्ययस्याक्रुतार्थप्रयोगेऽनुप्रवेशयितुं युक्तत्वात् । उच्चारणपदार्थज्ञानादेस्त्वेवमपि चरितार्थत्वात् । अचेतनसंबोधनाद्यनुपकार्यर्थप्रकाशनस्य च परिहरिष्यमाणत्वात् । अतो * बर्हिर्देवसदनं दामीत्यादिमन्त्राणां तावदविहतार्थप्राधान्यानामनाकुलं प्रामाण्यमिति ॥ ३९ ॥

अतस्त्रिभिस्सूत्रैरुदाहरणविशेषेषु पुनःश्रुतिं प्रकारान्तरेण परिहरति । * चतुर्भिरादत्त इत्यत्र चतुर्णां मन्त्राणां रूपादेवाभ्र्यादाने विनियोगः प्राप्यत इति न पुनर्विधानमर्हति । न ह्येतत्संख्याविशेषार्थं पुनःश्रवणम्, चतुष्ट्वस्यापि तेषु सिद्धत्वात् । नच निष्क्रियत्वात् क्रियाङ्गतया विशेष्टुमलम् । नापि समुच्चयः, चतुष्ट्वोक्तिप्रत्येकसामर्थ्यात्प्राप्ते विकल्पे समुच्चयस्यान्याय्यत्वात् ; समुच्चयाभिधायिनश्चशब्दस्यादर्शनाच्च । अतोऽर्थपरत्वे निरर्थकमिदं पुनर्वचनम् । पक्षान्तरे त्वभ्र्यादाने प्राप्तानामेव तत्र विनियोगः प्रमाणान्तरेणाप्राप्तेश्चतुष्ट्वमप्यदृष्टार्थं गमयतीति युक्तः समुच्चय इति । तत्राह—

**72. सू०—गुणार्थेन पुनश्श्रुतिः ॥ १. २. ४०. ॥** (सि. २)

स्वरूपादेवाभ्र्यादाने प्राप्तानामेषां मन्त्राणां पुनरभ्र्यादाने विधानम्, **गुणार्थेन**—चतुष्ट्वसंख्यारूपगुणविधानार्थम् । यद्यपि चतुष्ट्वं तेषु स्वतःसिद्धम्, तथाऽप्यभ्र्यदानार्थतया न प्राप्तमिति युक्तस्तद्विधिः । सामानाधिकरण्यलब्धगुणवैशिष्ट्यस्य कारकस्य क्रियाद्वयविधौ न कश्चिद्विरोध इत्यरुणाधिकरणे वक्ष्यते । न चात्र विकल्पप्राप्त्या विरोधः, लैङ्गिकत्वादत्र विकल्पप्राप्तेः, समुच्चयस्य श्रौतत्वात् । न चात्र समुच्चयशब्दो नास्तीति वक्तुं युक्तम्, क्रियावेषे च चतुष्ट्वस्य समुच्चयशब्दमन्तरेणापि सिद्धेः । अत एवंविधेषु पुनश्श्रुतेरप्राप्तगुणविधिपरत्वान्न तदर्थशास्त्रविरोध इत्यभ ङ्गुरमर्थपरत्वम् ॥ ४० ॥

ननु *इमामगृभ्णन् रशनामृतस्येत्यादिषु सामान्यलिङ्गेषु मन्त्रेषु यद्यर्थविवक्षा स्यात्, तदा *अश्वाभिधानीमादत्त इति विधानमनर्थकं स्यात्, मन्त्रलिङ्गेनैवाश्वाभिधान्या अपि रशनायाः प्राप्तत्वात्। अत्यन्ताप्राप्ते हि विधिः प्रवर्तते। तत्राह—

**73. सू०—परिसंख्या ॥ १. २. ४१. ॥** (सि. ३)

सत्यमत्यन्ताप्राप्ते विधिः। न त्वसौ करिष्यते, अपि तु परिसंख्या। स तु सामान्यतः प्राप्तिमपेक्षेतैवेति मन्त्रस्यार्थविवक्षा तदुपकारिका। अतोऽत्राश्वाभिधानीविधानं गर्दभरशनावर्जनस्य बोधनार्थमिति न पुनश्श्रुतिः। नन्वेवं स्वार्थप्रहाणं परार्थकल्पनं प्राप्तबाधश्चेति दोषत्रयं स्यात्; किमतः? गत्यन्तराभावे सोढव्यत्वात्। अत्यन्ताप्राप्तविषयविधिवत्, अपुष्कलविषयनियमवत्, पुष्कलप्राप्तैकदेशलक्षणायाः परिसंख्याया अपि लोकव्युत्पत्तिसिद्धत्वात्। लोके हि विशेषविधिरेवकारादिवन्निषेधं गमयति, विशेषनिषेधः शेषानुज्ञानम्। किंचिदप्रामाण्यमेकतः, परिसंख्यादोषत्रयमेकतः, तत्र कतरल्लघीय इति निपुणं निरूप्यताम् ॥ ४१ ॥

ननु तत्र चान्यत्र च प्राप्तावन्यतरविधानं परिसंख्यार्थमिति युक्तम्, यत्र तु तत्रैव प्राप्तिश्शब्दात्परिशेषाद्वा, तत्र *उरु प्रथस्वेति पुरोडाशं प्रथयतीत्यादौ पुनश्श्रुतिवैयर्थ्यपरिहाराय मन्त्रस्याविवक्षितार्थत्वं युक्तमास्थातुम्। तत्राह—

**74. सू०—अर्थवादो वा ॥ १. २. ४२. ॥** (सि. ४)

वाकारो व्यवस्थितविभाषाविकल्पार्थः। पुनश्श्रुतिः क्वचिद्रशनादानादौ परिसंख्यार्था, क्वचित्पुरोडाशप्रथनादावर्थवादार्था। एतदुक्तं भवति—अप्राप्तं पुरोडाशप्रथनमेवात्र विधेयम्, न तु मन्त्रस्तत्र विनियुज्यते, सामर्थ्यादेव प्राप्तस्सन्प्रथनस्तुत्यर्थं पुनर्विधीयते। *यज्ञपतिमेव प्रजया पशुभिः प्रथयतीति प्रथनं स्तूयते। तत्रैवमाशङ्केमहि—कथं पुरोडाशः प्रथन्यजमानं प्रथयतीति। सैषा शङ्का मन्त्रलिङ्गप्रधानप्रकाशनेन निवर्त्यते। *उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति यज्ञपतिप्रथनाशिषा हि मन्त्रेण प्रथनं क्रियते। अत इदं प्रथनमनेन मन्त्रेण क्रियमाणं यज्ञपतिप्रथनकारणं भवतीति। न चैवमसता स्तुतिः, मन्त्रोदितस्य हि फलस्यां[ग]शविषयस्यापि प्रधानाविरोधिनस्स्तुत्यर्थं पुरस्कृतस्यापि तदपेक्षितत्वेनैव परित्यागायोगात्। उक्तं च भाष्यकारैश्श्रीमद्गीताभाष्ये—*बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनामित्येतद्व्याचक्षाणैः प्रधानाविरोधिनां मन्त्रोदितफलानां विवक्षितत्वम् ॥ ४२ ॥

एवं बहुधा पुनश्श्रुतिः परिहृता। अथ क्रमनियमस्यान्यथासिद्धिमाह—

**75. सू०—अविरुद्धं परम् ॥ १. २. ४३. ॥** (सि. ५)

यन्मन्त्रस्थानां पदानां क्रमनियमेनोच्चारणम्, तदर्थादृष्टकल्पनं वा, तन्मन्त्रस्य विवक्षितार्थत्वेऽप्यविरुद्धम्। **परम्**—अनन्तरोक्तमित्यर्थः। केवलमिति वा। क्रमनियमोच्चारणादिकं केवलम**विरुद्धम्**—पक्षद्वयसाधारणम्, न क्वचित्पक्षे पतितमित्यर्थः। अथवा **परम्**—उच्चारणादितरदर्थज्ञानम्, अदृष्टार्थोच्चारणनियमेनाविरुद्धम्। यद्वा उच्चारणमदृष्टार्थमिति वदता यतः परमेवं क्रमैरदृष्टमिति नियमितम्, तदर्थप्रत्यायनपक्षेऽप्यविरुद्धम्। एतदुक्तं भवति—दृष्टमर्थज्ञानं तावद्दुरपह्नवम्, बाधाद्यभावश्च सिद्धः, सोपयोगिता च दर्शिता, एवं स्थिते यथा क्रमनियमेनोच्चारणमदृष्टार्थं तथैव नियमयोगेन प्रत्यायनमदृष्टाय स्यादिति ॥ ४३ ॥

बुद्धे बोधनमपि नियमार्थतया समाधत्ते—

**76** सू०—**संप्रैषे कर्मगर्हाऽनुपालम्भस्संस्कारत्वात्** ॥ १. २. ४४. ॥ (सि. ६)

*अग्नीदग्नीन्विहरेत्यादिसंप्रैषे बुद्धबोधनरूपस्य कर्मणो गर्हा या पूर्वमुक्ता, तस्याः, अत्र **अनुपालम्भः**—पुनर्बोधनगर्हारूप उपालम्भोऽत्र न कर्तुं शक्यत इत्यर्थः । पुनर्बोधनस्य नैरर्थक्यप्रसङ्गे हि मन्त्रस्याविवक्षितार्थताक्लृप्तिः, तत्तु सार्थकम् । तथा हि—स्वाध्यायकाले बुद्धस्येदानीं बोधनं तावन्न निरर्थकम्; तदातनधियां क्षणिकतया यावत्प्रयोगकालमनवस्थानात् । तासां संस्कारमात्राविशिष्टत्वात्, प्रयोगस्य च तदानींतनप्रयोक्तव्यधीसाकाङ्क्षत्वात् । अथ केनचित्प्रत्ययमार्गादिना प्रयोगकालेऽपि स्मृतिस्संभवतीति पुनर्बोधननैरर्थक्यं शङ्क्येत, तदपि न, नियमार्थत्वात् । अनेनोपायान्तरेण वा प्राप्ता स्मृतिरनेनैवोपायेनेति नियम्यते । संस्कारत्वादित्यस्य पुनस्स्मृतिसंस्कारार्थत्वादित्यर्थः ॥ ४४ ॥

अविद्यमानवचनं परिहरति—**77.** सू०—**अभिधानेऽर्थवादः** ॥ १. २. ४५. ॥ (सि. ७)

*चत्वारि शृङ्गा त्रय इत्यादिकं नाविद्यमानवचनम्, *हिरण्मयः पुरुषो हिरण्यश्मश्रुर्हिरण्यकेश इत्यादाविवाञ्जसैव विश्वसृजो रूपविशेषस्य प्रतिपादनात् । विग्रहादिमत्त्वञ्च देवतानां समर्थयिष्यते । ईदृशं च रूपमद्यापि क्वचिदर्चयन्ति । स्मरन्ति च वैखानससंहिताभेदकर्तारो महर्षयः । अत ईदृशस्य रूपविशेषस्य प्रतिपादकेन मन्त्रेणान्याभिधानेऽर्थवादः । मन्त्रेऽप्यर्थवादशब्दो व्युत्पत्तिसाम्याद्यथाकथंचित्सारूप्यात्तद्रूपत्वमारोप्यार्थवाद इत्यर्थकः । अत एव हि भगवान् पतञ्जलिस्स्वाभिमतं शब्दतत्त्वं स्तुवानो नामाख्यातोपसर्गनिपातादिमुखेन संख्यानिवेशात्सारूप्यारोपणेनेममेव मन्त्रमनुसन्दधानः पुनरस्य विवक्षितं स्वेष्टमर्थं कल्पयामास । अस्य च मन्त्रस्यायमर्थः—*यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्त्वतैरित्यादिप्रसिद्धो योऽसौ यज्ञपुरुषः अस्य चाग्नेये पुरुरूपे चत्वारि शृङ्गाणि, त्रयः पादाः, द्वे शीर्षे, सप्तहस्ताश्च । त्रिधा बद्धः—अग्नित्रयरूपेण यायजूकैर्बद्धः । क्रियादिरूपेण वा त्रिधाऽवस्थितः । वृषभः—वृषभसमानावयवत्वात्; नरसिंहमहावराहादिवत् । अर्थिनां पुरुषार्थान्वर्षतीति वा । रोरवीति—श्रुतिसुखरसुखत्वात् । तथा च श्रूयते—*तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद इति । महाभारते यज्ञानुबन्धिरूपान्तरप्रादुर्भावे पठ्यते—*ओङ्कारमुद्गिरन्वक्त्रात्सावित्रीं च तदन्वयादिति । महोदेवः—महान् सर्वातिशायी महनीय इति वा; यद्वा महः—उत्सवः, यज्ञरूपशास्त्रीयोत्सवाधिदैवतत्वात्, देवः—जगद्व्यापारादिभिश्शास्त्रीयैश्च स्वाराधनरूपैः कर्मभिर्दीव्यन् । मर्त्यान्—यज्ञाधिकारिणः पुरुषान् । आविवेश—*ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतमितिन्यायेन परिकरानध्यतिष्ठदिति । नन्वपां सूक्ते पठितोऽयं मन्त्रोऽब्दैवत्यः प्राप्तः, *समुद्रादूर्मिरित्यपां सूक्तमेकादशर्चकमिति स्नाने शौनकेन विनियुक्तश्चेति नैतादृशार्थपर इति चेन्न; पुरुषस्यैवापाम्पतित्वात् । यथोक्तं **स्नानयाज्ञवल्क्ये**—

*प्रणवं वा त्रिरभ्यस्येत्स्मरेद्वा विष्णुमव्ययम् । विष्णोरायतनं ह्यापस्स ह्यपाम्पतिरुच्यते ॥ इति ।

अतः स्नानेऽस्य विनियोगोऽप्युपपन्नः । अपां च विष्णुना सनाथतया पावनतमत्वादिलक्षणा प्रशस्तिर्दर्शिता भवति । न चान्यस्य कस्यचिदप्स्वरूपानुबन्धिन एवं रूपमस्ति । अतोऽत्र रूपविशेषवत्परमात्मप्रतिपादकत्वं नानुपपन्नम् ।

यत्पुनः *अचेतनेऽर्थबन्धनात् इत्युक्तम्, तत्र साक्षादुत्तरस्य शारीरके समर्थनीयत्वादुक्तन्यायेनार्थवादत्वस्य सुवचत्वाच्च न पृथक्सूत्रेण पर्यभाषीत् । अचेतने हि चैतन्यारोपणेन स्तुतिः । यथा चेतनेषु तत्तत्सामर्थ्यद्वारा तत्तत्कार्य-

सिद्धिः, एवमचेतनेष्वपीति चेतनत्वोपचारः । साक्षादुत्तरं तु—सर्वं हि वस्तुजातं तत्तदभिमानिदेवताविशेषैरधिष्ठितं तत्तदात्मकत्वेन एकया वाचा निर्दिश्यते, अतस्तत्संबोधनादिकमुपपन्नमिति । * मैनँ हिंसीरित्यादिकमपि तत्तद्द्रव्यशरीरकचेतनपीडाहेतुत्वपरिहाराभिप्रायेण ॥ ४५ ॥

अर्थप्रतिषेधं परिहरति—

**78.** सू०—**गुणादविप्रतिषेधस्स्यात्** ॥ १. २. ४६. ॥ (सि. ८)

अयमर्थः—यत्र निपुणनिरूपणे विरोधो नास्ति, तत्र न किंचित्कर्तव्यम्, यथा—* एक एव रुद्र इत्यादौ । अत्र हि न रुद्रनानात्वं व्युदस्यते । न च रुद्रेतरन्निषिध्यते । नापि रुद्रतुल्यमितरन्नास्तीत्युच्यते । अपि तर्हि कर्मविशेषस्यैव रुद्रदेवताकत्वमुच्यते, * आखुस्ते रुद्र पशुस्तं जुषस्व इति वाक्यशेषानुसारात् । तथा च शाबरम्—* एकरुद्रदैवत्ये [कर्मणि] एको रुद्रः, शतरुद्रदैवत्ये शतं रुद्रा इत्यविरोध इति । यत्र तु मुख्यार्थे विरोधः स्फुटः, यथा—* अदितिर्द्यौरदितिरन्तरिक्षमित्यादौ, तत्र **गुणादविप्रतिषेधस्स्यात्**—एकस्मिन्नेव, नरपतिरेव सर्वलोकः, त्वमेव मे माता पिता च इत्यादाविवोपचारादविप्रतिषेधस्स्यात् । यत्पुनः—* पुरुष एवेदँ सर्वमित्यादि, तत्र विप्रतिषेधादिप्रसङ्गाभावः स्थाने समर्थयिष्यते । अर्थवादोक्तगुणवादसमानयोगक्षेमत्वेऽपि मन्त्रेषु पुनरभिधानं मन्दमतीनां प्रतिसन्धानार्थम् ॥ ४६ ॥

यदुक्तं स्वाध्यायस्वरूपवदर्थज्ञाने संरम्भो न दृष्ट इति, तत्राह—

**79.** सू०—**विद्यावचनमसंयोगात्** ॥ १. २. ४७. ॥ (सि. ९)

स्वाध्यायग्रहणकालेऽर्थज्ञानाकरणं तदानीं कर्मभिरसंयोगात् । न ह्यध्ययनदशायामेव ज्योतिष्टोमादीनि कर्माण्यनुष्ठेयदशापन्नानि, येन तदानीमेव तत्तन्मन्त्रैरर्थप्रकाशने प्रयतेमहि । पश्चात्तु मीमांसमानैः भाव्यनुष्ठानोपकारायार्थज्ञानं संपाद्यते । न च तत्पूर्वं शक्यमिति शास्त्रादौ दर्शितम् । अथ तदानीमपि किमर्थमर्थज्ञानं नाभ्यस्यन्तीति चेत्; पटुतरज्ञानाभावादिति वदामः । भवादृशैस्तु पटुतरप्रज्ञैरर्थज्ञानवत् स्वाध्यायोऽपि सकृदेव गृह्यत इति किं तत्र न चोदयसि? अतो विषयानुरूपमधिकारानुरूपं च द्वयोरपि संभव एवेति ॥ ४७ ॥

यत्तु केषुचिन्मन्त्रेष्वर्थज्ञानानुदयादप्रामाण्यमुक्तम्, तत्राह—

**80.** सू०—**सतः परमविज्ञानम्** ॥ १. २. ४८. ॥ (सि. १०)

* सृण्येव इत्यादिमन्त्रेष्वपि प्रतिपाद्यत्वेन सत एवार्थस्य केवलमव्युत्पन्नानामविज्ञानम् । न च तावता निरर्थकत्वम्, पुरुषाणां प्रेक्षाव्युत्पत्त्योस्तारतम्यादनियमेन सर्वेष्वपि वाक्येष्वविज्ञातार्थतया प्रामाण्यभङ्गप्रसङ्गात् । अत एव स्वयमपरिज्ञानात्सर्वैरप्यविज्ञेयत्वं कल्पयितुं न शक्यम् । जानन्ति तावन्महर्षयः, तदुपदेशात्पारम्पर्याच्च वयमपि तथा ॥

**81.** सू०—**उक्तश्चानित्यसंयोगः** ॥ १. २. ४९. ॥ (सि. ११)

प्राक्तनानित्यसंयोगविवक्षायां प्रागेव प्रवाहयुक्त्या परिहार उक्त इत्यर्थः । जनपदनगरादयोऽपि श्रुतिसिद्धास्तत्तन्नामादिविशिष्टाः प्रवाहानादयः । यदा तु मन्त्राणामनियतार्थयोगित्वमनित्यसंयोगोऽभिमतः, तदा विध्युक्तोऽयमनित्य-

संयोगो विधिबलादेव स्वीकार्य इत्यभिप्रायः । एतदुक्तं भवति—एकैको मन्त्रो यत्रयत्रानेकेष्वर्थेषु विनियुज्यते, तत्र सर्वत्र प्रकाशनाय प्रयतताऽपि यत्र मुख्यार्थो न बाध्यते, तत्र शक्त्या प्रवर्तते, तद्बाधे चोपचारतोऽवयवशक्त्या वेति सममत्र समाधानमिति ॥ ४९ ॥

एवमविवक्षितार्थताहेतवस्सर्वे परिहृताः, अथ विवक्षितार्थत्वे हेतवश्च सन्तीत्युच्यते—

**82. सू०—लिङ्गोपदेशश्च तदर्थवत् ॥ १. २. ५०. ॥** (सि. १२)

* आग्नेय्याग्नीध्रमुपतिष्ठत इत्यादिषु या अग्न्यादिदेवता तत्प्रतिपादनसामर्थ्येन च लिङ्गेन तदुपस्थानोपदेशो मन्त्रस्यार्थविवक्षायामेवोपयुज्यते । योऽयं तद्धितप्रत्ययोपदेशः, सोऽपि तदर्थवन्मन्त्रेषु तदर्थेष्वेव । न ह्यतदर्थेषु मन्त्रेषु तद्दैवतकस्तद्धितः, या तेनोच्यते सा देवतेति वा निरुच्यते । प्रधानतयोक्तिश्चात्र विवक्षिता । अन्यथैकैकेषु मन्त्रेषु नानादेवताप्रसङ्गमात्रेण विशेषनिर्देशभङ्गप्रसङ्गात् । प्राधान्यं चार्थविवक्षामन्तरेण न घटत इति प्रमाणतयाऽभ्युपगतविनियोजकवाक्यानुसारेण मन्त्राणां विवक्षितार्थत्वसिद्धिरिति ॥ ५० ॥

**83. सू०—ऊहः ॥ १. २. ५१. ॥** (सि. १३)

ऊहश्च दृश्यमानो मन्त्राणामर्थविवक्षां साधयति । प्रकृतावुद्दिष्टानां मन्त्राणां विकृतौ तत्तदुचितः प्रकृतिप्रत्ययाद्यूहो दृश्यते । यदि च प्रकृतावविवक्षितार्था मन्त्रा उच्चारणमात्रेणादृष्टार्था भवन्ति, विकृतावपि स्वयमविकृतास्सन्तः किमदृष्टाय न घटन्ते ? अथ प्रकृतावर्थप्रकाशनेनोपकुर्वन्ति, तदा यथोपदेशमुच्चारितैर्विकृतावर्थप्रकाशनासंभवाद्वचनाभावे चैन्द्रीन्यायानवतारादूहोऽर्थवान् । ननु ऊहविधायकं न किंचिद्वाक्यं दृश्यते । न्यायेन चेत्साध्येत, मन्त्राणां विवक्षितार्थत्वे न्यायेनोहः, न्यायसिद्धोहबलाच्च विवक्षितार्थतेत्यन्योन्याश्रयणम् । मैवम्, श्रुत्यैवोभयप्राप्तेः । तथा हि—* न माता वर्धते न पितेत्यूहप्रतिषेधस्तावत्प्रसक्तिमन्तरेण न घटते, विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् अन्यत्रोहोऽवगम्यते । कथमयमूहप्रतिषेधः? इत्थम्, न ह्यत्र मात्रादीनामर्थानामवयवपुष्ट्यादिरूपा वृद्धिर्निषिध्यते, प्रत्यक्षविरोधात् । अतः प्रकृतमन्त्रस्थानां मात्रादिशब्दानां द्विवचनबहुवचनयोस्संभवन्ती वृद्धिरूहात्मा निषिध्यते । अयं चोहो मन्त्रस्य विवक्षितार्थतया सर्ववस्तुविशेषणभूतमातापित्राद्युपादित्सायां प्रसक्तस्सन् प्रतिषेधमर्हति । ननु * न माता वर्धत इत्यादौ न स्वयमूहः प्रतिषिध्यते, किंतु परार्थेषु मातृप्रभृतिषु संबन्धिभेदात् भिद्यमानेषु न्यायप्राप्तमनूह्यत्वं सिद्धमेवानूद्यते ; अत ऊहस्य कथं श्रौतत्वमिति स्थितं मिथस्संश्रयणम् । तन्न, निष्प्रयोजनानुवादासंभवात् । न्यायप्राप्तानूहानुवादस्यानूहन्यायागोचरेषु स्थलेषूहस्य शास्त्रीयताज्ञापनमेव प्रयोजनम् । तेन च प्रकृतौ विवक्षितार्थतामध्यवस्यामः । किंच * अन्यदैवत्यः पशुराग्नेय्येवमनोताकार्येति न्यायगोचरोऽनूहस्संकीर्त्यते । इदमपि च प्रकृतावर्थविवक्षायामूहप्राप्तावेव स्यात् ॥ ५१ ॥

**84. सू०—विधिशब्दाच्च ॥ १. २. ५२. ॥** (सि. १४)

इतश्चार्थवन्तो मन्त्रा दृश्यन्ते । अयमस्य मन्त्रस्यार्थ इति विधानं ब्राह्मणं प्रायशोऽधीमहे—* इषे त्वोर्जे त्वेत्याह, इषमेवोर्जं यजमानो दधातीत्यादिकम् । ब्राह्मणोक्तस्य चार्थस्य वैशद्याय मन्त्रास्संवाद्यन्ते—* तदेषाऽभ्युक्ता, *तदुक्तमृषिणेत्यादिभिः । अप्रसिद्धं च मन्त्रस्थं पदं प्रसिद्धैः पर्यायैरर्थतोऽभिव्यक्ताः(?) । अवयवविभागादिना च नि-

वेक्ति निरुक्तं नामाङ्गम् । अविवक्षितार्थत्वे मन्त्राणां कथमेतत्सर्वमुपपनीपत्स्यते । अयमभिप्रायः—मन्त्राणामर्थवत्त्वं व्युत्पत्त्यनुगुणया श्रुत्यैव कण्ठोक्तम् । अविवक्षितार्थता तु व्युत्पत्तिमर्यादामवधीरयद्भिस्तदर्थशास्त्रादिभिः कल्प्या । न ह्यर्थवत्त्ववदविवक्षितार्थत्वे कश्चिच्छब्दः । अतस्तदर्थशास्त्रादयस्सर्वे श्रुत्यैवापहृतविषया इति नाविवक्षितार्थत्वं साधयितुं प्रभवन्तीति । तस्मान्मन्त्राः प्रत्यक्षाद्यविरुद्धेष्वपूर्वेष्वर्थेष्वभिधेयोपचारेण वा प्रमाणमिति सिद्धम् ॥

ब्राह्मणैर्विधिशेषैस्तु मन्त्रार्थप्रतिपादकैः । अर्थप्रणाड्या मन्त्राणामङ्गचकार्युपकारिता ॥
विध्येकवाक्यताशून्या मन्त्राः क्वचिदपि स्थिताः । तथाऽपि स्वार्थबोधेनानुष्ठानस्योपकुर्वते ॥
स्वापेक्षितार्थबोधेन प्रयोगक्षणभाविना । मन्त्रेण सहसा लब्धे नान्यो हेतु[र्गवेष्यते] रपेक्ष्यते ॥
अतोऽध्ययनसंसिद्धमन्त्रार्थस्मृतिपूर्वकम् । अनुष्ठेयं तदर्हैस्तदिति शास्त्रार्थनिश्चयः ॥
परापरसमाख्यातदेवतावैभवेषु च । समर्थयिष्यमाणेषु सफलेयमितिक्रिया ॥
यद्वृत्तप्रमुखैर्येषां विधिशक्तिर्न हन्यते । तेषां विधिपरत्वं च मन्त्राणामिह सिध्यति ॥ ५२ ॥

**॥ इति मन्त्राधिकरणम् ॥ ४ ॥**

पुमर्थशासने विभोः प्रशासनानुवर्तिनि । प्ररोचनप्रकाशनप्रकार एवमाहितः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

**॥ सेश्वरमीमांसाख्ये धर्ममीमांसाभाष्ये प्रथमस्याध्यायस्य द्वितीयः पादः ॥**

(एतावदेवोपलभ्यते)

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः।

श्रीमते हयग्रीवाय नमः। श्रीमते रामानुजाय नमः।

श्रीमते निगमान्तमहादेशिकाय नमः।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्ताचार्यविरचिता

# ॥ न्यायपरिशुद्धिः ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी। वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

## ॥ प्रत्यक्षाध्याये प्रथमाह्निकम् ॥

पत्युः संयमिनां प्रणम्य चरणौ तत्पादकोटीरयोः संबन्धेन समिध्यमानविभवान् धन्यांस्तथाऽन्यान् गुरून्।
शुद्धं संश्रितबादरायणतनोर्नारायणस्योक्तिभिः श्रीमान् वेङ्कटनायकः स्थितिपदं निर्माति नीतेः शुभम् ॥

विद्यास्थानेषु धर्म्येषु गण्यते न्यायविस्तरः। स च विप्लावितस्तैस्तैस्ततोऽत्र परिशोध्यते ॥

### ॥ गौतमसूत्रबहिष्कारपक्षः ॥

यद्यपि कथंचिदाक्षपादं सत्पक्षे निक्षेप्तुं शक्यम्; न च कणभक्षपक्षनिक्षेपवत् क्लेशः; नापि तत्कर्ता गौतमस्तामसेषु परिपठ्यते; नापि च विप्रलम्भकत्वख्यातिः; तथाऽपि ब्रह्मसूत्रकारादिबहिष्कृतत्वान्नातीव वयमाद्रियामहे। न खल्वार्षत्वादिभिस्तदादरः, अतिप्रसङ्गात्।

प्राज्ञानां प्रथमेनैव गुरुणा हि स्वयं पुरा। लोकायतमतं प्रोक्तं लोकविप्लवकारणम् ॥

अथवा पितामह एवात्र प्रमाणम्, य इन्द्रविरोचनयोश्चार्वाकमतमुपदिष्टवान्। तथा गौतमोऽपि संभाव्यते। अथापि,

* काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः। त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥ इति स्मृतेः,

* बहवः पुरुषा राजन् सांख्ययोगविचारिणः। नैत इच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥

समासेन तु तद्व्यासः पुरुषैकात्म्यमुक्तवान् ॥

इति महाभारतोक्तेश्च युक्तं तत्तद्बहिष्कारः; इह तु न तथेति चेन्न, तुल्यन्यायतया वचनस्योपलक्षणार्थत्वात्। न खलु तद्वा तादृग्वेति कश्चिद्विशेषः। यद्यपि काशकुशावलम्बनन्यायेन पक्षान्तरादाधिक्यमस्य पक्षस्य, तथाऽपि न तद्वेदान्तसंनिधौ; न खलु मशकाद्बलिष्ठोऽपि मातङ्गः कण्ठीरवमुपरुणद्धि ॥

* यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद। कुतार्किकाज्ञाननिवृत्तिहेतुः करिष्यते तस्य मया निबन्धः ॥

इति वाक्यमक्षपादपक्षपातेनोक्तमित्यनास्थेयम् ॥ उक्तं च पूर्वाचार्यैः—

* काणादमाक्षपादं वा कापिलं तन्त्रमेव वा । तन्त्राण्येतानि सर्वाणि न तन्त्राण्यात्मनिर्णये ॥ इति ॥

अत एव हि * एतेन शिष्टापरिग्रहा अपि व्याख्याताः इति सूत्रे भाषितम्—एतेन—वेदापरिगृहीतसांख्यपक्षक्षपणेन, शिष्टाश्च ते वेदापरिगृहीताः कणभक्षाक्षपादक्षपणकभिक्षुपक्षाः क्षपिता वेदितव्याः इति । न च सूत्रनिबद्धं सर्वं विद्यास्थानमिति नियमो दृष्टः ; न चैक एवैकस्य विद्यास्थानस्य सूत्रकृदित्यपि वा ऋषिरित्येव वा राजाज्ञा, अन्यैरपि च तत्करणदर्शनात् ॥

१. प्रमाणशब्दस्य भावे करणे च व्युत्पत्तिः । २. एवं [अत्र] च प्रमैव प्रमाणमित्येके । ३. प्रमाकरणमेवेत्यपरे । ४. तयोरन्यतरदित्यन्ये । ५. यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमाणम् । ६. यदज्ञानात् संसारो यज्ज्ञानात् तन्निवृत्तिस्तत् प्रमेयं मुमुक्षुभिः प्रकर्षेण मेयत्वात् । ७. सामान्यतो वा प्रमाविषयः प्रमेयम् । ८. तद्द्विविधं द्रव्याद्रव्यभेदात् । ९. आगन्तुकधर्माश्रयो द्रव्यम् । १०. अतथाभूतमद्रव्यम् । ११. द्रव्यं द्वेधा जडमजडमिति । १२. जडं च द्वेधा प्रकृतिः काल इति । १३. अजडं च तथा प्रत्यक् परागिति । १४. प्रत्यगपि द्विविधं जीव ईश्वर इति । १५. परागपि तथा धर्मभूतज्ञानं नित्यविभूतिश्चेति । १६. अथवा द्रव्यं द्विविधमात्मानात्मभेदात् । १७. त्रेधा वा भोक्तृभोग्यनियन्तृश्रुत्यनुसारात् । १८. षोढा वा त्रिगुणकालजीवेश्वरशुद्धसत्त्वमतिभेदात् । १९. अस्वयंप्रकाशं जडम् । २०. स्वयंप्रकाशमजडम् । २१. मिश्रसत्त्वाश्रयः प्रकृतिः । २२. कालः क्षणलवादिव्यवहारहेतुः । २३. स्वस्मै भासमानं प्रत्यक् । २४. परस्मै भासमानं पराक् । २५. परतन्त्रचेतनो जीवः । २६. स्वतन्त्र ईश्वरः । २७. अर्थप्रकाशो बुद्धिः । २८. प्रकृतिव्यतिरिक्तत्वे सति सत्त्वाश्रयो नित्यविभूतिः । २९. अद्रव्यमनेकधा सत्त्वशब्दादिवैचित्र्यात् । ३०. एकं वेतरविशिष्टं प्राधान्यतः प्रमेयं [परं] ब्रह्म । ३१. इतरेषां स्वनिष्ठब्रह्मैकनिष्ठत्वात् । ३२. तस्यैव च तथात्वेन मुमुक्षुभिः प्रकर्षेण मेयत्वश्रुतेः । ३३. अव्यवस्थितव्यवहारकारणं ज्ञानं संशयः । ३४. अयथाव्यवहारकारणं ज्ञानं विपर्ययः । ३५. संस्कारमात्रजं ज्ञानं स्मृतिः । ३६. तद्व्यतिरिक्तं ज्ञानमनुभवः । ३७. पुरुषप्रवृत्त्युद्देश्यं प्रयोजनम् । ३८. व्याप्त्यधिगमस्थानं दृष्टान्तः । ३९. प्रामाणिकत्वाभिमतैः परिगृहीतोऽर्थः सिद्धान्तः । ४०. परार्थप्रमाणप्रयोगवाक्यावान्तरवाक्यान्यवयवाः । ४१. व्याप्याङ्गीकारेण व्यापकानिष्टप्रसञ्जनं तर्कः । ४२. तर्कानुगृहीतप्रमाणपूर्वकतत्त्वावधारणं निर्णयः । ४३. वीतरागकथा वादः । ४४. पक्षद्वयसाधनवती विजिगीषु कथा जल्पः । ४५. प्रतिपक्षस्थापनहीना तु सा वितण्डा । ४६. हेत्वङ्गैकदेशविकला हेत्वाभासाः । ४७. अविवक्षितशब्दार्थारोपेण दूषणं छलम् । ४८. स्वव्यापिदूषणं जातिः । ४९. कथकाशक्तिलिङ्गं निग्रहस्थानम् । इत्येतादृशानि वाक्यानि किं न सूत्राणि स्युः ?

तदिह संक्षिप्तं लक्षणादिवाक्यं सूत्रम् ; तदुदाहरणादिवाक्यं तु भाष्यादिकमिति विभाव्य संतोष्टव्यम् । न च पूर्वप्राबल्यव्यवस्था, तत्पूर्वसंभवात्, वार्तिकस्य चानवतारप्रसङ्गात्, व्याकरणादिष्वन्यथाकरणस्वीकाराच्च । न च जैमिनेः प्रमाणलक्षणादिष्वौदासीन्यमात्रेण गौतमोक्तेषु काश्यपोक्तेषु वा निःशेषानुमतिसिद्धिरिति मन्तव्यम्, अन्यपरतया लोकप्रसिद्धोपजीवनात्, परकल्पिततटाकोपजीवनवत् । कर्मकाण्डवृत्तिकारादयोऽपि हि लोकसिद्धां प्रमाणा[दि] व्यवस्थां यथायथमन्यथा संजगृहुः । अतो यावदिह युक्तियुक्तं तावदुपजीव्यते, न खलु तटाकस्थः पङ्कोऽप्यपङ्किलबुद्धिभिस्तदवगाहिभिरुपजीव्यते । अतः सिंहवनगुप्तिन्यायेन यथावस्थितन्यायानुगृहीतं वेदं वेदानुमतं च न्यायमनुसरामः, न पुन-

न्यायमात्रम् ॥ यत्तु * ज्ञातसंबन्धस्य इत्यादिग्रन्थमुपादायानन्तरमुक्तं **श्रीविष्णुचित्तैः**—* व्याप्तिधीगर्भानुभवोऽनुमानमित्यर्थः, न्यायशास्त्रे तु तद्विशेषनिर्णयः इति—तदपि तन्निरूपणाधिकृतविद्यास्थानख्यापनपरम् । प्रमाणादिसूत्रमुपादाय व्याचक्षाणैस्तत्पक्षनिष्ठैरपि पूर्वैः क्वचित् सूत्राणि निराकृतानि । तन्न्यायस्य नास्मासु सर्पमारः, नापि दण्डनिवारणम् ॥ ततश्च,

यथालोकं यथावेदं लौकिके वैदिकेऽपि च । यो वक्ता [वेत्ता] स परिग्राह्यः प्राक्तनोऽद्यतनोऽपि वा ॥
विवक्षितार्थावैशद्यं व्याकुलत्वमपूर्णता । उल्लोकतेत्यमी दोषा गुणकोटौ जडैः कृताः ॥
भगवन्नाथमुनिभिर्न्यायतत्त्वसमाह्वया । अवधीर्याक्षपादादि [पादादीन्] न्यबन्धि न्यायपद्धतिः ॥
तदर्वाग्भिस्तथाऽऽचार्यैर्यथेष्टं मतमास्थितैः । प्रणिन्ये बहुधा तैस्तैः प्रमाणादिविचारणा ॥

तदयं भाष्यस्वरससिद्धो बहिष्कारपक्षः ॥

## ॥ गौतमसूत्रस्वीकारपक्षः ॥

अङ्गीकारकाङ्क्षिणामक्षपादीयमप्यस्मदुक्तैकान्ततया स्थास्यति ; तथैव स्थापयिष्यामः । अतो वयमपि महतामयुक्तार्थतात्पर्यकल्पनेन नापराध्येम, न्यूनाधिकविरुद्धव्यपदेशादीनामलक्षणलक्षणोक्तीनां चाध्याहारान्यपर्याभ्यां तद्भक्तैरपि निर्वाहात् । तथाऽस्मिन् यत्र स्फुटः श्रुतिस्मृतिशारीरकविरोधः, स उद्देशतो निरुह्यते ॥ यत्तावत्सूत्रितं प्रथमाध्याये—* घ्राणरसनचक्षुस्त्वक्छ्रोत्राणीन्द्रियाणि भूतेभ्यः इति ; अत्र ज्ञानेन्द्रियपञ्चकोपादानं नेन्द्रियान्तरप्रतिक्षेपार्थम् ; मनसः पृथक्प्रमेयतयोद्देशात्, अनन्तरमेव च * युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् इति लक्षणकरणात्, अभ्युपगमसिद्धान्तन्यायेन च तदिन्द्रियत्वपरीक्षणात् । अतश्चोक्तेन समानयोगक्षेमयुक्तिप्रमाणकः कर्मेन्द्रियवर्ग उपलक्षणीयः, * प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः इति सूत्रे वाचः कण्ठोक्तेः पाण्यादिचतुष्टयस्य शारीरव्यापारकरणतया सूचनादिति । शारीरके तु * सप्तगतेर्विशेषितत्वाच्च इति पूर्वपक्षमुपक्षिप्यासाधयच्च हस्तादीनामपीन्द्रियत्वं भगवान् **बादरायणः**—* हस्तादयस्तु स्थितेऽतो नैवम् इति । * भूतेभ्यः इति च नोपादानाभिप्रायम्, अहंकारोपात्तानामाप्यायकभूतविवक्षयाऽपि तदुपपत्तेः । तथा च **वेदार्थसंग्रहे**—* एवमाहंकारिकाणामिन्द्रियाणां भूतैश्चाप्यायनं **महाभारत** उच्यते इति समाधानम् ऋष्यन्तरवाक्यस्यापि समानन्यायस्य निर्वाहार्थम् । परस्परविरुद्धप्रमाणवाक्येषु तात्पर्यविशेषपरिकल्पनया परिहार एव हि पण्डितकृत्यम् । अनित्यमनोवादिभिरपि हि * अन्नमयं हि सोम्य मनः इति श्रुतिराप्यायनपरतयैव योज्या । तुल्यमिदमन्यत्रापीति ।

यत्तु—* बाधनालक्षणं दुःखम्, * तदत्यन्तविमोक्षोऽपवर्गः इति, तत्र दुःखात्यन्तनिवृत्तेरपवर्गत्वं सर्वाङ्गीकृतम् । न च तत्रानन्दः श्रौतः कण्ठोक्त्या प्रतिषिध्यते । तदभिप्राये चानन्यथासिद्धं किमपि न लिङ्गं पश्यामः । अत एव हि **भूषणमते** नित्यसुखसंवेदनसंबन्धसिद्धिरपवर्गे साधिता । एतेन * तस्मात्सर्वदुःखविमोक्षोऽपवर्गः इति चतुर्थाध्यायवाक्यमपि निर्व्यूढम्, तत्राप्यानन्दनिषेधाभावात् । यच्च शारीरकद्वितीयाध्यायविरुद्धमिह द्वितीयाध्याये अवयविसमर्थनमिवाभाति, तदपि तदेकार्थं योजयितुं शक्यम् । तथा हि—* न चैकदेशोपलब्धिरवयविसद्भावात् । साध्यत्वादवयविनि संदेहः । सर्वाग्रहणमवयव्यसिद्धेः । धारणाकर्षणोपपत्तेश्च । सेनावनवद्ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् इत्येतानि हि तत्सूत्राणि ; न तानि विरुध्यन्ते, सेनावनादिव्यावृत्तावयव्यारम्भकतया तदसमवायिकारणत्वाभिमतावस्था-

विशेषापन्नः संघातविशेष एवावयविशब्देन निर्दिश्यत इत्यविरोधात्, तावतैव उपलम्भव्यवहारविशेषादेश्चरितार्थत्वात्। अतोन्द्रियाणुवचनमपि प्रदीपावयवानामिवैन्द्रियिकाणामेवावस्थाविशेषेणातीन्द्रियत्वाभ्युपगमादविरुद्धम्। अव्यक्तमेव हि त्रिगुणद्रव्यमवस्थाविशेषाद्व्यक्तं भवतीत्यागमिकाः। प्रत्येकमुपलम्भायोग्यानामपि संहतिविशेषरूपावस्थाभेदादैन्द्रियिकत्वतत्तारतम्यादिकं हिमानीचूर्णपुञ्जादिष्वनारब्धावयविषु लोकसिद्धम्। उपमानाख्यप्रमाणान्तरसमर्थनं तु न्यायैकदेशिभिरेवोपमानस्यानुमानान्तर्भावप्रतिक्षेपमात्रपरतया निर्व्यूढम्। यच्च—*पूरणप्रदाहपाटनानुपलब्धेश्च संबन्धाभावः इति शब्दार्थसंबन्धाभावमुपक्षिप्य परिहरता *शब्दार्थव्यवस्थानादप्रतिषेधः; न सामयिकत्वाच्छब्दादर्थसंप्रत्ययस्य इत्यादिना सामयिकत्वमुक्तम्, तदपि संप्रतिपन्नसामयिकत्वद्वारा अनुमानादिविलक्षणसंबन्धविशेषख्यापनार्थमिति योज्यम्; अनादिनिधनाविच्छिन्नसंप्रदायवेदवर्तिनां पदानां मन्वादिवचनविरुद्धसाङ्केतिकत्वोपपादनक्लृप्त्यसंभवात्। यच्च *मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् इति, एतदप्यनादिनिधनस्यैव वेदस्य प्रतिकल्पमीश्वरेणाप्ततमेन यथापूर्वं प्रवर्तनमभिसंधायेति सुगमम्।

वर्णानित्यत्ववर्णनं तु न श्रुत्यादिविरुद्धम्; प्रत्युतानुकूलमेव। **शारीरकदेवताधिकरणे** वर्णानित्यत्वमभ्युपगम्यैव हि *अत एव च नित्यत्वम्, *समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च इति वेदनित्यत्वं साधितम्। यत्तु **जैमिनीयशब्दाधिकरणे** वर्णनित्यत्वसमर्थनं व्याचख्युः, स तु व्याख्यातॄणामेवापराधः, असाङ्केतिकवाचककारनित्यत्वपरत्वेनान्यपरत्वात्तस्याधिकरणस्य। यच्च द्वितीयाध्यायान्ते *व्यक्त्याकृतिजातयस्तु पदार्थः इत्युक्तम्, तत्रापि न वैशेषिकाभ्युपगतजातिस्वीकारे लिङ्गं पश्यामः। न ह्यत्र द्रव्यगुणादिपदार्थपरिसङ्ख्यानं क्रियते, *ते विभक्त्यन्ताः पदम् इति प्रतिपादितपदवाच्यप्रदर्शनपरत्वात्। अनन्तरं च तिसृणामेव[वं] लक्षणमाह—*व्यक्तिर्गुणविशेषाश्रयो मूर्तिः, *आकृतिर्जातिलिङ्गाख्या, *समानप्रसवात्मिका जातिः—इति। इह तु [वस्तुनो] वस्तुस्वरूपनिरूपितस्वरूपविशेषकधर्मस्वरूपनिरूपकधर्मविषयतया यथासंभवं योज्यम्। अतो न द्वितीयाध्यायेऽपि वेदान्तविरोधः। तृतीये *दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् इत्यादिकं बाह्यान्तरिन्द्रियादिनिरूपणादिकं चात्यन्तोपयुक्तम्। न च मनोनित्यत्वादिकं तत्र सूत्रितम्; येन तदुत्पत्त्या [तदुत्पत्तिवा] दिश्रुतिकोपः। यच्चात्रोक्तम्—*गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकं श्रुतिप्रामाण्याच्च इति, एतदेव यथाश्रुतं सिद्धान्ततया स्वीकार्यम्। यदपि *गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः अप्तेजोवायूनां पूर्वंपूर्वमपोह्याकाशस्योत्तरः इति गुणव्यवस्थापनम्, तत्र तु तथैवाभ्युपगमेऽपि न वस्त्वन्तरविरोधः। तथाऽप्याकाशादिषु शब्दादेरेकद्वित्रिचतुष्पञ्चक्रमेण पुराणेषु पाठात्, आकाशानुप्रवेशा [दाकाशा] दन्यत्र शब्द इति निर्वाहे वाय्वाद्यनुप्रवेशादुत्तरोत्तरेषु स्पर्शादिरिति निर्वोढुं शक्यत्वात्, उपलम्भान्वयव्यतिरेकाभ्यां व्यवस्थापनस्यापि समत्वात्, गन्धादिसूत्रं पृथिव्यास्ते सन्त्येवेत्ययोगव्यवच्छेदेन निर्वाह्यम्। *आकाशस्योत्तरः इत्यत्र तु तस्य स एवेत्यन्ययोगव्यवच्छेदेन। कतिकति चैवं सूत्राणि क्लिष्टानि परैरपि निरुह्यन्ते।

यच्च, स्वगुणान्नोपलभन्त इन्द्रियाणि कस्मादिति चेत्, *सगुणानामिन्द्रियभावात् इत्यत्र *न शब्दगुणोपलब्धेः इत्युक्तम्; तत्रापि श्रोत्रेन्द्रियस्य आकाशाप्यायितत्वादाप्यायकगुणस्य तद्गुणतां पटनैल्यपानीयसौरभादिवत् प्रकल्प्योक्तमुत्तरम्। अथवा यथागममाहङ्कारिकत्वमिन्द्रियाणामजानतश्चोद्ये भूताप्यायितेन्द्रियपक्षे [भूतेन्द्रियवादे] स्थित्वैवेदमुत्तरं गूढाभिप्रायेण दीयत इति। एतदुक्तं भवति—भवता किमिन्द्रियगुणोपलम्भाभाव उच्यते, किं वा तदाप्या-

यकगुणोपलम्भाभावः ? पूर्वत्राङ्गीकार एवोत्तरम्, शब्दादीनामनिन्द्रियगुणत्वात्; उत्तरत्र व्यभिचार इति। अतो न वेदान्तविरोधप्रसङ्गः। चतुर्थेऽध्याये प्रवृत्तिरागद्वेषादिनिरूपणम्, आत्मनित्यत्वादिना प्रेत्यभावादिप्रतिपादनम्, अनिमित्तभावोत्पत्तिसर्वानित्यत्वसर्वनित्यत्वादिनिराकरणं [निरूपणं] चात्यन्तानुगुणम्। अवयविप्रसङ्गश्च प्रागुक्तन्यायेन नेतव्यः। पञ्चमस्तु जातिनिग्रहस्थानमात्रोपक्षीणो न क्वचित्तत्त्व उपकरोति। व्यवहाराङ्गविमर्शसौन्दर्यासौन्दर्यादिकं तु वास्तवलक्ष्यलक्षणयुक्त्यादिपरामर्शवैज्ञानिकैरर्थस्थितिमात्रानुसारादनादरणीयम्। यत्पुनरर्वाग्भिरक्षचरणपञ्चाध्याय्यां कुशकाशावलम्बनेकणचरणकथां निवेश्य नैगमिक्यः पदव्यो निरुध्यन्ते, तत्र तु नूनं स एव गौतमः स्वयमन्तः प्रहसति।

॥ इति स्वीकारपक्षः ॥

यद्वा नातिवहिष्कारो नातीव च परिग्रहः। सांख्यादिवदिहापि स्यात् समाधिस्तौषतण्डुलः ॥
उपजीव्यबहुत्वेन विद्यास्थाननिवेशनम्। विरुद्धांशैकविषया सूत्रादिषु बहिष्क्रिया ॥

**अधिकारिविवेचनम्** ॥ नियताधिकारश्चायं न्यायविस्तरः।

अधिकाराच्च नियतः स्यादयं न्यायविस्तरः। अप्रत्यवायो माहात्म्याद्दयालुः शास्त्रम[ादिशत्]ब्रवीत् ॥
सर्वाधिकारमित्येतदसमीक्षितभाषितम्। कथमागमवृत्तान्तमनधीतागमा विदुः ॥
निषिद्धे प्रेरयंस्तान्वा कथं कारुणिको भवेत्। न च शक्या नरशिरःपावित्र्याद्यनुमाक्षतिः ॥
विहायागममक्षा[दिधिया]चेद्द्विधा तत्रापि विप्लवः। श्रुत्यां ह्यनधिकारित्वात्तदन्यत्राप्यव्यवस्थितेः ॥
धर्मक्षोभानुमाभङ्गे कथं शूद्रादयः क्षमाः। अथ त्रैवर्णिकैरुक्ते त्वन्यो विश्वसितीत्यपि ॥
स्वयं न्यायविचारेऽस्य फलत्यनधिकारिता[म्]। प्रत्यक्षानुमयोर्यत्र नित्यं वेदानपेक्षता ॥
तत्रापशूद्रभाष्योक्ता शूद्रादेरप्यधिक्रिया। चतुर्दशापि स्थानानि भगवान् धर्मविद्ययोः ॥
न स्प्रष्टव्यानि शूद्रैरित्यब्रवीदाश्वमेधिके। * अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश। यान्युक्तानि मया सम्यग्विद्यास्थानानि भारत ॥
उत्पन्नानि पवित्राणि पावनार्थं तथैव च। तस्मात्तानि न शूद्रस्य स्प्रष्टव्यानि कथञ्चन ॥ इति ॥

तस्मादेतानि त्रैवर्णिकैरध्येतव्यानि। तत्र ब्राह्मणेन विद्याप्राप्तये धर्मानुष्ठानाय चाधिगन्तव्यानि। क्षत्रियवैश्याभ्यां धर्मानुष्ठानायैव। तथा शङ्खेन विद्यास्थानान्यनुक्रम्योक्तम्—* एतानि ब्राह्मणोऽधिकुरुते। स च वृत्तिं दर्शयतीतरेषाम्—इति। एवमेव धर्मशास्त्रसंग्राहकैः समर्थितम्। ततश्च येषां कर्मब्रह्ममीमांसावसेयतत्त्वहितरूपप्रमेयचिन्ताधिकारः, तेषामेव [तात्पर्यपर्य] तत्पर्यवसायितया धर्मविद्यास्थानाभिमतन्यायविस्तराधिकार इति सिद्धम् ॥

## प्रयोजननिरूपणम्

प्रत्यक्षादिप्रमाणेन शु[सि]द्धिः पदतदर्थयोः। मानमेयादिनियतिर्निर्दोषोक्तिश्च मानता ॥
ग्रावप्लवनवाक्यादावान्यपर्यं विरोधतः। चित्रापशुफलत्वादावबाधद्वारसंग्रहः ॥
अनुवादविधानादिचिन्ता प्राप्त्यादिपूर्विका। प्रत्यक्षादिष्वसिद्धेषु न कल्पे[रन्]त कथञ्चन ॥
एवमाद्युपयोगेन मुनिभिर्न्यायविस्तरः। वेदानुग्रहणाद्धर्मविद्यास्थानतयोदितः ॥

आगमाख्यप्रमाणे तु संशुद्धे न्याय [संशुद्धिर्न्याय] विस्तरात् । तद्विशेषस्य मीमांसा साधयेद्धर्ममानताम् ॥
प्रमेयस्यापि संशुद्धिरन्ततो ब्रह्मचिन्तनात् । इह तस्य निवेशस्तु तादर्थ्यादिप्रसिद्धये ॥

प्रमाणमेवास्य शास्त्रस्य प्राधान्यतो विषयः । तत्र प्रेक्षावदधिचिकीर्षासिद्ध्यर्थम्—प्रमेयतत्त्वज्ञानं हानोपादानद्वारा निःश्रेयसहेतुः, तच्च सपरिकरात् प्रमाणात्—इति परम्परया प्रयोजनज्ञापनाय प्र[मेयप्र] दर्शनमात्रमिहाभिमतम् । अतः प्रधानविषयतया, प्रमेयादिसाधकतया च प्रमाणं प्रमेयादपि पूर्वमुच्यते । तत्र व्यवच्छेद्यत्वाङ्गत्वादिमुखेन संशयादयोऽपि चतुर्दश यथायथं निरूप्यन्ते । न च षोडशत्वे निर्बन्धः, [तथात्वे, अतथात्व] विपर्ययत्वाद्युपाध्यन्तराधीनसंग्रहविभजनाभ्यां न्यूनाधिकोद्देशस्यापि शक्यत्वात् उपयोगानुपयोगाविशेषाच्च । एतावदेव गौतमस्यापि हृदयमिति ॥

**प्रमाणाप्रमाणव्यवस्थापनम् ॥** अस्ति तावदिदं प्रमाणमिदमप्रमाणमिति प्रसिद्धो लौकिकपरीक्षकव्यवहारघण्टापथः । तदनादरे तु निराश्रयतया परीक्षणस्याप्यनुदयः ॥

व्यवहारो हि जगतो भवत्यालम्बने क्वचित् । न तत्सामान्यतो नास्ति कथंता तु परीक्ष्यते ॥
सामान्यनिश्चितार्थेन विशेषे तु बुभुत्सिते । परीक्षा ह्युचिता स्वेष्टप्रमाणोत्पादनात्मिका ॥
न सर्वस्याप्रमाणत्वं स्वपक्षस्य स्वतः क्षतेः । न सर्वस्य प्रमाणत्वं स्वपक्षस्यान्यतः क्षतेः ॥
सिद्ध्यसिद्ध्योः स्वपक्षस्य सिद्धा लोकव्यवस्थितिः । तत्सिद्ध्यसिद्ध्योस्त्वत्पक्षो न कथंचन सिध्यति ॥
प्रमाणेन प्रमाणस्य बाधः स्वव्याहतेर्हतः । अप्रमाणेन तद्बाधे साधनं च ततो न किम् ॥
अप्रमाणात् प्रमाणाद्वा मानसिद्धिर्न चेन्न तत् । यतः प्रमाणतस्तस्य सिद्धिः स्वपररक्षिणी ॥
बाधाबाधव्यवस्थाऽपि मानतः स्याद्व्यवस्थितात् । अन्यथा त्वव्यवस्थाया न व्यवस्थेत्यवस्थिते[तिः] ॥
सर्वत्रानिर्णये न स्तः संशयोत्पत्तिनिर्णयौ । यथा तत्कोटितत्सिद्धिस्तथाऽन्यत्रापि युज्य [दृश्य] ते ॥
धर्मिसाधारणाकारकोटीनां पूर्वनिश्चये । असावयमयं वेति ह्याविर्भवति संशयः ॥
सर्वत्र संशयस्तावन्न सर्वस्यापि दृश्यते । सर्वं संदिग्धमिति ते निपुणस्यास्ति निश्चयः ॥
संशयश्च न संदिग्धः संदिग्धाद्वैतवादिनः । दूरं गत्वापि दुर्वारः संशये निर्णयस्तव ॥
मानामानविभागेऽतः सामान्येन व्यवस्थिते । क्वाचित्कसंशयोच्छित्त्यै लक्षणं संप्रचक्षते ॥

तत्र व्युत्पत्तिविवक्षाभेदात् प्रमितिं तत्करणं च यथेच्छं प्रमाणमाहुरित्यवोचाम, आश्रयप्रामाण्यस्यानादेशिकत्वात् । * आप्तप्रामाण्यात्—आप्तोक्तत्वहेतोः प्रामाण्यादित्यर्थः । न हि वक्तृप्रामाण्यं वाक्यप्रामाण्य उपयुज्यते लौकिकवाक्येषु ; किंतु कारणदोषाभावः । द्विधाऽपि प्रमितिरेव शोध्या ॥

**प्रमालक्षणपरीक्षणम् ॥** तत्रास्मदीया एव केचिदन्यथाख्यातिमिच्छन्तः स्मृतेः प्रामाण्यमनिच्छन्तः सम्यगनुभवः प्रमेति लक्षयन्ति ; उभयमिच्छन्तः, यथार्थज्ञानं प्रमेति ; उभयमनिच्छन्तः, अनुभूतिः प्रमेति । एवंप्रायाणि च वाद्यन्तरोक्तानि लक्षणानि । वयं तु ब्रूमः—यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमेति ।

यथार्थख्यातिमख्यातिमन्यथाख्यातिमेव वा । इच्छद्भिर्न विमन्तव्यमिदं लोकानुसारतः ॥
स्मृतिमात्राप्रमाणत्वं न युक्तमिति वक्ष्यते । अबाधितस्मृतेर्लोके प्रमाणत्वपरिग्रहात् ॥

बुद्धागमादित्यागे च न हेतुः स्मृतिमूलता । विशुद्धस्मृतिमूलेऽपि मानवादौ प्रसङ्गतः ॥
भ्रान्तिं प्रमातो भिन्दन्तो न चाहुः स्मृतिमानताम् । स्मृतित्वमेव हि व्यक्तमप्रामाण्यं भवन्मते ॥
पीतशङ्खभ्रमादौ च न ह्येतदु [ह्येवमु] पपद्यते । चक्षुषैव हि शङ्खादेः पीतिमादेश्च तत्र धीः ॥
ततश्च प्रतिपत्तौ वा व्यवहारोदयेऽपि वा । तथाभावान्यथात्वाभ्यां प्रमाभ्रान्तिव्यवस्थितिः ॥
विपर्ययादेर्व्यावृत्तिरेवमेव हि सिध्यति । यत्किंचिदन्यथात्वं हि वैपरीत्यमिती [मपी] ष्यते ॥
आत्मख्यात्यादिवादेष्वप्यन्यथात्वमवारितम् । भ्रमप्रवृत्तिबाधादेरन्यथा न हि संभवः ॥
एवं सत्यन्यथाधीस्तत्सामग्री वाऽपि लाघवात् । अयथाव्यवहारस्य हेतुरि [त्यि] त्यवशिष्यते ॥
सर्वैरप्यन्यथाख्यातिर्दुस्त्यजत्वाल्लघीयसी । तद्वादिनाऽप्यवर्ज्यत्वात् ततोऽप्यख्यातिलाघवम् ॥
स्वारस्यमन्यथाख्यातावख्यातौ लाघवं स्थितम् । इति दर्शयितुं भाष्ये द्वि [ती] तयं तदनु [श्रि] ज्झितम् ।
यन्नाथमुनिमिश्राद्यैराचार्यैर्यथार्थख्यातिसाधनम् । तल्लोकबुद्धयनारोहाद्वैभवं केचिदूचिरे ॥
मानाद्रूप्यादिसत्त्वेऽपि तयोरन्यतरद्ध्रुवम् । कार्याक्षमत्वाग्रहणात् तत्क्षमत्वग्रहेण वा ॥
ख्यात्यन्तराणां दोषास्तु तत्तत्सिद्धान्तशीलने । स्वयमेवोन्मिषन्त्येव संग्रहात् किंचिदुच्यते ॥

तत्रात्मख्यातौ तावत्—

अन्यद्विज्ञानमस्तीति धीरन्यविषया न वा । आद्येऽर्थस्यापि तद्वद्धीरन्यत्रैकैव धीर्भवेत् ॥
सन्तानान्तरविज्ञानं स्वसन्ताने क्षणान्तरम् । या धीः साधयते सा हि स्वतो बाह्यं विगाहते ॥
सहोपलम्भनियमः संविदो ग्राह्यलक्ष्म च । [भेदेऽप्यत्रैव] बोधेऽप्यर्थ इवेत्येवं ज्ञानार्थैक्यं न तद्भवेत् ॥
दोषादिहेतुजालस्य मिथ्यात्वेऽपि यथेष्यते । अधिष्ठानस्य मिथ्यात्वेऽप्यनिवार्यस्तथा भ्रमः ॥
ततो माध्यमिकस्यैव पक्षस्तत्रावशिष्यते । न च तत्रापि निस्तारः सर्वथाऽनुपपत्तितः ॥
असत्त्वं लौकिकं ब्रूषे लोकोत्तरमथापि वा । न निषेधो निरुपधिः पूर्वत्रा [न्त्यं न] न्यत्र धीपदम् ॥
चतुष्कोटिविमुक्तं च तत्त्वं प्रामाणिकं न वा । पूर्वत्र तावती सत्ता न चेत् तद्धीरसन्मतिः ॥

अन्येषां च निरधिष्ठानख्यातौ—

[त] अत्रासदेव भवतामत्रेति ख्यायते न वा । आद्ये सिद्धमधिष्ठानं द्वितीये ख्यात्यपह्नवः ॥
किं च स्वनेत्रनिष्ठ्यूतं तिमिरं तिमिरार्दितैः । केशस्तबकसादृश्यात् तथा भात्येवमीदृशाः ॥
यद्यप्यविद्यमानोऽर्थो विद्यमानतया स्फुरेत् । तथाऽप्यसावधिष्ठानं स्वदेशादौ मितो हि सः ॥
इदंत्वेन प्रतीतेऽर्थे तदारोपं परे विदुः । तस्मिन्निदंत्वारोपस्ते फलतस्तुल्यता द्वयोः ॥

अनिर्वचनीयख्यातौ—

अनिर्वाच्यतया वस्तु निरुच्येत न वा त्वया । आद्ये विरोधो विविधो द्वितीयेऽस्सन्मतस्थितिः ॥
सदसद्व्यतिरेकोऽपि विरुद्धो यदि गृह्यते । सदसद्रूपता किं नु प्रतीता [तन्न] तु न गृह्यते ॥
अनुष्णाशीतवत् तुच्छाद्ब्रह्मणश्चातिरेकिता । साध्येत ख्यातिबाधादेर्यदि सिद्धं तदत्र नः ॥
न च विश्वस्य बाधोऽपि स्वरसादुपजायते । अप्रतिष्ठितयुक्त्या तु बाधो ब्रह्मापि संस्पृशेत् ॥

नाशात् सदितरत्वं च नाशकाले यदीष्यते । स्वकाले यदि बाधः स्यान्नाशस्याप्यनिरूपणम् ॥
नित्यत्वेन श्रुतानां च केषां चिन्न हि नाशिता । भागासिद्धस्ततो हेतुर्न चैक्यं नाशबाधयोः ॥

निर्विषयख्यातौ—

विषयालीकभावादौ ख्यात्यन्तरपरिग्रहः । अनुल्लेखस्तु रूप्यादिधीरित्युक्त्या निबर्हितः ॥

**निगमनम्** ॥ ततश्चात्रान्यथाधीर्वा तद्धेतुमतिरेव वा । भ्रान्तिर्वस्तुविरूपस्य व्यवहारस्य कारणम् ॥

॥ इति न्यायपरिशुद्धौ प्रत्यक्षाध्याये प्रथममाह्निकम् ॥

## ॥ अथ द्वितीयमाह्निकम् ॥

तदिहान्यथाख्यातिपक्षे विपर्ययस्य संशयस्य च व्यवच्छेदार्थम् *यथावस्थितव्यवहारानुगुणं ज्ञानम् इति प्रमाणलक्षणे यथावस्थितादिविशेषणम् । अख्यातिपक्षेऽपि तत्सामग्र्यनुप्रविष्टं ज्ञानं तत्तच्छब्देन व्यपदिश्यते । तच्च तत्राप्रमाणमिति लोकसिद्धत्वाद्यवच्छेद्यमेव । तत्रापि प्रत्येकांशे याथार्थ्यं न विहन्यते ॥

**विपर्ययनिरूपणम्** ॥ तत्राद्ये पक्षे अन्यस्य अन्यथाध्यवसायो विपर्ययः । द्वितीये तु पक्षे सामान्यतो धर्मिस्फुरणे सति अप्रतिपन्नतद्विरोधविरुद्धविशेषाध्यवसाय इति । स चायमनेकविधः—एकानेकविरुद्धविशेषस्फुरणात् । तत्र एकविशेषस्फुरणं यथा—पीतः शङ्ख इत्यादि । अनेकविशेषस्फुरणं यथा—एकमेव भिन्नमभिन्नं चेत्याद्यनेकान्तवादिनाम्, प्रपञ्चः सद्विलक्षणोऽसद्विलक्षणश्चेत्याद्यद्वैतवादिनाम् । परस्परविरुद्धानेकविशेषवत ईदृशस्य विपर्ययस्य संशयाद्भेदो मिथो विरोधाभिमानविरहेण समुच्चिताध्यवसायः । धर्मविरोधे परस्पराविरुद्धानेकविशेषस्फुरणं यथा—विपुलत्वैकत्वविशिष्टे चन्द्रे अल्पत्वद्वित्वादिग्रहः । विपर्ययमेव धर्मान्तरधर्म्यन्तरभेदादन्यथाख्यातिविपरीतख्यातिभेदेन क्वचिद्व्यवहरन्ति । यथा पीतशङ्खरज्जुसर्पभ्रमौ । तयोश्च रजस्तमसी मूलमिति गीयते—

*यया धर्ममधर्मं च कार्यं चाकार्यमेव च । अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥
अधर्मं धर्ममिति या मन्यते तमसा वृता । सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ इति ॥

यद्यपि रज्जुसर्पादिभ्रमे रज्जुत्वादिधर्मविपरीतसर्पत्वादिधर्माध्यास एव; तथाऽपि स्वरूपनिरूपकधर्मत्वेनान्तरङ्गतया धर्मिवैपरीत्यव्यपदेशः । श्वैत्यादेस्तु निरूपितस्वरूपविशेषकत्वमेव । **विवरणे** त्वेवमुक्तम्—त्रिविधमज्ञानम्—स्वरूपाज्ञानम्, अन्यथाज्ञानम्, विपरीतज्ञानमिति । स्वरूपाज्ञानं नाम वस्तुनोऽप्रतिपत्तिः । अन्यथाज्ञानं वस्तुनो वस्त्वन्तरतया भानम्; यथा शुक्तेः रूप्यतया । विपरीतज्ञानं तु यथावत् वस्तुनि भासमाने युक्तिभिस्तस्यान्यथोपपादनम्; यथा—ज्ञातृतया अहंत्वेन चात्मनि भासमानेऽपि कुयुक्तिभिरस्य भ्रान्तितोपपादनं कुदृशाम् इति । अधर्मेन्द्रियदोषदुस्तर्काभ्यासदुर्व्याप्त्यनुसंधानविप्रलम्भकवाक्यश्रवणादिभिस्तत्त्वाग्रहसहकृतैर्विपर्ययस्य यथासंभवमुद्भवः ॥

**संशयनिरूपणम्** ॥ सामान्यधर्मिस्फुर [ग्रह] णे सति अप्रतिपन्नतद्विरोधप्रतिपन्नमिथोविरोधानेकविशेषस्फुरणं संशयः । यथा—ऊर्ध्ववस्तुमात्रग्रहणे सति तद्विरोधितयाऽननुसंधीयमानयोर्मिथः स्फुटविरोधयोः स्थाणुत्वपुरुषत्वयोः स्फुरणम्—अयं स्थाणुर्वा पुरुषो वेति । मिथो विरोधाग्रहणे तयोर्विकल्पो न स्यात् । तत एव *डोलावेगवदत्र स्फुरणक्रमः इत्येके, एकस्मिन् युगपदन्योन्यप्रतिक्षेपस्य धीविरुद्धत्वात् । अत्र *चैतन्यस्य विषयेण दृढसंयोगो हि निश्चयः । तस्यैव बहु-

मिर्युगपदढढसंयोगः संशयः इत्यात्मसिद्धिग्रन्थोऽपि न विरुद्धः; इतरथा ज्ञानार्थयोर्दृढादृढसंश्लेषनिरूपणानुपपत्तेः। युगपदिति तु शैघ्र्यमात्रपरम्। यौगपद्याभ्युपगमेऽपि अदृढत्वं परस्परप्रतिक्षेपप्रकारविशेष एव; अन्यथा अयमूर्ध्वो वा स्थाणुर्वेत्यादिसंशयप्रसङ्गः। यद्यप्यविरुद्धेष्वपि केषुचिद्धर्मादिमूलकविरोध [केषुचिदविरोधा] ग्रहणात् केषांचिदीदृशोऽपि संशयः संभवति; यथा—आत्मा ज्ञानं वा ज्ञाता वेति, ज्ञनं धर्मो धर्मि वेत्यादि; तथाऽप्याभिमानिकं परस्परप्रतिक्षेपित्वं तत्राप्यस्त्येव। अस्य च समानधर्मविप्रतिपत्तिभ्यामेवासाधारणकारणाभ्यामधर्मादिसहिताभ्यां यथासंभवमुद्भवः। तदुक्तं तत्त्वरत्नाकरे—* कश्चैष संशयः कतिविधश्च? एकस्मिन् धर्मिणि विरुद्धानेकविशेषावभासः संशयः; स च द्विविधः इत्यादिना। तत्र समानधर्मः साधारणो धर्मः। तज्जनितो यथा—ऊर्ध्वत्वाविशेषात् स्थाणुर्वा पुरुषो वेति। अगृह्यमाणबलतारतम्यविरुद्धानेकज्ञापकोपस्थापनमिह विप्रतिपत्तिः। सा च सजातीयविजातीयाभासरूपद्वित्रिचतुरादिज्ञापकभेदाद्बहुप्रकारा। प्रत्यक्षतदाभासविप्रतिपत्तेः संशयो यथा—चक्षुषा समुखं प्रतिभाति दर्पणतलम्, स्पर्शनेन त्वन्यथा; किमिदं समुखं निर्मुखं वेति। अनुमानतदाभासविप्रतिपत्तेर्यथा—धूमवत्त्वात् पर्वतोऽग्निमान्, निरालोकत्वादनग्निरित्यत्र साग्निरनग्निर्वेति। श्रुतिविप्रतिपत्तेर्यथा—भेदाभेदव्यपदेशाभ्यां जीवो ब्रह्मणो भिन्नोऽभिन्नो वेत्यादि। वादिविप्रतिपत्तेर्यथा—वैशेषिकौपनिषदवाक्यद्वयश्राविणो मध्यस्थबुद्धेः किमिन्द्रियाणि भौतिकानि, आहंकारिकाणि वेति। एवं पामरादिवाक्यविप्रतिपत्तेरपि—नद्यास्तीरे [पञ्च] फलानि सन्ति, न सन्ति वेत्यादि। प्रत्यक्षानुमानविप्रतिपत्तेर्यथा—चक्षुषा पीतशङ्खभ्रमे शङ्खत्वाच्च सितत्वानुमाने, किमयं शङ्खः पीतः सितो वेति। प्रत्यक्षागमविप्रतिपत्तेर्यथा—किमहमर्थः स्थूलोऽणुर्वेति। अनुमानागमविप्रतिपत्तेर्यथा—किं परमाणूपादानं जगत्, उत ब्रह्मोपादानमिति; एषा दिक्। केचित्तु विप्रतिपत्तिशब्दमात्रे मुह्यन्तो वादिविप्रतिपत्तिमेव विप्रतिपत्तिं मन्यन्ते, तदयुक्तम्, विशेषाभावात्। यदुक्तं प्रज्ञापरित्राणे—

* साधारणाकृतेर्दृष्ट्याऽनेकाकारग्रहात्तथा। विपश्चितां [च विमतेः] विवादाच्च त्रिधा संशय इष्यते॥ इति;

तदपि नूनं परानुकारमात्रम्, द्वितीयतृतीययोरैकराश्यात् ग्राहकावान्तरभेदस्यातिप्रसङ्गित्वात् अप्रयोजकत्वाच्च। अत्र चानेकाकारग्रहो नानाकारग्रहो विवक्षितः; न त्वनेकव्यावृत्तासाधारणाकारग्रहः; अनन्तरम् *अर्थेष्वेष्वविशेषेण द्व्याकारग्राहिधीद्वयम्, इत्यादिना तस्यैवोदाहरणात्। असाधारणधर्मादपि केचित् संशयमाहुः; यथा—गन्धवत्त्वात् पृथिवी नित्या अनित्या वेत्यादि। अत्र गन्धवत्त्वस्य नित्यात्मादिव्यावृत्तेः कृतकत्वादिवदनित्यत्वस्मारकत्वम्, अनित्याबादिव्यावृत्तेर्निरवयवत्वादिवन्नित्यत्वस्मारकत्वमिति विरुद्धविशेषद्वयान्वितसमानधर्मस्येव तदुभयव्यावृत्तासाधारणधर्मस्यापि संशयहेतुत्वमुपपन्नमिति। तदयुक्तम्; नहि तत्र गन्धवत्त्वादिना संशयोत्पत्तिः, अपि तु व्यतिरेकनिरूपणविलम्बात्प्रागेव गन्धादिविशिष्टद्रव्यस्य नित्यानित्यसाधारणतया भासमानैर्द्रव्यत्वादिभिरेव। तत्रान्यतरशिरोनिर्णिनीषया विशेषकधर्मचिन्तायां तु गन्धवत्त्वमुभयानन्वितत्वादुभयोरप्यनिष्कर्षकमित्येतावदेव चिन्त्यते। केवलव्यतिरेकिभङ्गे चैतद्विशदं भविष्यति। गन्धवत्त्वात् पृथिवी नित्या वा अनित्या वेति तु यदा कश्चिद्व्यवहरेत्, तत्रापि गन्धवत्त्वं नित्यत्वानित्यत्वयोरन्यतरस्य प्रयोजकं न वा इत्येव संदेहः। सोऽपि धर्मत्वादिलक्षणसमानधर्मादेव। अथ नित्यव्यावृत्तधर्मवत्त्वादनित्यत्वम्, अनित्यव्यावृत्तधर्मवत्त्वाच्च नित्यत्वं पुरस्कृत्य नित्या अनित्या वेति संशेते; तदाऽपि हेतुभूतधर्मद्वयनिमित्तोऽयं संशयः। न ह्येक एवात्र हेतुः। गन्धस्तु तत्र सामान्यरूपस्तटस्थः; न तु हेतुः। विप्रतिपत्तिमपि केचित् समानधर्म एवान्तर्भावयन्ति। यथा हि ऊर्ध्वत्वमुभयसाधारणम्, तथा वादिपरिगृहीतत्वादेरपि साधारणत्वात् विमतिविषयस्य धर्मिणो वा सामान्य-

वेषस्य तदुभयसाधारण्यादिति । तथाऽपि साधारणधर्मस्य सहानुभूतस्थाणुत्वपुरुषत्वस्मारकत्ववत् विप्रतिपत्तेरपि समानधर्मोन्नीतिनिरपेक्षाया एव तदुपजीव्यतया तत्पूर्वभाविन्याः साक्षात्तत्तद्विशेषस्मारकत्वसिद्धेर्द्वैधमुक्तमस्माभिः ॥

पुनश्चायं द्वित्रिचतुरादिशिरोधिकरणभेदाद्बहुविधः ; यथा—अयं स्थाणुर्वा पुरुषो वेति, घटः सत्योऽसत्यो निर्वचनीयोऽनिर्वचनीयो वेत्यादि । तथा इमौ स्थाणू वा पुरुषौ वा, एते पदार्थाः सत्या असत्या निर्वचनीया अनिर्वचनीया वेत्यादि । यस्तु द्वयोरन्यतरस्य चोरत्वे सिद्धे अयं चोरः अयं वा चोर इति संदेहः, स तु अयं चोरो न वा इत्येवंरूपसंशयद्वयसमाहारः । यद्वा यश्चोरः, सः अयम् अयं वा इत्येक एव । अथवा चोरत्वमेतन्निष्ठम् एतन्निष्ठं वेति । यद्यप्युभयव्यतिरिक्तपुरुषचोरत्वाभावे तयोरन्यतरस्याचोरत्वे वा तात्पर्यान्निर्णयगर्भत्वम्, तथाऽपि उभयोरन्यतरविशेषनिर्णयाभावात् तस्मिन्नंशे संशय एव । न चैकस्यापि ज्ञानस्य संशयनिर्णयात्मताविरोधः, सर्वस्मिन्नपि संशये धर्म्यंशादौ निर्णयस्य दुस्त्यजत्वात् । पुनर्द्विविधोऽयम्—अन्यतरकोटिपरिशेषयोग्यत्वतदयोग्यत्वभेदात् । पूर्वो यथा—स्थाण्वात्मके वस्तुनि स्थाणुः पुरुषो वेति । उत्तरस्तु पलालकूटे द्विरदो गिरिशिखरं वेति । तत्र निरूपकाणां प्रायशः पूर्व एव भवति । तेनैव च प्रवृत्तस्य पाक्षिकोऽर्थलाभः । यद्वा निरीहस्यैव कदाचित् द्वितीयेन संशयेन विपर्ययेण च प्रवृत्तस्य दैवात् तदातनार्थसंनिपातेनाभिमतलाभ इति । पुनरपि इमौ संशयविपर्ययौ सामान्यधर्मिणो विशेषाणां चानुभूयमानत्वस्मर्यमाणत्वादिभेदात् बहुविधावूहनीयाविति । किंसंज्ञकोऽयं वृक्ष इत्येवमादिरूपोऽनध्यवसायो नामान्यो ज्ञानविशेष इति केचित् ; तदसारम्, तस्य संज्ञादिविशेषसंदेहसमनन्तरभावितद्विशेषबुभुत्सात्मकत्वात् । अथवा अवच्छेदकादर्शनादनवच्छिन्नकोटिविशेषः संशय एव । ऊहस्तु प्रायः पुरुषेणानेन भवितव्यमित्यादिरूप एककोटिसहचरितभूयोधर्मदर्शनादनुत्कटान्यकोटिकः स एव । प्रायः पुरुषेण भवितव्यमिति पुरुष एवेत्यभिप्रायश्चेत् यथोचितं प्रत्यक्षानुमानादिष्वनुप्रवेशः । तर्करूपमूहं तु अनुमाने वक्ष्यामः ॥

त्रिविधं प्रमाणम्—प्रत्यक्षानुमानशब्दभेदात् । भगवता **मनुना**ऽप्युक्तम्—

* प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ॥ इति ॥

आह च भगवान् **शौनकः**—* दृष्टानुमानागमजं ध्यानस्यालम्बनं त्रिधा । इति । भाष्यकारेण च प्रत्यक्षादित्रयं स्वशब्देनोपादाय *प्रमाणसंख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः इत्यन्येषामनादरः कृतः । सर्वाभ्युपगतप्रमाणानामिति च पराभ्युपगममात्रं द्योतयति, तत्र प्रतिवादिनः षट्प्रमाणाभ्युपगमात् । प्रत्यक्षानुमानागमानामेव च मिथो भेदो **वेदार्थसंग्रहे** विशदमुपपादितः । यत्तु *मत्तः स्मृतिर्ज्ञानमपोहनं च इत्यत्र **भाष्यम्**—*ज्ञानमिन्द्रियलिङ्गागमयोगजो वस्तुनिश्चयः इति, तत्रापि योगजस्य प्रत्यक्षस्य प्राधान्यात् पृथग्व्यपदेशः । अन्तर्भावं च वक्ष्यामः । उक्तं च **श्रीविष्णुचित्तैः प्रमेयसंग्रहे**—* प्रमाणसंख्याविवादेऽपीत्यत्र त्रिप्रमाणत्वं भाष्योक्तम् इति । भाष्ये च केषुचित् कोशेषु यथार्थख्यातिसमर्थनदशायाम्—*अथवा किमनेन बहुनोपपादनप्रकारेण । प्रत्याक्षानुमानागमाख्यं प्रमाणजातमागमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसङ्कल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति? किं नोपपद्यते? इत्यादिः पाठो दृश्यते । यद्यपि स्मृतिरपि यथार्था प्रमाणमिति वक्ष्यते, तथाऽपि प्रत्यक्षादिमूलतया तदविशेषात् पृथगनुक्तिः । उक्तं च **तत्त्वरत्नाकरे**—* प्रत्यक्षादिमूलानां स्मृतीनां स्वस्वमूलेऽन्तर्भावविवक्षया प्रमाणत्रित्वाविरोधः । चतुष्ट्वे च वैदिकानुवादो दर्शितः इति । स चाय-

मनुवादः पूर्वोपात्तः—* स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम् इति प्रत्यक्षाद्यविशेषेण वेदानुवादाच्च इति । **प्रज्ञापरित्राणे** तु स्मृतिप्रामाण्यानभ्युपगमेऽपि ज्ञानस्य तावत् करणभेदाच्चातुर्विध्यमेवोक्तम्—

* तत्रेन्द्रियार्थसंबन्धो लिङ्गशब्दग्रहौ तथा । संस्कारोन्मेष इत्येते संविदां जन्महेतवः ॥ इति ।

यत्तु तत्रैव—* स्वयंसिद्धिस्तथा दिव्यं प्रत्यक्षमनुमाऽऽगमः । पञ्च सन्ति प्रमाणानि जैमिनिव्यासयोर्हृदि ॥ इत्यादिना स्वयंसिद्धिदिव्ययोः पृथङ्निरूपणं कृतम्, तत् प्रत्यक्षावान्तरवैरूप्यबोधनाभिप्रायम् । यथोक्तं **श्रीविष्णुचित्तैः**—* भगवत्प्रसादलब्धयोगिप्रत्यक्षं दिव्यम् इति ॥

**प्रत्यक्षलक्षणम्** ॥ तत्र साक्षात्कारिप्रमा प्रत्यक्षम् । साक्षात्त्वं च जातिरूप उपाधिरूपो वा कश्चित् ज्ञानस्वभावविशेषः स्वात्मसाक्षिकः ॥

ज्ञानकारणकज्ञानस्मृतित्वरहिता म[मि]तिः । अपरोक्षेति निष्कर्षे नाव्याप्त्यादिप्रसञ्जनम् ॥

**प्रमेयसंग्रहे** त्वेवमुक्तम्—* साक्षादनुभवः प्रत्यक्षम् । साक्षात्त्वं जातिः इत्यादि । **तत्त्वरत्नाकरे**ऽप्येवमुक्तम्—

* अपरोक्षप्रमाध्यक्षमापरोक्ष्यं च संविदः । व्यवहार्यार्थसंबन्धिज्ञानजत्वविवर्जनम् ॥ इति ॥

पारोक्ष्यं चैवमुक्तम्—पारोक्ष्यं व्यवहार्यानन्तर्गतवस्तुवेदनापेक्षा । तदनन्तर्गतलिङ्गाद्यपेक्षा पारोक्ष्यमनुमादौ इति । **वरदविष्णुमिश्रैर्मानयाथात्म्यनिर्णये** त्वेवमुक्तम्—अपरोक्षप्रमा प्रत्यक्षम् । प्रमाया आपरोक्ष्यं नाम विशदावभासत्वमिति ब्रूमः । किमिदं वैशद्यं नाम ? असाधारणाकारेण वस्त्ववभासकत्वम्—इत्यादि । साक्षात्त्वं द्विधा; नित्यं चानित्यं च । ईश्वरनित्यज्ञानादिनिष्ठं नित्यम् । अस्मदादिज्ञाननिष्ठं त्वनित्यम् । अस्मदादिप्रत्यक्षं द्विधा, योगिप्रत्यक्षमयोगिप्रत्यक्षं चेति । तत्र योगिप्रत्यक्षं प्रकृष्टादृष्टविशेषजम् । तत् युक्तावस्थायां मनोमात्रजन्यम् । वियुक्तावस्थायां तु बाह्येन्द्रियजन्यमपि । तच्च बुभुत्सादिप्रतिनियतविषयमागमैकसिद्धं च । भावनाबलजमात्रं जगत्कर्तरि प्रत्यक्षं प्रतिक्षिप्तं **शास्त्रयोन्यधिकरणे,** अन्यत्र भाष्यकारैरेव साक्षाद्योगिप्रत्यक्षस्य कण्ठोक्तेः, तस्य संभवतोऽप्यागमिकेश्वरज्ञानमूलस्यागमानुवादत्वापादनाशक्त्या तत्रौदासीन्यात्; धर्मादयः कस्यचिदिन्द्रियग्राह्याः, प्रमेयत्वात्, घटवत्, मीमांसकानामप्रत्यक्षत्वाद्वा, अस्मत्सुखादिवदित्याद्यनुमानानां विपक्षे बाधकविरहादिभिराभासत्वात्; आगमबाधप्रसङ्गस्यैव पुरस्कारे त्वागमेनैव चरितार्थत्वात्; अन्यथा धर्मादयः कस्यचिच्चक्षुर्ग्राह्या इति वदतो बौद्धस्य किं प्रतिवक्ष्यसि । यश्चानुव्यवसाये सविषयव्यवसायप्रत्यक्षतामिच्छति, तस्यास्मदादिष्वपि धर्मादिव्यवसायानुव्यवसाये धर्मादिप्रत्यक्षत्वसिद्धौ कथं तदतिरिक्तयोगिप्रत्यक्षानुमासिद्धिः ? तद्व्यवच्छेदेन प्रयोगेऽपि सौगतोक्तचाक्षुषत्वादिसाधनप्रसङ्गः स्यादिति । स चादृष्टविशेषो योगाभ्यासतपश्चर्यादिभिर्जायते । तस्मादार्षाभिमतमपि प्रकृष्टादृष्टजत्वाविशेषात् तत्रैवान्तर्भूतम् । यथोक्तं **प्रज्ञापरित्राणे**—

* अत्रेन्द्रियानपेक्षं यज्ज्ञा[द्धा]नमर्थावभासकम् । दिव्यं प्रमाणमित्येतत् प्रमाणज्ञाः प्रचक्षते ॥
परमेश्वरविज्ञानं मुक्तानां च धियस्तथा । संजयार्जुनवाल्मीकिप्रभृत्यार्षधियोऽपि तत् ॥ इति ॥

इन्द्रियानपेक्षमिति—अदिव्येन्द्रियानपेक्षमित्यर्थः । अत एव हि गीयते—* दिव्यं ददामि ते चक्षुः इत्यादि । यद्वा परमेश्वरादिविज्ञानसहपाठादिभिस्तथैव मन्तव्यम् [तन्मतम्] । अनन्तरं चैवमुक्तम्—

* स्वाभाविकस्य ज्ञानस्य स्वतः सर्वावभासिनः । अविद्याप्रतिबन्धस्या[बद्धस्या]प्रतिबन्धोऽक्षयोगतः ॥
अविद्याहानितो मुक्तपुरुषाणां हि संविदाम् । स्वाभाविकस्वरूपेण निखिलार्थावभासिता ॥

प्रतिबन्धकभावस्य प्रत्युत्तम्भकभाविना । परेणानुगृहीता धीर्त्रर्षीणां सर्वभासिका ॥ इति ॥

मानसप्रत्यक्षमप्यस्मदादीनां नास्त्येवेति **वृद्धसम्प्रदायः**, आत्मस्वरूपस्य तद्धर्मभूतज्ञानस्य च स्वयंप्रकाशत्वात्, सुखदुःखे-च्छाद्वेषप्रयत्नानां तत्तद्धेतुतयाऽभिमतज्ञानविशेषानतिरेकस्य **वेदार्थसंग्रहे** समर्थितत्वात्, नित्यत्वादिविशिष्टास्मदाद्यनुभवस्य शास्त्रादिप्रसिद्धत्वात्, पूर्वानुभवादिज्ञानस्य स्मृतिरूपत्वात्, *आन्तरसुखदुःखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रिया-नपेक्षप्रवृत्त्यनुपपत्तेः इति **शास्त्रयोन्यधिकरणभाष्यस्यान्वारोहेणाप्युपपत्तेरिति** । ततश्चादिव्यबाह्येन्द्रियप्रसूतं[प्रसृतं] ज्ञान-मयोगिप्रत्यक्षम् । तत् सामान्याद्दृष्टालोकविशेषादिसहकृतेन्द्रियजन्यं दृष्टसामग्रीविशेषात् प्रतिनियतविषयम् । तत् श्रोत्रा-दीन्द्रियासाधारणकारणभेदात् पञ्चधा । विषयेन्द्रियसंबन्धश्च द्रव्येषु संयोगः, द्रव्याश्रितेषु रूपादिषु तु संयुक्ता-श्रयणम् । यथोक्तं **तत्त्वरत्नाकरे**—

* अत्र वृद्धा विदामासुः संयोगः संनिकर्षणम् । संयुक्ताश्रयणं चेति यथासंभवमूह्यताम् ॥ इति ॥

पुनः प्रत्यक्षं द्विधा, सविकल्पकं निर्विकल्पकं चेति । सप्रत्यवमर्शं प्रत्यक्षं सविकल्पकम् । तद्रहितं प्रत्यक्षं निर्विकल्पकम् ।

**नैयायिकनिर्विकल्पकनिराकरणम्** ॥ उभयविधमप्येतद्विशिष्टविषयमेव । अविशिष्टवस्तुग्राहिणो ज्ञानस्या-नुपलम्भात् अनुपपत्तेश्च । बालमूकतिर्यगादिविज्ञानमपि हि संज्ञादिविकल्परहितमपि विशिष्टवस्तुविषयमेव, अन्यथा तेषां हेयोपादेयविभागपूर्वकप्रवृत्तिविशेषानुपपत्तेः । विप्रतिपन्नं विशिष्टज्ञानं विशेषणज्ञानपूर्वकम्, विशिष्टज्ञानत्वात्, सुरभि चन्दनमित्यादिविशिष्टज्ञानवदिति चेन्न; एकसामग्रीवेद्यविशेषणेषु तन्निरपेक्षत्वात्, स्वरूपसंबन्धपक्षे स्वरूपग्रहेणैव संबन्धस्यापि ग्रहणात्, तावतैव विशिष्टग्रहणसिद्धेः, समवायवादेऽपि तस्यैव गृह्यमाणस्य विशेषणविशेष्यभावरूपत्वात्, समवायविशिष्टप्रत्यये तथैवाभ्युपगमात्, तद्वैशिष्ट्यग्रहे च गुणवैशिष्ट्यग्रहस्यावर्जनीयत्वात् । न च समवायस्य सविकल्प-कैकविषयतेति वाच्यम्, निर्विकल्पके धर्मवद्धर्मिवच्च [धर्मधर्मिवत्] तत्संबन्धस्याप्यैन्द्रियिकत्वाविशेषेण ग्रहणसंभवात्, योग्यस्य संनिकृष्टगृह्यमाणसंबन्धिनः संबन्धस्याग्रहणानुपपत्तेः, अन्यथा नित्यं तदग्रहापातात् । प्रथमाक्षसंनिपातजा बुद्धि-र्विशिष्टविषया, बुद्धित्वात्, संप्रतिपन्नवत्, इत्याद्यपि चिन्त्यम् ॥

**सविकल्पकनिरूपणम्** ॥ न च सविकल्पकं न प्रत्यक्षमिति वाच्यम्, साक्षात्काराबाधाद्यविशेषात् ।

सहकारिविशेषेण न वैजात्यं प्रसज्यते । तज्जातीये तु यत्किंचिद्वैषम्यं संभवेदपि ॥
यत्र दृश्येत वैजात्यं तथा तत्राभ्युपेयते । तावता नैव सर्वत्र भवेदेतस्य कल्पनम् ॥
केवलेन्द्रियजं चापि न किंचिज्ज्ञानमिष्यते । सहकारिविशेषा हि विभिद्यन्ते प्रतीन्द्रियम् ॥
अतः संस्कारसंभेदेऽप्यपरोक्षत्वयोगतः । प्रत्यक्षत्वं विकल्पस्य न कचिद्विनिवर्तते ॥

* निर्विकल्पकमेकजातीयेषु द्रव्येषु प्रथमपिण्डग्रहणम् इत्यादिभाष्यं तु उदाहरणपरं योज्यम् । अत एव हि **श्रीविष्णुचित्तैरुक्तम्**—*संस्कारोद्बोधसहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकम्, एकजातीयेषु प्रथमपिण्डग्रहणं द्वितीयादि-पिण्डग्रहणेषु प्रथमाक्षसंनिपातजं च ज्ञानं निर्विकल्पकम् इति । अन्यत्र चोक्तम्—* केवलचक्षुरादीन्द्रियजन्यं निर्वि-कल्पकम् इत्यादि ॥ यत्तूक्तं **तत्त्वरत्नाकरे**—

* विशेषणानां स्वायोगव्यावृत्तिरविकल्पके । सविकल्पेऽन्ययोगस्य व्यावृत्तिः संज्ञिता तथा ॥

इति, तत्रापि संस्कारनिरपेक्षत्वसापेक्षत्वयोः प्रदर्शनपरत्वं ग्राह्यम् । प्रत्यक्षस्य चैवं विभागोऽभिहितः—* द्विविधं चैतत्

प्रत्यक्षम् अर्वाचीनमनर्वाचीनं च । युगपदशेषविषयसाक्षात्कारक्षममनर्वाचीनम् । तत् योगिमुक्तेश्वराणां प्रभावविशेषाधीनमुपपादयिष्यते इत्यादि । अत एव कुदृष्टीनां सन्मात्रग्राहि प्रत्यक्षमित्यविलक्षजल्पितं निरस्तम् । क्रमयौगपद्यादिदूषणं तु भ्रान्तिविकल्पेऽपि समानम् । भ्रान्तिरूपोऽपि हि विकल्पः क्षणिकत्वान्न विरम्य व्यापर्तुमलम् । न च पूर्वज्ञानवार्तां जानाति । न च स्वयं धर्मिप्रतियोगिग्रहणाभावे भेदग्रहणं मन्यसे । तथाऽपि यदि कल्पना भेदविशिष्टं युगपद्गृह्णाति, का प्रत्यक्षे सर्पमृतिः ? अतो धर्मिवद्योग्यत्वाज्जात्यादिरूपभेदोऽपि युगपद्ग्राह्यः । अभेद इव भेदोऽपि स्वरूपतः प्रतीतौ [तो] न प्रतियोगिसाकाङ्क्षः ; भेदव्यवहारस्त्वभेदव्यवहारवत् तत्साकाङ्क्षः । अतः प्रथममेव भेदधीर्युक्ता । अत एव धर्मधर्मिणोर्धर्मिप्रतियोगिनोरन्येषां च प्रतीतावन्योन्याश्रयो निरस्तः । ततश्च व्युत्पत्तेस्तद्व्यवहारेऽपि न तत्प्रसङ्गः । भेदशब्देन व्यवहारस्य तु प्रतिसंबन्धिनिरूपिताकारे व्युत्पन्नत्वात् तदपेक्षा । भेदत्वं हि भेदानां प्रतियोगिना निरूप्यं न तु जात्यादिलक्षणं स्वरूपम् ; यद्ग्रहो यत्र यदारोपविरोधी, स हि तस्य तस्माद्भेदः ; गोत्वादि च गृह्यमाणं स्वस्मिन् स्वाश्रये चाश्वत्वाद्यारोपं निरुणद्धीति स्वस्य स्वाश्रयस्य च स्वयमेव तस्माद्भेदः । अपि च प्रतियोगिसापेक्षत्वनिरपेक्षत्वलक्षणविरुद्धधर्माध्यासेन भेदात् स्वरूपभेदग्रहणैक्यं न संभवतीति वदन् भेददूषणार्थमेव भेदं साधयतीति स्ववचनविरोध इति ॥

**शाब्दापरोक्षनिरासः**—शब्दजन्यमपि प्रत्यक्षमस्तीति त एव वर्णयन्ति ; तदप्ययुक्तम्, व्याघातात् । न हि परोक्षजननस्वभावतया सिद्धा सामग्री विशेषाभावे क्वचित् स्वभावमतिपतेत् । न चैकजातीयसामग्रीतः प्रसूतं कार्यं विचित्रं स्यात्, एकयैव सामग्र्या सर्वजातीयोत्पत्तिप्रसङ्गात्, एकस्य कार्यस्य विरुद्धजातियोगप्रसङ्गाच्च । * दशमस्त्वमसि इत्यादिदृष्टान्तेऽपि त्वमर्थमात्रं प्रत्यक्षम् । दशमोऽहम् इति प्रत्ययो हि नेन्द्रियस्वातन्त्र्येणोदेति, किंतु पुरुषवचनानुरोधेन । तन्मूलेऽपि चेत् प्रत्यक्षता; एवं धर्मवांस्त्वमसि इति कार्तान्तिकोपदेशादौ तादृशोऽहमस्मि इति बोधे धर्मादेरपि प्रत्यक्षत्वप्रसङ्गः । ततश्चाप्रत्यक्षमिति जगति किंचिन्न स्यात्, प्रत्यक्षभूतं यत्किंचिदुद्दिश्य विशेषणतयैव सर्वस्य प्रत्यक्षत्वोपपत्तेः । पूर्वावगतदशमभावं तु पुरुषं प्रत्युपदेशे माषराशिप्रविष्टमषीन्यायेन पूर्वापरापरोक्षधीनैरन्तर्येण मध्यवर्तिशब्दजन्यधियोऽपरोक्षत्वव्यवहारः कस्यचित् स्याद्वा न वा । अत एव तत्त्वमस्यादिशब्दः स्वविषयगोचरप्रत्यक्षज्ञानजनकः, स्वतोऽपरोक्षार्थगोचरत्वात् दशमस्त्वमसि संवित् स्वप्रकाशा इत्यादिवाक्यवत् इत्याद्यनुमानानि निरस्तानि, दशमत्वस्वप्रकाशत्वादिविशिष्टाकारेण दृष्टान्तेष्वपरोक्षज्ञानजननासिद्धेः । तथा, विगीतः शब्दो न स्ववाच्यगोचरप्रत्यक्षधीजनकः, शब्दत्वात्, संप्रतिपन्नवत् इत्याद्यपि प्रतिप्रयोक्तव्यम् । उपलम्भविरोधशाब्दप्रत्यक्षलक्षणसंकरादिप्रसङ्गोऽत्र विपक्षे बाधकः । नैवं पूर्वस्य, शब्दजन्यप्रत्यक्षमन्तरेणापि योगजादृष्टजनितसाक्षात्कारात् प्रणिधानविशेषप्रसादितपरमात्मसंकल्पाद्वा निःश्रेयससिद्धेरिति ॥

प्रत्यक्षं चिदचिन्मयं जगदिदं यस्येत्यनुश्रूयते यश्चानन्यधियामनन्तविभवः प्रत्यक्षतामश्नुते ।
यश्चैको युगपत्सदा स्वत इदं विश्वं दरीदृश्यते प्राज्ञं तं प्रतिपन्नमोक्षणविधादक्षं दिदृक्षेमहि ॥

॥ इति न्यायपरिशुद्धौ प्रत्यक्षाध्याये द्वितीयमाह्निकम् ॥

**॥ समाप्तश्च प्रत्यक्षाध्यायः ॥**

———

## ॥ अनुमानाध्याये प्रथममाह्निकम् ॥

अथ प्रत्यक्षमूलत्वादागमज्येष्ठभावतः । तयोरन्तरतः साङ्गमनुमानं प्रसाध्यते ॥

व्याप्यस्य व्याप्यत्वानुसंधानाद्व्यापकविशेषप्र [मि] तीतिरनुमानम् । तत् प्रमाणम्, कारणदोषबाधकप्रत्ययरहितत्वात् । किं च, अनुमानाप्रमाणत्वं नाध्यक्षेणैव गम्यते । नानुमानेन तेनैव तद्विरोधप्रसङ्गतः ॥

न च तत्संशयाकारं सर्वलोकविरोधतः । न च किंचेति दुर्ज्ञानं तथात्वेनैव निर्णयात् ॥

संदेहादनुमेयादौ प्रवृत्तिरिति वादिनः । प्रत्यक्षेऽपि तथैव स्याद्बाधाबाधादिसाम्यतः ॥

यत्तु **चार्वाकेणोच्यते**—

* विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात् । तद्वतोऽनुपपन्नत्वादनुमानकथा कुतः ॥ इति ;

अन्यत्र च—* विशेषेऽनुगमाभावः सामान्ये सिद्धसाधनम् । अनुमाभङ्गपङ्केऽस्मिन्निमग्ना वादिदन्तिनः ॥

इति; तत् स्ववचनविरुद्धम्, अनुमाननिरासाय हेतूपन्यासात्, तस्य च हेतोः स्वसाध्यव्याप्त्यनभ्युपगमे अनुमानस्य तेन बाधितुमशक्यत्वात्, अभ्युपगमे तत्रापि * विशेषेऽनुगमाभावः इत्यादिप्रसङ्गात् ॥

न व्याप्तिर्नियमायोगादिति व्याप्तमिदं न वा । व्याप्तं चेत् स्वीकृता व्याप्तिर्न व्याप्तं चेन्न दूषणम् ॥

सर्वस्य व्यभिचारित्वे व्यभिचारो न सिध्यति । एकस्याव्यभिचारित्वे न सर्वव्यभिचारिता ॥

ततश्च सामान्यसिद्धैव व्याप्तिर्हेतोः पक्षधर्मताख्यसहकारिसाहित्यात् साध्यविशेषमुपस्थापयतीति दर्शनबलादभ्युपेयम् । अप्रमाणत्वपक्षेऽप्यन्वयव्यतिरेकावसिता सैव हि सामग्री ; अन्यथा अनुमानतो [ऽ] विशेषप्रतीतिमात्रस्याप्यनुदयप्रसङ्गात् । यथा च सामान्यधीः सामग्रीमध्यपातिनी विशेषबुभुत्सादिहेतुः, तथा सर्वविशेषसंग्राहिसामान्यव्याप्तिधीरपि विशेषानुमितिहेतुरिति यथादर्शनमाद्रियेथाः । स च साध्यस्य विशेषः पक्षसंबन्धमात्रात्मा त्र्यन्तविद्भिरिष्यते । तदतिरिक्तविशेषानुमाने त्वनुगमाभावविरोधादयो दोषाः स्युः । अत एव च वयमत्यन्तातीन्द्रियवस्त्वनुमानं नेच्छामः । तदेतत् सूत्रकारैरेव * शास्त्रयोनित्वात् इति जगत्कर्तुः शास्त्रैकप्रमाणकत्वं वदद्भिः प्रदर्शितम् ॥

**अनुमानस्यातिरिक्तत्वस्थापनम्** ॥ अस्त्वनुमानं प्रमाणम् ; तथाऽपि प्रत्यक्षान्तर्भूतं स्यादिति चेन्न, साक्षादिन्द्रियव्यापारसाध्यत्वाभावात् । नापि लिङ्गग्रहणावान्तरव्यापारद्वारेन्द्रियजम्, इन्द्रियव्यापारोपरमेऽपि स्मर्यमाणलिङ्गाद्व्यापकप्रतीतेः । नापि संस्कारादिप्रत्यासत्त्या मानसता, बाह्येन्द्रियग्राह्येष्वपि तत्तत्प्रत्यासत्त्या मानसप्रत्यक्षत्वप्रसङ्गात् । न चैतदिष्टम्, बाह्यान्तरप्रत्यक्षविभागायोगात्, बाह्यार्थेषु च मनसः स्वातन्त्र्यादर्शनात् । यत्परतन्त्रता मनसः, तत् पृथक्प्रमाणमित्युच्यते । वेद्यांशपारोक्ष्यं चानुमितेरैन्द्रियिकत्वविरोधि । परंपरया प्रत्यक्षमूलत्वमात्रेण प्रत्यक्षत्वोपचारं तु न वारयामः । न चानुमितिः स्मृतिमात्रमिति वक्तुं शक्या, अधिकविषयत्वात् । न चानेकसंस्कारसंभेदेन तत्, अनुभूतानेकस्मरणयौगपद्यसंभवेऽपि वैशिष्ट्यविशेषस्याननुभूतस्य स्मृत्ययोगात् । शाब्दत्वं तु असंभावितमेव । अतः सिद्धम्—अनुमानं प्रमाणं प्रत्यक्षादिबहिर्भूतं चेति ॥

**व्याप्तिनिरूपणम्** ॥ अनधिकदेशकालनियतं व्याप्यम् । अन्यूनदेशकालवृत्ति व्यापकम् । तदाहुः—

* यो यस्य देशकालाभ्यां [देशतः कालतो वाऽपि] समो न्यूनोऽपि वा भवेत् ।

स व्याप्यो व्यापकस्तस्य समो वाऽभ्यधिकोऽपि वा ॥ इति ॥

देशकालनियमश्च क्वचिद्देशैक्ययौगपद्याभ्याम् ; यथा रसगुडत्वयोः । क्वचिद्यौगपद्यमात्रेण ; यथा [शङ्कु] गन्तृच्छायासूर्यस्थितिविशेषयोः । क्वचिद्देशैक्येनैव ; यथा पाकतज्जन्यगुणयोः । क्वचिद्भिन्नदेशतया भिन्नकालतया च ; यथा दिवा निशाकरास्तगमनातिक्रा[श्रा]न्तसमुद्रक्षोभयोरित्यादि । अत्रेदं तत्त्वम्—यादृग्रूपस्य यद्देशकालवर्तिनो यस्य यादृग्रूपेण देशकालवर्तिना येनाविनाभावः, तदिदमविनाभूतं व्याप्यम् ; तत्प्रतिसंबन्धि व्यापकमिति । तेन निरुपाधिकतया नियतः संबन्धो व्याप्तिरित्युक्तं भवति ॥

**व्याप्तिग्रहोपायनिरूपणम् ॥**

यथोपलम्भं भूयोभिर्दर्शनैर्गम्यते तु सा । सकृदेवानवच्छिन्नसंबन्धो न हि भासते ॥

तदुक्तं **वरदविष्णुमिश्रैः**—* तस्मादनुमानाङ्गभूता व्याप्तिर्भूयोदर्शनावसेयैव इति । **तत्त्वरत्नाकरे** तु सा सकृद्दर्शनसाध्यैवोक्ता—

* संबन्धोऽयं सकृद्ग्राह्यः प्रतीतिस्वरसात् तथा । प्रतीतयो हि स्वरसाद्धर्मधर्म्यवधीन् विदुः ॥ इत्यादिना । सकृदेव च सर्वधूमव्यक्तिग्रहणमपि सामान्यरूपैक्यादुपपादितम् । असंनिकृष्टेष्विन्द्रियसंप्रयोगश्च संयुक्ताश्रिताश्रयत्वमित्युक्तम्—* संनिहितधूमादिव्यक्तिसंयुक्तस्येन्द्रियस्य तदाश्रितधूमत्वादिः संयुक्ताश्रितः, तदाश्रयत्वेन व्यक्त्यन्तराणि संप्रयुक्तानि इत्यादिना,

* तृतीयः संनिकर्षोऽयं संनिकर्षनिरूपणे । अनुक्तस्तत्प्रमेयस्य व्याप्तेरत्रैव साधनात् ॥ इत्यन्तेन ।

इदं तु सर्वप्रत्यक्षत्वप्रसङ्गभीरवो वैभवं मन्यन्ते, पूर्वपूर्वसहदर्शनजनितसंस्कारप्रचयसहकृते त्वन्तिमे प्रत्यक्षे सकृदेव सामान्यतस्तज्जातीयसमस्तसंग्राहिणि सिद्धे [णी सद्धेतु] सामग्रीमहिम्नाऽप्यसंबद्धप्रकाशनायोगात् [संग्राहिणी सिद्धिः सामग्रीसमवहितस्याप्यसंबन्धप्रकाशायोगात् ] । संभावितसंबन्धप्रकाशनमात्र [मात्रप्रकाशन] परत्वे तु नातिप्रसङ्गः । एवम् [च] अस्तु सकृद्दर्शनेन भूयोदर्शनेन वा व्याप्तिग्रहः । तत्राप्यन्तिममन्यद्वा ग्राहकं बाह्यं मानसं वाऽस्तु । तत्र सर्वैरपि भूयोदर्शनं न परित्याज्यम् । तत्रापि भूयोदर्शनजनितसंस्कारसमुदायाधीनविमर्शविशेषेणोपाधिसंभावनामुच्छिन्दता निःशङ्कसंबन्धनियमसिद्धिरिति च सिद्धम् । अतःपरं तु विकल्पनमायासायैवेति विरम्यते ।

तादात्म्यतदुत्पत्तिभ्यामेवाविनाभाव इति सौगताः । यथाऽऽहुः—

* कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमो दर्शनान्न नदर्शनात् ॥ इति ; तदसत्, अकार्यानात्मभूतकृत्तिकोदयादिना अकारणानात्मभूतरोहिण्युदयाद्यनुमानात् । कथं च तादात्म्ये लिङ्गलिङ्गिभावः ? तथात्वेन वा भेदे कथंतत् ? यदि च शिंशपात्ववृक्षत्वयोरैक्यम्, सर्वोऽपि वृक्षः शिंशपैव स्यात्, नवा कश्चित् । किंच,

सति भावे न कार्यत्वं किं तु सत्येव भाविता । तस्माच्चेदविनाभावः स्यादात्माश्रयणं ध्रुवम् ॥

**व्याप्तिविभागः ॥** व्याप्तिर्द्विधा, अन्वयव्यतिरेकभेदात् । साधनविधौ साध्यविधिरूपेण प्रवृत्ता व्याप्तिरन्वयव्याप्तिः ; यथा, यो धूमवान् सोऽग्निमानिति । साध्यनिषेधे साधननिषेधरूपेण प्रवृत्ता व्याप्तिः व्यतिरेकव्याप्तिः ; यथा, योऽनग्निः स निर्धूम इति ॥

**उपाधिनिरूपणम् ॥** सेयमुभयविधाऽपि व्याप्तिरुपाधिसंभवे दुष्यति । साधनाव्यापकत्वे सति साध्यसम-

व्याप्तः साधनधर्मव्यतिरिक्तो धर्म उपाधिः। सावयवत्वादनित्यत्वसाधने कृतकत्वस्य, कृतकत्वादनित्यत्वसाधने सावयवत्वस्य समव्याप्तहेतुप्रयोगे तत्स्वरूपस्य चोपाधित्वव्युदासाय विशेषणत्रयम्। पक्षेतरत्वादेरुपाधित्वव्युदासाय तु समशब्दः। इतरथा साध्यव्यापक इत्येतावता सावयवत्वादेरुपाधित्वव्युदासः शक्यः। सावयवमीश्वरविग्रहादिकं नित्यतया श्रुत्यादिसिद्धमनभ्युपगच्छतां सावयवत्वाद्युदाहरणम्। अभ्युपगच्छतां तु द्रव्यत्वाद्वाच्यत्वसाधने वस्तुत्वस्य, वस्तुत्वाद्वाच्यत्वसाधने द्रव्यत्वस्य चोपाधित्वव्युदासाय विशेषणद्वयमित्युदाहर्तव्यम्। न चोपाधिव्याप्त्योर्निरूपणे अन्योन्याश्रयता, यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवर्तीत्युपाधिनिरूपणात्। स च द्विधा, निश्चितः शङ्कितश्च। व्याप्तः पक्षे नास्तीत्यवधारितो निश्चितोपाधिः, यथा—विप्रतिपन्ना सेवा दुःखहेतुः, सेवात्वात्, राजसेवावत्, इत्यनुमाने पापारब्धत्वम्। अयं च [अदश्च] ईश्वरसेवायां नास्तीति शास्त्रतो निश्चितत्वाद्व्याप्तत्वाच्च निश्चितोपाधिः। पक्षावृत्तिव्याप्त्योरन्यतरस्यापि संदेहे संदिग्धोपाधिः। तत्राद्यो यथा—विप्रतिपन्नो जीवः एतच्छरीरावसाने मुक्तिमान्, निष्पन्नसमाधित्वात्, शुकादिवदित्यत्र कर्मात्यन्तपरिक्षयः [उपाधिः]। स च निष्पन्नसमाधौ विप्रतिपन्ने जीवे अस्ति वा नास्ति वा इति संदिग्धत्वाच्छङ्कितोपाधिः। यद्यपि योगिनामुत्तरपूर्वाघयोरश्लेषविनाशौ भवतः, तथाऽपि प्रारब्धकर्मणामेकशरीर एव पर्यवसानमिति न नियमः, निष्पन्नोपायस्यापि प्रतिबन्धककर्मविशेषादनेकदिवसस्थितिवदनेकशरीरपरिग्रहोपपत्तेः। तथा च सूत्रितम्—* भोगेन त्वितरे क्षपयित्वाऽथ संपद्य [त्स्य] ते इति, * यावदधिकारमवस्थितिराधिकारिकाणाम् इति च। * विनिष्पन्नसमाधेस्तु मुक्तिस्तत्रैव जन्मनि इत्यादिस्मृतिस्त्वनिष्पन्नसमाधेः शरीरान्तरयोगनियमपरतया प्रायिकविषया; अतो नास्य साधन[ा] व्यापकत्वम्। अपक्षनिष्ठतया निश्चितोऽपि संदिग्धव्याप्तिको यथा—विप्रतिपन्नम् अधर्मः, निषिद्धत्वात्, ब्राह्मणहिंसावदिति हिंसाव्यतिरिक्तसमस्तनिषिद्धपक्षीकरेण प्रयोगे हिंसात्वमुपाधिरिति यदि कश्चिद्ब्रूयात्, तदा अग्नीषोमीयादिषु विपक्षेषु हिंसालक्षणमस्ति वा न वेति सांख्यवेदान्तिविप्रतिपत्त्या संदिहानस्य हिंसात्वं संदिग्धव्याप्तिकं भवति। पक्षे च स्वयंपतितजन्तुभक्षणादौ निषिद्धेऽपि हिंसात्वं नास्त्येवेति निश्चितमिति। उपाधेश्च साधनाभिमतधर्मे स्वगतव्याप्यत्वाध्यासहेतुत्वादुपाधिशब्दवाच्यत्वम्। तदेवं हेतोः सोपाधिकत्वे व्याप्यत्वासिद्धिः; निरुपाधिकसंबन्धे व्याप्यत्वसिद्धिः॥

केचित्तु व्यापकाभावाद्व्याप्याभावप्रतिपादनमुखेन साध्यव्यापकस्योपाधेर्दूषणत्वमाहुः। तदा साधनाव्यापकत्वे सति साध्यव्यापक इत्येव वक्तव्यम्; तथाऽपि सर्वस्य पक्षेतरत्वस्य नोपाधिता, पक्षस्य साध्यविपर्ययानिश्चये तद्व्यतिरिक्तत्वस्य व्यापकत्वानिश्चयात्। नन्वतीन्द्रियोपाधिशङ्कायां कथं साध्यनिश्चयः? मैवम्, अनुमानाप्रामाण्यवादिभिरतीन्द्रियस्य शङ्कितुमशक्यत्वात्, तत्र प्रामाण्याभ्युपगमे तु क्वचिन्निरुपाधिकत्वसिद्धावन्यत्रापि तदविशेषात्। अपि च शङ्क्यमानोऽतीन्द्रिय उपाधिर्व्यापको वा न वा? पूर्वत्र वह्न्यादेरपि सार्वत्रिकत्वप्रसङ्गः। उत्तरत्रापि नित्यो वा अनित्यो वा? नित्यत्वे साध्यस्यापि सदातनत्वापातः। अनित्योऽपि हेतुसाध्ययोरुभयोर्व्यापकः, उभयाव्यापकः, अन्यतरव्यापको वा? आद्ये साधनाव्यापकत्वाभावादुपाधिलक्षणहानिः। द्वितीयेऽपि उभयासंसर्गेऽप्युभयव्याप्यतामात्रेऽपि साध्यसमव्याप्त्यभावात्। तृतीयेऽपि साधनमात्रव्यापकस्य विशेषणयोरभावात्। साध्यमात्रव्यापकस्य तु साधनाव्यापकत्वं पक्षादन्यत्र हेतोः स्वव्यतिरेकेण वृत्तेर्वा, पक्ष एव वा स्यात्? न प्रथमः; तथा सति साध्यव्यापकस्य हेतुमन्तरेण वृत्तौ हेतोः साध्यव्यभिचारः क्वचिदन्यत्र दृष्ट इत्युक्तं भवति; स एव प्रत्यर्थितां भजते; अन्यथा तथाभूतोपाधेरसंभवः। द्वितीये तु सर्वत्र सपक्ष एवा[पक्षे योऽ]सौ साध्यवदनुगत उपाधिः, तस्य तेनैव हेतुना पक्षे साधनाद्धेतोस्तद्व्यभिचारस्याप्यसंभवात्, पक्षे

चातीन्द्रियस्य तस्याभावस्याप्यदर्शनात् । तेनापि निरुपाधिक एव संबन्ध इति । साध्यवत् साध्यसामग्रीवच्च हेतुबलादेव सोऽपि पक्षे समापतन् न स्वनिवृत्त्या साध्यं निवर्तयितुमलमिति स कथमुपाधिः ? अथ तेनैवाप्यतीन्द्रियेणातीन्द्रियोपाध्यन्तरप्रयुक्तसंबन्ध इति शङ्केत, तथा सत्यनवस्थापातः । अपि च—

उपाधित्वेन शङ्क्यस्य संबन्धो निरुपाधिकः । अन्यथोपाधिता नास्ति तद्वदन्यत्र गृह्यताम् ॥

**तत्त्वरत्नाकरे** तु एवमुपाधेः स्वरूपं प्रमाणमवान्तरभेदो दूषणत्वप्रकारश्चोपपादितः । यथा—

* केनचिद्यस्य संबन्धे योऽवच्छेदक एव हि । तस्योपाधिर्यथा वह्नेरार्द्रैधो धूमसंगमे ॥

श्रोत्रत्वयोगे नभसो यथा वा कर्णशष्कुली । संसारयोगे जीवस्य कर्माविद्यादि वा यथा ॥

साध्यव्या[प्त:]पकः साधनाव्यापक इति तं [उप] लक्षयन्ति । केचित् साधनाव्यापकः साध्यसमव्याप्तिरिति च—इत्यादिना स्वरूपं निदर्शितम् । किमस्य ज्ञापकम् ? साधनस्य क्वचित् साध्यासंबन्धस्व्यापकम्, संबन्धग्रहणवेलानुयायिस्वरूपवैकल्यं वा । असंबन्धस्व्यापकं च व्यभिचारदर्शनम् । तच्च साध्यविरुद्धधर्मकतया निश्चिते प्रमाणबाधिते पक्षे विपक्षे वा हेतोर्दर्शनम् । अग्नीषोमीयशास्त्रबाधिते पक्षे दृष्टं हि हिंसात्वं निषिद्धत्वमात्मन उपाधिं कल्पयति । प्रमेयत्वं च नित्यात्मादिविपक्षे दृष्टमनित्यत्वसाधने कृतकत्वादिकमुपाधीकरोति । सपक्षेषु च यावद्रूपविशिष्टतया साधनं साध्यसंबन्धित्वेन दृष्टम्, तदन्यतररूपविकलं चेत् पक्षे दृश्यते, तदा व्याप्तरूपाप्रत्यभिज्ञानात् सर्वरूपविशिष्टमेवोपाधयति ; यथा—भावितनयश्यामलिमनि अनुमेये मित्रापुत्रत्वं भूतपुत्रेषु दृष्टं शाकाद्याहारपरिणामविशेषम् । एवंजातीयके रूपवैकल्य[वि]कल्पितोपाधिके हेतावप्रयोजकत्वव्यपदेशः परीक्षकाणाम् ; व्यभिचारकल्पितोपाधिकयोस्तु बाधितो विरुद्धोऽनैकान्तिक इति—इत्यादिना उपाधेः प्रमाणावान्तरभेदादिकं प्रपञ्चितम् । एवं चोपसंहृतम्—तदेष [बहुरूपः] संक्षेपः ; व्यभिचार एव हि प्रतिबन्धाभावः, उपाधिरेव व्यभिचारनिदानम् । प्रमाणनिश्चित एवोपाधित्वेन शङ्कनीयः । साधने सोपाधिस्साध्ये निरुपाधिरेवोपाधित्वेन निश्चेयः । सर्वशङ्कातिप्रसङ्गपाटनपटीयांश्च तर्कः इति । तदेवं निरुपाधिकसंबन्धं व्याप्यमिति सिद्धम् । व्याप्यं साधनं लिङ्गमित्यनर्थान्तरम् ॥

**साधनरूपनिरूपणम्** ॥ तस्य द्वे रूपे अनुमित्यङ्गभूते—व्याप्तिः पक्षधर्मता चेति । तयोरेव प्रपञ्चनात् पञ्च रूपाणि—पक्षव्यापकत्वम्, सपक्षे सत्त्वम्, विपक्षवृत्तिरहितत्वम्, अबाधितविषयत्वम्, असत्प्रतिपक्ष [क्षित] त्वं चेति । सिषाधयिषितधर्मविशिष्टो धर्मी पक्षः ; यथा अग्निमत्त्वादिसाधने पर्वतादिः । तस्मिन्नभिन्नप्रकारेण स्वायोगव्यवच्छेदेन सर्वत्र वर्तमानत्वं पक्षव्यापकत्वम् । सिषाधयिषित [धर्म] सजातीयधर्मवान् सपक्षः ; यथा महानसादिः । तस्मिन् सर्वत्र, कतिपयव्यक्तौ वा वृत्तिः सपक्षे सत्त्वम् ; सर्वसपक्षावृत्तिराहित्यमित्यर्थः । कृतकत्वादयः सपक्षव्यापकाः । धूमवत्त्वादयः सपक्षैकदेशवर्तिनः । तत्र सपक्ष एव हेतुधर्मेणापि समन्वितः साधर्म्यदृष्टान्तः । तस्य व्याप्तिदर्शनस्थानत्वादुभययोगापेक्षा । साध्यतज्जातीयशून्यो विपक्षः ; यथा महाह्रदादिः । तत्र सर्वत्रावृत्तिः विपक्षवृत्तिरहितत्वम् । इदं च क्वचिद्विपक्षाभावात्, क्वचित् तत्संसर्गाभावादिति द्विविधम् । पूर्वं केवलान्वयिनि, द्वितीयमन्वयव्यतिरेकिणि चानन्तरं द्रष्टव्यम् । अन्ये तु विपक्षाद्व्यावृत्तिरितीदं रूपमकल्पयित्वा केवलान्वयिनश्चतूरूपत्वमाहुः ; तदसत् ; विपक्षवृत्त्याख्यदोषस्याभाव एव ह्यत्र रूपत्वेन विवक्षितः । तावदेव चान्वयव्यतिरेकिण्यपि रूपम् । तच्च रूपं तुल्यं केवलान्वयिन्यपीति । विपक्षसद्भावस्तु व्यतिरेकव्याप्तेरङ्गम्, विपक्षवृत्तिरूपदोषस्य च ; न पुनस्तदभावस्य । विपक्ष एव हेतुना

वर्तकत्वात् । तदतद्विभागो हि तत्कालवर्तिनैव धर्मेणेति न नियमः, अतत्कालवर्तिनाऽपि तन्निष्ठतयोपलभ्यमानेन तत्सिद्धेः ; न ह्यतीतः संसारो मुक्तात्मस्वरूपमुपलभमानैर्नोपलभ्यते, उपलभ्यमानो वाऽन्यनिष्ठः प्रतिभाति । अथ नित्येषु मिथः का वार्ता ? साऽपि कुशलैव । तेषामपि हि सत्यसंकल्पानां विचित्राः संकल्पेच्छादय ईश्वरस्येवानियतदेशकाल-विषयापर्यनुयोज्यसामग्रीका अनाद्यनन्तसंतानवन्तः सन्तीति किमन्येन विशेषेण ? अपि च यद्दर्शने यत्र यदारोपो न भवति स हि तस्य ततो भेदः । स एव च विशेषः । स चेत् स्वरूपभूतोऽहंत्वमादिरूपेण भातः परारोपं प्रतिरुन्ध्यात्, कस्ततोऽन्यस्ततो विशेषस्तस्य ? एवमनभ्युपगमे विशेषक्लृप्तावपि का गतिर्वैशेषिकस्य ? स्वपरनिर्वाहकास्ते विशेषा इति चेत्, किं त एव ? अपिच पृथक्त्वे विद्यमाने किं तैर्विशेषैः ? पृथक्त्वस्यैकजातिसंगृहीतत्वान्न ततोऽपि व्यावृत्तधीरिति चेत्, तर्हि ततो न क्वचिदपि स्यात् । विशेषेष्वपि वा विशेषत्वाक्रान्तेषु कस्ते निस्तारः ? विशेषत्वं नाम जातिर्नास्तीति चेत्, किं तत् ? उपाधिरिति चेत्, किं ततो न संग्रहः ? तथा सति क्वचिदपि तन्निबन्धनानुवृत्तधीभङ्गप्रसङ्गात् । एव-मन्योन्याभावेनापि गतार्थता दुस्तरेति परास्तः पराभिमतविशेषः ॥

**सामान्यम्** ।। सामान्यमपि परोक्तं सूत्रकारैरेव निरस्तप्रायम् ; तथा हि—*तदनन्यत्वमारम्भणशब्दादिभ्य इत्या-दिभिः सूत्रैःकार्यदशायामुपादानस्यावस्थान्तरापत्तिमात्रमेव, न पुनः पराभिमतमवयव्याख्यं द्रव्यमस्तीति समर्थनात् घटाद्यव-यव्यभावे तदाश्रितघटत्वादिसामान्यमवयविसमवेततयाऽभ्युपगतगुणादयस्तदुभयारम्भप्रक्रियाजालं च निर्मूलितम् । यच्चोपा-दानस्य घटत्वादिरूपमवस्थान्तरं संयोगविशेषादिरूपम्, तत् परैरपि कार्यतयाऽभ्युपेतमुपलम्भादिभिश्च तथैव सिध्यतीति न तत्रापि नित्यत्वकल्पनावकाशः । ततः सर्वेषां द्रव्याणां स्वरूपतोऽनाद्यनन्तत्वात् कार्यद्रव्यत्वात्मत्वादिमात्रमेव शिष्यते । गुणेषु नित्येष्ववस्थारूपेषु चानुवृत्तप्रत्ययनिमित्तं किमिति चिन्त्यम् । तत्रैवं भाषितं **शारीरकाध्ये**—* संस्थानातिरेकिणो-ऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात्, तावतैव गोत्वादिजातिव्यवहारोपपत्तेः, अतिरेकवादेऽपि संस्थानस्य संप्रतिपन्नत्वाच्च संस्थानमेव जातिः । संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तु संस्थानमनुसन्धेयमिति । एतदुक्तं भवति—किं संस्थानातिरिक्तं सामान्यं विविक्तस्फुटप्रत्यक्षाध्यवसायभेदादङ्गीक्रियते, उतोपपत्तिबलादिति ; नाद्यः, असिद्धेः ; नान्त्यः, अन्यथासिद्धेः । अतिरिक्तसामान्यमभ्युपगच्छतोऽपि हि तदुपलक्षणं संस्थानमिष्टं दृष्टं च । प्रतिव्यक्तिनियतं संस्थानं कथमनुवृत्तप्रत्ययकारणमिति चेत्, कथं वा तज्जातीयस्य लक्षणं भवति ? अनुवृत्तजात्यन्तरसंगृहीतोपाधिरूपतयेति चेत्, तावतैव गवादिव्यवहारसिद्धौ किमन्येन ? तथाऽप्यन्ततोऽनुवृत्तं सामान्यं क्वचिदभ्युपगन्तव्यम्, यत्रानन्यथासिद्धिः ; अन्यथोपाधिसंग्रहस्याप्यसंभवादिति चेत्, तवापि वा तत्र सामान्यमुपलक्षणेन संगृह्यते न वा ? पूर्वत्रान्यथासिद्धिरनव-स्थितिश्च । उत्तरत्र नियामकादर्शनाज्जातेराश्रयव्यवस्था न स्यात् । व्यावृत्तानामपि स्वभावत एव कासांचित् व्यक्तीनां तद्व्यञ्जकत्वनियतिरिति चेत्, स एव स्वभावः किं न व्यवहारं नियच्छेत् ? निर्विषयः कथं व्यवहारः स्यादिति चेन्न, तासामेव व्यक्तीनां विषयत्वात् । व्यावृत्तानामनुवृत्तव्यवहारविषयत्वे सर्वत्र विषयव्यवस्था भज्येतेति चेत्, व्यावृत्ताना-मनुवृत्तव्यञ्जकत्वे सर्वत्र तद्व्यक्तिः किं न स्यात् ? संबन्धासंबन्धाभ्यां नियमादिति चेन्न, संबन्धस्यापि समवायनाम्नः सार्वत्रिकत्वाभ्युपगमात् तत्राप्यभिव्यक्तिप्रतिनियमस्य मृग्यत्वात्, नानासमवायवादेऽपि व्यक्तिस्वभावनियमस्य दुस्त्यज-त्वात् । तथाऽपि दृष्टैकगोव्यक्तेर्व्यक्त्यन्तरे सोऽयमिति प्रत्यभिज्ञानं कथं स्यात् ? अयं गौरित्येकव्यक्तौ व्युत्पादितश्च कथं व्यक्त्यन्तरेऽपि तच्छब्दवाच्यतां प्रतीयादिति चेत्, तवापि वा कथम् ? एकधर्मसमवायादिति चेत्, तेनैव धर्मेण

स्वतो मिलितस्य समवायस्यैकस्यैव नित्यं सर्वत्र वृत्त्यभ्युपगमेन सर्वत्र सर्वव्यवहारसङ्करप्रसङ्गात् । कासांचिदेव व्यक्तीनां तद्व्यञ्जकत्वस्वाभाव्यात् व्यवस्थोक्तिरिति चेत्, तर्हि तासामेव व्यक्तीनां प्रतिसन्धानव्यवहारयोर्विषयत्वमस्तु । तथा सति भ्रान्तत्वं तयोः स्यादिति चेन्न, तद्व्यक्तित्वेन प्रतिसन्धानादेरभावात्; अपि तर्हि तथात्वेन व्यक्तिस्वरूपातिरिक्तं तथात्वं नामान्तरेण जातिरेव स्यादिति चेत्, तज्जातिव्यञ्जकं तत्तदेकव्यक्तिस्वरूपातिरिक्तं किं न जात्यन्तरं स्यात्? उपाधिविशेष एवायं प्रतिनियताश्रय इति चेत्, एवं तर्हि प्रतिनियतप्रतियोगिकं स्वभावनियतं परस्परस्मारकत्वमुपजीव्य तज्जातीयतया प्रतिसन्धानव्यवहारोपपत्तौ किमन्यकल्पनेन? तत्स्मारकतदितरविभागः कुतस्त्य इति चेत्, तद्व्यञ्जकतदितरविभागस्ते कुतस्त्यः? दर्शनादर्शनायत्त इति चेत्, तुल्यम् । संबन्धसादृश्ययोरभावे कथं स्मारकत्वमिति चेत्, तयोर्वा कथम्? सदृशसहानुभूतदर्शनस्य संस्कारोद्बोधकत्वादिति चेत्, तदपि कुतः? कार्यदर्शनात् कल्प्यत इति चेत्, तुल्यम्; अन्यथा [संबन्धसादृश्ययोरेकमुपादाय] संबन्धं सादृश्यं वैकमुपादाय तदन्यस्य कथं स्मारकत्वमिति चोद्यस्य दुर्वारत्वात् । न चात्र सादृश्यं नाङ्गीकुर्मः, सौसादृश्यरूपत्वाभ्युपगमात्सामान्यस्य । नामान्तरेण पराभिमतजातिस्वीकार इति चेत्, व्यावृत्तानां संनिवेशादीनामेव प्रतिनियतप्रतियोगिस्मारकस्वभावतया सादृश्यरूपत्वात् । गवयादेरपि तर्हि गोजातीयत्वादि-प्रसङ्ग इति चेन्न, सादृश्यसौसादृश्यविभागस्य सांप्रत्ययिकस्य सर्वसम्मतत्वादिति । एवं सामान्यादिषु सूत्रकारादिभि-र्निरस्तेषु परिशिष्टा द्रव्यगुणकर्मरूपास्त्रयः पदार्था इति केचिदाचार्याः ॥

**कर्म** ॥ अन्ये तु मन्यन्ते—यथा तत्प्रतीतेरन्यथासिद्धतया ते पदार्था **भाष्यकारादिभि**र्निरस्यन्ते, तथा कर्मापि, इति, ये तावदिह सर्वत्र सूर्यपरिस्पन्दादिवदप्रत्यक्षं कर्म फलानुमेयमिच्छन्ति । तत्र यया सामग्र्या कर्मणः सिद्धिरभिमता तयैव दृष्टं कर्मफलं साध्यताम्, किमन्तरा कल्पितेन कर्मणा? तथाऽपि चेत् क्लृप्तिः, अन्यत्रापि कालविप्रकर्षादर्शने-ऽपि सामग्रीकार्ययोर्मध्ये अन्यस्य क्लृप्तिप्रसङ्गः; तथैव च तत्रापीत्यनवस्था स्यात् । येच प्रत्यक्षं कर्मेत्याहुः, तैरपि नूनं कर्मफलत्वेनाभ्युपगतसंयोगविभागातिरिक्तं निपुणनिरीक्षणेऽपि नोपलभ्यत इति मन्यामहे । चलतिप्रत्ययोऽपि हि तावतैव चरितार्थः । न च वाच्यं यावत्संयोगं चलतिप्रत्ययप्रसङ्ग इति, पूर्वदेशविभागपूर्वकदेशान्तरसंयोगप्रथमक्षणविषयत्वात् तत्प्रत्ययस्य । तत एव ह्युत्तरका[ल]ले संयोगे वर्तमानेऽप्यचलदिति भूतानुसन्धानमुपपन्नम् । ननु प्रवाहमध्यस्थिते स्थाणौ पूर्वसलिलस्कन्धवियोगः उत्तरसलिलस्कन्धयोगश्च दृश्यते, न च तत्र चलत्वमिच्छामः । व्योमादय एव स्थिरदेशत्वेन विवक्षिता इति चेन्न, प्रवाहस्य ततो विशेषादर्शनात्; लौल्यं विशेषः इति चेत्, तर्हि संयोगविभागातिरिक्तं लौल्यरूपं कर्म प्रत्यक्षमिति कथं तदपह्नवः? इति । तत्राऽहुः—या नाम कर्मसामग्री त्वयेष्यते सा तत्तत्कर्मफलतयाऽभिमतं संयोगविशेषमुत्पादयन्ती नियतस्वभावमेव तमुत्पादयति । अत एक एव संयोगोऽनेकनिष्ठोऽपि सन् क्वचिच्चलतिप्रत्ययं क्वचित् संयोगमात्रप्रत्ययं च जनयति, यथैक एव समवायो गुणगुणिभ्यामविशेषेण स्वतो मिलितोऽपि सन् क्वचिदाश्रय-प्रत्ययं क्वचिदाश्रितप्रत्ययं च जनयति, न ह्याश्रयभाव आश्रितभावो वा समवायस्वरूपातिरिक्तः, तद्वदिहापीति । वयं तु ब्रूमः—अप्रत्यक्षकर्मवादस्तावत् प्रागुक्तदूषणादयुक्तः । प्रत्यक्षं तु कर्म स्वरूपतो दुरपह्नवम् । तत्र भाष्यादिष्वतिरेक-विधिनिषेधादर्शनादर्थान्तरविरोधाभावाच्चोदासितव्यमिति । इदं तु मन्यामहे—अतिरेकेऽपि गुणवर्गान्न राश्यन्तरं कर्म, विभाजकाभावात्, स्वेच्छाकल्पितविभाजकस्य सर्वत्र सुलभत्वेन यथाभिमतमेकं गुणमु[द्धृत्य]भयं वाऽङ्गीकृत्य राश्यन्तर-कल्पनप्रसङ्गात्, गुणावान्तरवैचित्र्यस्य गुणत्वविरोधाभावात् । अतो द्रव्यमद्रव्यमित्येव विभागः इति ॥

**गुणाः** ॥ तत्र चात्मगुणतयाऽभिमतेषु **सुखदुःखेच्छाद्वेषप्रयत्नाः** पञ्च तत्तदुत्पादकतयाऽभिमतबुद्धिविशेषानतिरिक्ता **वेदार्थसंग्रहे** समर्थिताः । धर्माधर्मौ विहितनिषिद्धक्रियासाध्यतयाऽभिमतावाज्ञावतो राज्ञ इव सर्वप्रशासितुरीश्वरस्यानुग्रहनिग्रहाख्यबुद्धिविशेषरूपौ **भाष्यादिषु** बहुषु प्रदेशेषु प्रपञ्चितौ । यः पुनः संस्कारः स तावद्बुद्धिविशेषात्म[को युक्तः] नोक्तः, न च तत्प्रयुक्तः; ततश्चिरनष्टविप्रकृष्टाकारे व्याप्त्यदर्शनात्, वासनानुवृत्तेश्च वाचनिकत्वात् । यद्यपि *इन्द्रियस्येन्द्रियस्यार्थे इत्यादिगीताश्लोकेषु **भाष्यकारै**र्वासनाया इच्छाद्वारेणैव प्रवृत्तिहेतुत्ववचनाज्ज्ञानवासनाविशेषातिरिक्ता कर्मवासना नास्ति । तथाऽपि ज्ञानवासना दुरपह्नवा, ततश्च तदाश्रयमात्रं विचार्यम्, तत्र धर्मभूतज्ञानस्य द्रव्यत्वं **न्यायतत्त्वात्मसिद्धिभाष्यादि**सिद्धमनुसरतां तन्निष्ठस्मृत्याख्यविकारोत्पादकः संस्कारोऽपि तन्निष्ठः प्राप्तः; अन्तरङ्गत्वादबाधाच्च । ये तु परपरिभाषामनुसरन्तस्तदनुगुणं तस्य गुणत्वं गृह्णन्ति, तेषामात्मन्येव संस्कारः इति विशेषः । न च बुद्धेर्नित्यत्वं सङ्कोचविकासादिदशाभेदं चाभ्युपगच्छद्भिरद्रव्यत्वं तस्याः सुवचम्; अवस्थान्तरयोगित्वमेव ह्युपादानत्वम्; तदेव हि द्रव्यलक्षणम् । तथाऽपि न गुणत्वहानिः; अपृथक्सिद्धविशेषणत्वातिरिक्तगुणत्वादर्शनात्, कर्म[त्व, कर्तृ]व्यतिरिक्तजातिमात्राश्रयत्वादिरूपगुणलक्षणसङ्केतस्यास्माभिरनादरणात् । न च द्रव्यस्याश्रितत्वभावत्वलक्षणमपृथक्सिद्धविशेषणत्वं विरुद्धम्, अवयविनि युष्माभिरपि स्वीकरणात् । यथा च द्रव्यत्वविशेषणत्वादिभिर्न विरोध इष्यते, एवमत्रापि, उपलम्भयुक्त्यादेः समानचर्चत्वात् । अतो ज्ञानं द्रव्यम्, तदवस्थाविशेषास्त्वद्रव्याणीति संस्काराख्यविकारस्थितिरपि तत्रैव युक्ता । वेगाख्यस्तु संस्कारस्तदुत्पादकत्वाभिमतकर्मविशेषातिरिक्तो न दृश्यते, नच युज्यते । स्थितस्थापके तु कर्मनिवृत्तावपि तदविनाभूतसंयोगविशेषत्वं वक्तुं युक्तम् ॥

**षाड्गुण्यम्** ॥ ये च भगवतोऽनन्ता मङ्गलगुणाः प्रकीर्त्यन्ते, ते सर्वेऽपि षाड्गुण्यविततिरूपा इति संमतम् । यथाऽऽहुः—*तवानन्तगुणस्यापि षडेव प्रथमे गुणाः । यैस्त्वयेव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः ॥ इति । षट्सु च गुणेषु **बलं** धारणसामर्थ्यम्; **ऐश्वर्यं** नियमनशक्तिः; विकारहेतुष्वप्यविकृतत्वं **वीर्यम्**; **तेजः** पराभिभवनसामर्थ्यम्, अन्यानपेक्षता वेति । लक्षितानां चतुर्णामतिमथने ज्ञानशक्तिविततिरूपत्वं व्यक्तम् । न च ज्ञानशक्त्योरप्येवं मिथोऽन्तर्भावः शक्यः, अज्ञेष्वपि द्रव्येषु शक्तिदर्शनात्, अशक्तेष्वपि ज्ञानदर्शनात् । अत एव ज्ञानविशेषः शक्तिरित्यपि निरस्तम् । शक्तिविशेषस्तु ज्ञानं स्यादिति चेत्, कोऽसौ शक्तिशब्दार्थः? विलक्षणो गुणविशेषः **प्राभाकरादिनयेन** पदार्थान्तरं वेति चेत्, न तर्हि ज्ञानस्य तद्विशेषता सिध्येत् । अथ कार्योपयुक्तविशेषणमात्रं शक्तिरिति सर्वप्रयोगानुगतं पश्यसि, तदा न केवलं ज्ञानस्य, अपि तु सर्वस्यैव शक्तित्वं प्राप्तम्, सर्वस्यापि प्रधानकारणतयाऽभिमते कस्मिंश्चिद्विशेषणत्वेनावस्थानात् । नन्वेव**मुदयनादीना**मिव स्वरूपसहकारिव्यतिरिक्तशक्त्यभावः प्रसक्तः इति चेत्, अनन्यथासिद्धयुक्तिवशादागमबलाद्वा तत्सिद्धेः । तच्छब्दस्तु विवक्षाविशेषात् स्यादिति ब्रूमः । शक्तिसमर्थनसंरम्भश्च**आचार्याणां न्यायकुलिशे** निपुणमनुसन्धेयः । शक्तिमात्रकारणादिवादाश्च बाह्यानामुपलम्भयुक्त्यागमादिविरहादनादरणीयाः । सा चेदुपादानं, सूक्ष्मं द्रव्यमेवासौ स्यादिति न विवादः ॥

अथ **अचिद्द्रव्यविशेषगुणान्** पश्यामः ॥ तत्र शब्दादयः पञ्च तत्तद्भूतवर्तिनः प्रत्यक्षादिबलादभ्युपगताः । **सत्त्वरजस्तमांसि** च शास्त्रानुसारेण । **संयोगश्च** प्रत्यक्षादिसिद्धः । नैरन्तर्यमात्रमेवायमिति चेत्, तत् किं द्रव्यस्वरूपम्? उतागन्तुरवस्थाविशेषः? नाद्यः, नित्यत्वप्रसङ्गात् । न द्वितीयः, नामान्तरेण तदभिधानात्, इति । **विभागपृथक्त्वे** तु

अभावोक्तन्यायेन दूषणीये । **परत्वापरत्वे** अपि सुखादिच्छायया ; न हि तत्तदुपाध्यवच्छिन्नदेशकालविशेषसंबन्धातिरिक्ते परत्वापरत्वे पश्यामः । तत्कल्पने च प्राक्त्वप्रत्यक्त्वादयोऽपि हि बहवो गुणास्तुल्यन्यायाः कल्प्याः स्युः । एवं सदसद्गुणप्रदर्शनप्रक्रियया **संख्यापरिमाणगुरुत्वद्रवत्वस्नेहानां** तत्त्वमवसातव्यम्, इत्यद्रव्येष्वेषा दिक् ॥

अथ **द्रव्याणि** विमृश्यन्ते ॥ तत्र तावत् **कौमारिलाभिमतविभुशब्दाख्यद्रव्यवादः** शब्दस्याचिदवस्थाविशेषत्वेन श्रुत्यादिसिद्धत्वान्निराकार्यः । **आत्मसिद्धौ** तु शब्दस्य धर्म्यतिवर्तित्वगतिमत्त्ववादस्तदाश्रयभूतावयवद्वारेणेति नेतव्यः । यत्तु—* तमः खलु चलं नीलं परापरविभागवत् । प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥

इत्याहुः, तदेतत् द्रव्यं तावदभ्युपगच्छामः ; तथा ह्युक्तं **वरदगुरुभिस्तत्त्वसारे**—

* तमो नाम द्रव्यं बहुलविरलं मेचकचलं प्रतीमः केनापि क्वचिदपि न बाधश्च ददृशे ।

अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते निरालोकं चक्षुः प्रथयति हि तद्दर्शनवशात् ॥ इति ।

एतेन वियति विततानां सूक्ष्माणां पृथिव्यवयवानां कृष्णो गुणस्तम इति पक्षोऽपि प्रतिक्षिप्तः ; साश्रयस्यैव तस्य ग्रहणविरोधाभावात्, गुणमात्रतया च कस्याप्यनुपलम्भात् । स्पर्शरूपरसानां च शब्दगन्धवद्भ्रान्तौ प्रमितौ वा निराधारग्रहणादर्शनाच्च इति । एवं द्रव्यत्वे सिद्धे कृष्णवर्णस्य द्रव्यस्य पृथिवीत्वमेवाभ्युपगन्तुमुचितम्, *यत् कृष्णं तदन्नस्य इति श्रुतेः । यद्यपि पृथिव्यां पाकविशेषवशात् शुक्लादिरूपं भवति ; तथाऽपि कृष्णरूपं नान्यत्र पाकादपि भवति ; आकाशादिषु नैल्योपलम्भोऽपि हि पञ्चीकरणमूलपृथिवीसंसर्गात् । * आकाशे चाविशेषात् इति सूत्रे भाषितम्—* अण्डान्तर्वर्तिनश्चाकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्वाच्चाक्षुषत्वेऽप्यविरोध इति । नन्वेवमाकाशमेव द्रव्यान्तरसंसर्गान्नीलं तम इत्युपलभ्यत इति स्यादितिचेत्, न स्यात्, आकाशे तम इति पृथगुपलम्भस्वारस्यात्, द्रव्यान्तरत्वे तु कल्पनागौरवात्, अन्ततोऽत्रापि पञ्चीकरणेन द्रव्यान्तरसंसर्गस्याभ्युपगतत्वाच्च इति । स्पर्शानुपलम्भस्तु इन्द्रनीलालोकदुर्दिनातपादेरिवानुद्भवादेरपि स्यात् । न च पार्थिवरूपस्य सर्वस्यालोकसापेक्षचक्षुर्ग्राह्यत्वनियमः कल्प्यः, करणवैचित्र्यादिव विषयवैचित्र्यादपि व्यवस्थोपपत्तेः । दिवाभीतानां विशिष्टाञ्जनरञ्जिताक्षाणां चालोकनिरपेक्षमेव चक्षुषैव पदार्था गृह्यन्ते । आलोकाभावमात्रे च तमसि तमोज्योतिषोर्निवृत्तिवचनं च व्याहन्येत ; प्रतिनियतनैल्यारोपकल्पनाप्रयासश्च । अतः पृथिवीविशेषत्वं तमसो युक्तम् । **पृथिव्यादीनि पञ्च भूतानि मनश्च** त्रिगुणद्रव्यपरिणतिविशेषतया श्रुत्यादिसिद्धत्वान्न पृथग्द्रव्याणि । तत्र चावयव्याख्यं भौतिकद्रव्यम् * तदनन्यत्वमारम्भणशब्दादिभ्यः इत्यादिभिः षड्भिः सूत्रैर्बुद्धिशब्दान्तरादेरन्यथासिद्ध्याद्युपपादनेन निरस्तम् । * महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् इत्यादिभिश्च पराभिमतः परमाणुः । अतः परिणामविशेषादुपलम्भयोग्यत्वायोग्यत्वादिदशाविशेषयोगि प्रकृत्यादिसंज्ञं द्रव्यं विचित्रव्यवस्थितक्रमसमष्टिव्यष्टिरूपमवतिष्ठते । **दिक्तत्त्व**मपि तत्तदुपाध्यवच्छिन्नास्तत्तद्देशविशेषा एव, अतिरिक्तकल्पकानां परापरप्रत्ययविशेषादीनामन्यथासिद्धेः । दिगुत्पत्तिश्रुतिश्च तदुपाधिकतन्निर्वाहकसृष्ट्योपपन्ना ; अन्यथा द्युपृथिव्यन्तरिक्षादिवत् त्रिगुणपरिणतिविशेषतैव स्यात्, न पृथग्द्रव्यता । न चैवं कालेऽपि प्रसङ्गः, नित्यस्य कालस्य भगवत्**पराशरादि**भिः पृथक्संख्यानात् । तस्य प्रकृतिपरिणतिविशेषत्वादिपक्षास्तत्पूर्वापरकालावश्यंभावात् श्रुत्यादिबलाच्च प्रत्यस्ताः । अतस्त्रिगुणकालात्मा चेति त्रीणि सिद्धानि । **ईश्वरस्य** तु पृथक्संख्याने चत्वारि । तस्य हि चेतनत्वादिभिः संग्रहसंभवेऽप्य [नन्तप्रकारात्यन्त] वान्तर-

वैलक्षण्यज्ञापनाय पृथक्संख्यानं प्राचामनादिवाचां च, अन्यथा प्रक्रियान्तरेणाचेतनेष्वपि संग्रहप्रसंगात् । विविक्तं च भगवता **पराशरेण**—

* परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥ इति ।

एवं **धर्मभूतज्ञाना**ख्यमपि द्रव्यमजडत्वाविशेषेऽपि स्फुटतरवैधर्म्यान्तरबलात्पृथग्गणयन्ति । तस्याद्रव्यत्ववादः केषांचि-न्नाथमुनियामुनमुनिभाष्यकारादिप्रबन्धविरोधात्प्रायः परचित्तरञ्जनार्थः । **शुद्धसत्त्वाख्यस्य** च द्रव्यान्तरस्य पर-विग्रहादियाथार्थ्योपदेशप्रवृत्तनिरुक्ताद्यासागमसिद्धत्वात् सूक्ष्मत्रिगुणावस्थाविशेषादिपक्षा बहिष्कार्याः । अतः षडेतानि द्रव्याणि । भोक्तृभोग्यनियन्तॄणां सदात्मनैकद्रव्यत्वादिपक्षा अपि निर्विशेषसन्मात्रपक्षवत् व्याघातश्रुतिविरोधादिभिर्बहुशो भाष्यादिषु निरस्ताः । तत्र त्रिगुणशुद्धसत्त्वे स्वनिरुक्त्यैव लक्ष्ये । क्षणलवाद्यात्मा **कालः** । अणुर्ज्ञाता **जीवः** । विभु-स्त्वीश्वरः । जानातिव्यवहारासाधारणकारणं व्यवहार्यविशेषो **मतिः** । एवं त्रिगुणकालजीवेश्वरशुद्धसत्त्वमतिरूपेण षोढा द्रव्यविभागः । एवं प्रमाणसार्थघण्टापथेन द्रव्याद्रव्यरूपप्रमेयग्राममधिजिगमिषतां न कुदृष्टिबाह्यकल्पितकूट-युक्तिगर्तनिपात इति ॥

॥ इति न्यायपरिशुद्धौ प्रमेयाध्याये प्रथममाह्निकम् ॥

---

## ॥ अथ द्वितीयमाह्निकम् ॥

**प्रमेयम्** ॥ अत्र यद्यपि प्रमाविषयः प्रमेयमिति व्युत्पत्त्या आरोपिताकारव्यवच्छेदार्थया अनारोपितरूपं सर्वं प्रमेयम्, तथाऽपि निःश्रेयसान्तरङ्गतया तदर्थिभिः प्रकर्षेण मेयं प्रमेयमिह विवक्षितम् । यद्विषयेण भ्रमेण संसरामः, यद्विषयेण च तत्त्वज्ञानेनापवर्ज्येमहि, तदिह नः प्रकर्षेण मेयं प्रमेयम् । तच्च द्वादशविधमुक्त**माक्षपादे**—* आत्मशरीरे-न्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयमिति । तत्र चेतन आत्मा । स द्विधा—ईश्वरोऽनीश्वर इति । जगत्कर्ता ईश्वरः । जगद्व्यापाररहितश्चेतनोऽनीश्वरः । यच्चैतन्यसमानाधिकरणं यदपृथक्सिद्धं यद्द्रव्यं, तत् तस्य शरीरम् । तत् द्विविधं—कर्मजम्, अकर्मजं चेति । आद्यमस्मदादीनाम् । द्वितीयमीश्वरादीनाम् । सात्त्विकाहङ्कारोपादानकं द्रव्य-मिन्द्रियम् । तदेकादशविधम्—पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि मनश्चेति । इन्द्रियगोचरा इहार्थाः ; ते च शब्दादयो गुणाः तद्विशिष्टानि च । अर्थप्रकाशो बुद्धिः । स्मृत्यादिकरणमिन्द्रियं मनः । मनोवाक्कायानां पुण्यापुण्यरूपो व्यापार इह प्रवृत्तिः । तथाविधप्रवृत्तिहेतवो दोषाः । ते च संग्रहाद्रागद्वेषमोहाः । पूर्वदेहं विहायोत्तरदेहप्राप्तिः प्रेत्य-भावः । प्रवृत्तिसाध्यं फलम् ; तदेव पुरुषेण प्रवृत्तिफलतयोद्दिष्टं प्रयोजनम् । प्रतिकूलवेदनीयं दुःखम् । तत्र सुख-तत्साधनादिकमपि विषसंपृक्तमधुवत् प्रभूतानर्थानुषङ्गित्वात् दुःखमेव मुमुक्षुणा भाव्यमिति तस्यापि प्रतिकूलवेदनीयत्वम् । दुःखान्तरकारणासमानाधिकरणा दुःखनिवृत्तिरपवर्गः । स च स्वाभाविकात्मस्वरूपाविर्भावपूर्वकसमस्तविभूतिगुणविशिष्ट-निरतिशयानन्दब्रह्मानुभवगर्भ इति परमः पुरुषार्थः । तत्पूर्वको वा तादृशब्रह्मानुभवोऽपवर्ग इति । एतदेव च प्रमेयं सं-ग्रहाच्चतुर्धा विभज्य केचिदनुसंदधते—हेयम्, तस्य निवर्तकम्, हानम्, तस्योपायः इति । ये तु कणचरणादयः षट्-सप्तादिरूपेण सर्वान् पदार्थान् विभज्य परीक्षन्ते, ते सामान्यविशेषसमवायादीनां पदार्थान्तरत्वप्रतिक्षेपेण निरस्ताः । ततश्च द्रव्यगुणकर्माणि त्रीण्येवावशिष्यन्ते । तत्रापि कर्मणः संप्रतिपन्नगुणातिरिक्तत्वपक्षेऽपि संस्कारादिगुणावान्तर-

विशेषवत् गुणपक्षकक्षीकारात् द्वौ पदार्थौ । तत्र च गुणशब्दस्यापृथक्सिद्धविशेषणमात्रव्युत्पन्नस्य तथाविधेषु केषुचिद्द्रव्येष्वपि वृत्तेर्द्रव्यगुणरूपेण विभागानौचित्यात् द्रव्यमद्रव्यमित्येव पदार्थविभागमाद्रियामहे, ईदृशस्य तु विचारस्यापवर्गे परम्परयोपयोगः । मुमुक्षूणां प्रधानतमं तु प्रमेयं विशिष्टं ब्रह्मैकमेवेति मन्वानो भगवान् **बादरायणः**—* अथातो ब्रह्मजिज्ञासा इत्युपक्रम्य तदेव सप्रकारं निरूपितवान्; तत्प्रकारतयैवान्यत् प्रमेयम् । केचित्तु देहात्मविवेकक्रमानुसारेण * भोक्ता भोग्यं प्रेरितारं च मत्वा इति श्रुतिप्रक्रियया च त्रिधा तत्त्वं विभज्य चिन्तयन्ति, तत्रापि सप्रकारद्रव्यचिन्तनादद्रव्यचिन्ताऽप्यन्तर्भवति । तत्तुल्यन्यायतया कालचिन्ता च । तदभिप्रायेण कालस्य पदार्थविशेषणतयैव समस्तवस्तुप्रतीत्यन्तर्भावान्न पृथगस्तित्वादयो वक्तव्याः, न च परिहर्तव्याः । * कालोऽस्ति नास्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः—इति जैननिराकरणसमये **भाष्यकारै**रुक्तम् । ततश्च ब्रह्मैकमेव तत्त्वमिति वा चिदचिदीश्वरभेदेन त्रीणि तत्त्वानीति वा पश्यतां न कश्चिद्विशेषः, स्वरूपभेदस्य विशिष्टैक्यस्य चोभयेषामभिमतत्वात् । अत एव—

* प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः । रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥

इत्याद्यनुसारेण चतुर्धा पञ्चधा वा विभज्य चिन्तयतां कार्यविशेषैः सह पञ्चषट्सप्तविंशत्यादिसंख्यां निवेशयतां च पूर्वाविशेष एव । श्रूयते च—

* तं षड्विंशकमित्याहुः सप्तविंशमथापरे । पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदुः ॥ इति ।

प्राप्यं, प्राप्ता, प्राप्त्युपायः, निवर्त्यं, फलं चेति केचित्पञ्चधा प्रमेयं परिसंचक्षते । संबन्धविशेषेण सहान्ये षोढेति ॥

अथायमपरः प्रवृत्त्यर्थः संग्रहोऽनुष्ठानपरिहारान्तरङ्गः; तथा हि—हितमहितं च प्रकर्षेण मेयम् । तत्र लौकिकहिताहितयोरन्वयव्यतिरेकायुर्वेदनीतिशास्त्रादिकं प्रमाणम्; तदपि योगसाधनभूतशरीररक्षणार्थं मुमुक्षुणाऽपि श्रुतिस्मृत्याद्यविरोधेनानुसरणीयम् । अलौकिकहिताहितयोस्तु वेदाः प्रमाणम् । तदुपबृंहणतया स्मृतीतिहासपुराणानि च । यच्च श्रुतिविहितम्, तदखिलमपि यथाधिकारं हितम् । यच्च तन्निषिद्धम्, तदखिलमप्यहितम् । नन्वभिचारादिकर्मणामनर्थहेतूनां क्षुद्रपुरुषार्थसाधनानां च काम्यानां कर्मणां कथं हितत्वम्? उच्यते; अधिकारिविशेषमपेक्ष्य हि सर्वो विधिर्निषेधश्च; यथोक्तम्—* त्रैगुण्यविषया वेदाः इति । यो हि सुखं दुःखनिवृत्तिं चेच्छति तस्य तत्साधनमपेक्षमाणस्य लौकिकेषु साधनेषु प्रवृत्तस्य तेषां निरयादिहेतुभूतानर्थहेतुत्वेन तत्परिहारायानर्थहेतुत्वरहिताः सुखाद्युपायाः प्रतिपाद्यन्ते । एवं काम्यकर्माणि पारलौकिकानि दृष्टसजातीयतदधिकफलार्थतया दृष्टानर्थावहसुखप्रवृत्तिप्रतिबन्धौपयिकत्वात् हितान्येव रागिणाम् । तथा ऐहलौकिकान्यपि चित्रादीनि । कारीर्यादीनि तु जगद्धितान्यपि । अभिचारकर्मणोऽपि हिंसादियुक्तस्यापि स्वरूपतो नानर्थहेतुत्वम्, तदङ्गपशुहिंसादेरग्नीषोमीयादिवद्विधिप्राप्तत्वात्; अपि तु स्वसाध्येनाप्राप्तविषयवधादिना । तदपेक्षया चाभिचारो निषिध्यते । सोऽपि हि क्वचिदवश्यकर्तव्य एव, * षट्स्वनभिचरन् पतेत् इत्यादिदर्शनात् । अतश्च मुमुक्षोरपि रक्षकक्षत्रियाद्यभावे राक्षसाद्यभिभवे चात्मरक्षणार्थमभिचारः कर्तव्य एव, * सर्वत एवात्मानं गोपायेत् इति शास्त्रात्; अन्यथा अहरहरनुष्ठेयस्याप्रयाणादनुवर्तनीयस्य कर्मादेरुच्छेदप्रसङ्गेनोपायानिष्पत्तेर्मोक्षासिद्धिप्रसङ्गात् । वृष्ट्यन्नादिदृष्टार्थानि च सर्वाण्युपासननिष्पत्त्यौपयिकतया तत्तदपेक्षायामनुष्ठेयानि । पारलौकिकानि तु तत्फलाभिसंधिविरहेण कर्मयोगानुष्ठानदशायां नित्यनैमित्तिकैरेकीकृत्य कर्तव्यानि । नैमित्तिकानि हि सर्वाणि प्रसक्तानर्थपरिहारार्थतया सर्वहितान्येव । एवं नित्यानि, उत्तरकर्माधिकारार्थत्वादकरणनिमित्तप्रत्यवायपरिहारार्थत्वाच्च । अतः श्रुतिविहितं स्ववर्णाश्रमोचितं

सर्वं हितमेव । अत एव हि स्मरन्ति—* शास्त्रं हि वत्सलतरं मातापितृसहस्रतः इति । एवं स्थिते प्रवाहानादिसामग्रीचक्रवशादनियतसमयसमागतसकलसैद्धान्तिकसमालम्बनीयसुचरितपरिपाकनिवृत्तप्रतिबन्धपरमपुरुषकटाक्षविशेषसमुन्मिषितसत्त्वसामर्थ्येन करतलामलकवदालोकितहेयोपादेयविभागस्यानाद्यनन्तबहुविधदुर्विषहदुःखानुषङ्गदूषिताल्पास्थिरसांसारिकसुखमयविषमधुविरक्तस्य समस्तदुरितवर्गापवर्गायमाणनित्यनिरतिशयानन्दमुकुन्दचरणारविन्दसेवामकरन्दलम्पटस्य यथाशक्ति वर्णाश्रमोचितनित्यनैमित्तिकनिषिद्धपरिहारसहकृतं दर्शनसमानाकारध्रुवानुस्मृतिरूपं भगवदुपासनं हिततमं विहितम्। तच्च सदक्षरन्यासवैश्वानरमधुभूमदहरादिभेदेन बहुविधं त्रैवर्णिकसर्वाश्रमसाध्यम् । तस्य च महनीयविषयनिरतिशयप्रीतिरूपत्वेन भक्तिशब्दवाच्यत्वम् । अयमेव च परमो योगस्त्वध्यन्तानुविधायिषु सर्वेषु मोक्षशास्त्रेषु प्रतिपाद्यते । यथाऽऽह भगवान् **पराशरः**—

* आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः । तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥ इति ।

स्मरति च भगवान् **शाण्डिल्यः**—

* ईदृशः परमात्माऽयं प्रत्यगात्मा तथेदृशः । तत्संबन्धानुसन्धानमिति योगः प्रकीर्तितः ॥ इति ।

तत्र चिदचिद्विवेकादिमात्रे **सांख्यमु**पकुरुते । यमनियमादिसमाधिपरिकरशोधने **योगः** । इतिकर्तव्यताविशेषे **कर्मकाण्डादयः** । सर्वत्रैव **पञ्चरात्रम्** ।

निषिद्धकाम्यवर्गेषु व्यर्थानावश्यकेषु च । शमादिविधिरन्यत्र प्रवृत्त्या न विरुध्यते ॥

सोऽयमेवंविधः परमयोगाख्यो धर्मः * मय्येव मन आधत्स्व इति गीयते । तदशक्तस्य,

* अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् । अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ॥ इत्यादिना प्रीतिपूर्वककर्माणि विधीयन्ते । यः प्रीतिपूर्वंभगवदसाधारणकर्मण्यपि न समर्थः, तस्य विषयरसवैमुख्यजननाय समस्तवैषयिकसुखशेषित्वेन चिरतरमनुसंहितस्यापि स्वात्मनः सांसारिकसमस्तसुखसमधिकानन्दस्वरूपमालोकयितुमान्तरचक्षुर्विरोधितिमिरपटलपाटनाय ज्ञानकर्मयोगाख्ये द्वे भेषजे । तत्रात्मचिन्तनरूपो ज्ञानयोगस्तदालोकनेऽन्तरङ्गभूतः । तत्राप्यसमर्थस्य तदधिकारसिद्ध्यर्थं कर्मयोगः । तेन तत्र सिद्धाधिकारस्यापि शिष्टतया व्यपदेश्यस्यान्तर्गतात्मज्ञानः कर्मयोग एव कार्यः । अन्यथा कृत्स्नविदोऽप्यस्य ज्ञानयोगाशक्ताकृत्स्नवेदिपुरुषबुद्धिभेदजननमूलमहत्तरदुरितवशेन ज्ञानयोगोऽपि प्रतिबध्येत । तादृशेनैव च कर्मयोगेन सुकरत्वादिगुणवता चिरतरमनुष्ठितेन ज्ञानयोगव्यवधानमन्तरेणाप्यात्मावलोकनं सिध्यति । कर्मयोगेऽप्यसमर्थस्तु विकलमपि कर्मयोगमारभेत;

* नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥

इत्यादिभिर्वैकल्यविच्छेदादिसंभवेऽपि फलाविनाभावादिप्रतिपादनात् । प्रक्रममात्रेणापि प्रसन्नो भगवान् पौष्कल्यमापादयति । सर्वेषु चामीषु पर्वसु तत्तत्सामग्रीचक्रघटनाय तत्तत्फलप्रदानाय च स एव हि शरणमनुसरणीयः । तथा चामनन्ति—* सा काष्ठा सा परा गतिः इति । स एव परमपुरुषो वशीकार्यैकाष्ठा परमप्राप्यश्चेत्यर्थः । * तस्य च वशीकरणं तच्छरणागतिरेव इति **भाष्यम्** । एवं हिततमस्योपासनस्य दिङ्मात्रं दर्शितम् । फलं चापवर्गरूपं प्रागेव लक्षितम् । अन्येषां तु देहविच्छेदमात्रसहस्रयुवतिसंभोगसमस्तालीकविषयविज्ञानसंतानोच्छेदवासनात्यन्तविरामविषयोपरागवैधुर्यनित्योर्ध्वगमनसकललोकमस्तकोपरिनिविष्टसाधारणदेहविशेषानुप्रवेशनिरावरणत्वस्वानन्दानुभवस्वातन्त्र्यलाभशिवसारूप्यशिवापत्ति-

चिच्छक्तिपरिशेषाविद्यानिवृत्त्युपाधिनिवृत्तिसकलवैशेषिकगुणोच्छेदप्रभृतयो निःश्रेयसविकल्पा देहाद्यतिरिक्तात्मसद्भाव-बाह्यार्थपारमार्थिकत्वतत्तदागमाप्रामाण्यब्रह्मनिर्विकारत्वनिर्दोषत्वतज्ज्ञानानन्दनित्यत्वादिसमर्थकैः शारीरकपर्यन्तैः शास्त्रैः प्रतिक्षेप्या इति तत्रतत्र विस्तरो द्रष्टव्यः । इह तु प्रमाणचिन्तायाः परमप्रयोजनं दर्शयितुं प्रमेयस्य संग्रहोक्तिः, सपरिकरप्रमाणमर्यादाप्रतिपादनपरत्वान्न्यायविस्तरशास्त्रस्य, इति ॥

स्वातन्त्र्येण मितं सुखेतरतया यद्भाति जन्तोरिदं सर्वं यस्य विभूतिरित्यवसितं स्वादं व्यनक्ति स्वकम् ।
अन्तःस्वान्तमनन्तनन्दथुनिधिर्मेदोदृशां मादृशामाविर्भावयतु स्वयं स भगवानात्मानमात्मेश्वरः ॥

यत्रोदासत जैमिनिप्रभृतयः श्रुत्यर्थचिन्तापराः यस्यां कन्दलयन्ति मन्दमतयः पारिप्लवान् विप्लवान् ।
विश्वेषामिह वेङ्कटेशविदुषा विश्रान्तये वादिनां प्राची नीतिषु पर्यशोधि सरणिः प्रच्छायनिष्कण्टका ॥

शुद्धिं बिभ्रति मादृशां भणितयश्चूडान्वये केवलं प्रान्ते मिश्रमभाणि नीतिनिपुणैः किं तेष्वमन्तव्यता ।
युक्तं वर्गयुगे विमृश्य सरघापुष्पक्रमं यौक्तिकैरङ्गीकर्तुमशक्यनिह्नवगुणग्रन्थो निबन्धो मम ॥

निरूढनिगमत्रये निखिललोकचिन्तामणौ प्रसक्तिमुपसेदुषि प्रणिदधानभावास्पदे ।
रतिं भजति भावना लयमिवोपयाति द्रुतं रमावसुमतीसहाचरितधर्मणि ब्रह्मणि ॥

॥ इति न्यायपरिशुद्धौ प्रमेयाध्याये द्वितीयमाह्निकम् ॥

॥ समाप्तश्च पञ्चमः प्रमेयाध्यायः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

**॥ न्यायपरिशुद्धिः समाप्ता ॥**

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः।

श्रीमते हयग्रीवाय नमः। श्रीमते रामानुजाय नमः।

श्रीमते निगमान्तमहादेशिकाय नमः।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्तदेशिकविरचितम्

# ॥ न्यायसिद्धाञ्जनम् ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी। वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

## ॥ जडद्रव्यपरिच्छेदः ॥

श्रीमद्वेङ्कटनायकः श्रुतिशिरस्तात्पर्यपर्याप्तधीः लब्धार्थो वरदार्यपादरसिकाद्रामानुजाचार्यतः।
बालानामतिवेलमोहपटलावष्टम्भसीदद्दृशां सम्यक्तत्त्वनिरीक्षणाय तनुते सत्तर्कसिद्धाञ्जनम् ॥ १ ॥

सदसद्भूमिकाभेदैस्तत्तत्सिद्धान्तनाटकैः। उपप्लुतस्य तत्त्वस्य शुद्ध्यर्थोऽयमुपक्रमः ॥ २ ॥

यन्न्यायपरिशुद्ध्यन्ते संग्रहेण प्रदर्शितम्। पुनस्तद्विस्तरेणात्र प्रमेयमभिदध्महे ॥ ३ ॥

**प्रमेयम्** ॥ अशेषचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वम्। तत्र प्रकारप्रकारिणोः प्रकाराणांच मिथोऽत्यन्तभेदेऽपि विशिष्टैक्यादिविवक्षयैकत्वव्यपदेशः, तदितरनिषेधश्च। अन्यथा समस्तप्रमाणसंक्षोभप्रसङ्गात्। इदमेव चेत्थंभूतं सामान्यतः प्रमाविषयतया विशेषतः प्रकर्षेण मेयतया च प्रमेयमुक्तम्।

**द्रव्याद्रव्यविभागः** ॥ तदन्तर्गतं च सर्वं द्रव्याद्रव्यात्मना विभक्तम्। उपादानं द्रव्यम्। अवस्थाश्रय उपादानम्। अतथाभूतमद्रव्यम्। प्रत्यक्षादिसिद्धोऽयं द्रव्याद्रव्यविभागः। न सौगतादिनयेनान्यतरनिह्नवः शक्यः। रूपरूपिप्रभृतीनामबाधितानन्यथासिद्धभेदव्यवहारात्। रूपस्पर्शनियताभ्यां दर्शनस्पर्शनाभ्यां तदाश्रयैकार्थप्रतिसन्धानात्। ग्राह्यसङ्घातभावेऽपि ग्राहकयोर्विषयनियमानतिलङ्घनात्। सङ्घातोपाधेश्चैकस्यान्यस्यासिद्धेः। देशकालयोस्तथाभूतयोस्त्वयाऽनभ्युपगमात्। अभ्युपगमेऽपि तदैक्येन संहतावतिप्रसङ्गात्। एककार्यकारणकत्वादेश्चासिद्धेः। सिद्धावतिप्रसङ्गस्य दुर्वारत्वात्। एकस्मिन्नेव सन्निकर्षविप्रकर्षादिना पटुपटुप्रत्ययात् वेद्यधर्माधिक्यन्यूनतोल्लेखमन्तरेण तयोरसंभवात्। तत्रैवोदयविलयभाजामवस्थानामध्यक्षसिद्धत्वात्। एकक्षणेऽप्येकस्मिन्श्यामत्वयुवत्वाद्यनेकधर्मदर्शनात्। पीतशङ्खभ्रमादौ श्वैत्याद्यनुपलम्भेऽपि शङ्खादिप्रतिसन्धानात्। तस्यैव च तदैव शुक्लतयाऽन्यैरुपलम्भात्। क्षणभङ्गस्य निराकरिष्यमाणत्वात्।

सर्वेष्वपि भ्रमेष्वधिष्ठानभूतस्वरूपग्रहेऽपि विशेषाग्रहावश्यंभावात् । तद्ग्रहेण च भ्रमोपमर्दाङ्गीकारात् । एतेन निर्विशेषैकब्रह्माधिष्ठानविश्वभ्रमवादोऽपि निर्मूलः । नच सहोपलम्भनियमान्नीलतदाधारादेरभेदः; एकसामग्रीवेद्यत्वनियमात्तदुपपत्तेः । सहत्वतन्नियमाभ्यां भेदस्यैव स्थिरीकरणेन व्याघातात् । समस्य च सहोपलम्भनियमस्य शङ्खश्वैत्यादावसिद्धेः । असमस्यापि गन्धादौ । भास्वराध्वान्ताभास्वररूपाभ्यामनैकान्तत्वाच्च । नच ग्राहकभेदाद् ग्राह्यभेद इव; अन्योन्याश्रयणात् । चक्षुःश्रोत्रादिभेदस्य रूपादिग्राह्यभेदोपाधित्वात् । ग्राहकभेदेऽपि च ग्राह्यैक्यप्रतीतेरुदाहृतत्वात्; ग्राहकैक्येऽपि नीलपीतादिग्राह्यभेददर्शनात्, अन्यत्र च तदविशेषात् । अत एव स्पर्शाद्येकद्वित्रिचतुःस्वभाववाय्वाद्यणुचतुष्कवादो निरस्तः । एवं च वैशिष्ट्यमपि तात्त्विकम्, विकल्पश्चाबाधितः प्रमाणमिति सिद्धम् । सम्बन्धानुपपत्त्यादिप्रलापस्तु तर्काङ्गपञ्चकान्यतमहान्यादिविध्वस्तः ।

किञ्च— परश्शतपरिक्षोदात्परस्तादपि वादिभिः । उपलम्भबले स्थेयं तदादौ किं न गृह्यते ॥

इदमित्थन्त्वयोः किञ्चिद्यदि केनापि भज्यते । इदं नास्तीति वाचोऽपि भङ्गोऽन्यतरभङ्गतः ॥

विसंवादादिसाध्येषु विकल्पत्वादिहेतवः । व्याकुलाः पक्षहेत्वादिबाधाबाधविकल्पतः ॥

अतः सिद्धोऽयं तात्त्विकद्रव्याद्रव्यविभागः ॥

**द्रव्यस्थिरत्वनिरूपणम्** ॥ तानि च द्रव्याणि स्थिराण्येव । क्षणभङ्गे प्रमाणाभावात् । स हि प्रत्यक्षतः? अनुमानतो वा? नाद्यः, प्रत्यक्षस्य विपरीतरूपत्वात् । प्रत्यभिज्ञाप्रत्यक्षेण स्थिरत्वस्यैव सिद्धेः । भ्रान्तिरियमिति चेन्न, कारणदोषबाधकप्रत्ययाभावे तत्त्वायोगात् । यौक्तिकबाधेन दोषोऽप्युन्नीयत इति चेत्, केयं युक्तिः? करणाकरणाभ्यां सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मेणाध्यासप्रसङ्गात्मिका, समर्थश्चेत्कुर्यादित्यकुर्वद्दशायामपि करणप्रसङ्गात्मिका वा इति चेन्न; सहकारिसन्निधौ कुर्वत्स्वभावत्वस्य, सहकार्यभावप्रयुक्तकार्याभाववत्त्वादेर्वा सामर्थ्यपदार्थत्वात् । ततश्च समर्थस्यैव करणाकरणयोः सहकारिसन्निध्यसन्निधिप्रयुक्तत्वादेकत्र समावेशः । ननु तावप्येकस्य कथमुपपद्येते इति चेन्न, तत्तत्सामग्रीसन्तानप्रतिनियतकालतया तदुपपत्तेः । तत्सामग्रीविशेषसंबन्धासंबन्धयोरपि चोद्यमपरिहार्यमिति चेन्न; भिन्नकालभाविसामग्रीविशेषादेव परिहृतत्वात् । तज्जातीयस्यैव बीजक्षणस्य समर्थबीजारम्भे त्वयाऽप्येतदपरिहार्यम् । तत्पूर्वक्षणस्वभावादित्यपि तत एव दत्तोत्तरम् । अन्यथा अनुपलभ्यमानानन्तक्षणतत्स्वभावकल्पनागौरवप्रसङ्गात् । अन्वयव्यतिरेकवतामपि सहकारिणामकारणत्वे दुर्निर्वहमुपादानस्यापि कारणत्वम् । यदि च कालभेदभिन्नयोरेव करणाकरणयोः सहकारिसन्निध्यसन्निध्योर्वा वस्तुभेदकत्वम्; देशभेदभिन्नयोरपि करणाकरणयोः सामर्थ्यासामर्थ्ययोः सहकारिसन्निध्यसन्निध्योर्वा तयोर्भेदकत्वप्रसङ्गेन क्षणेऽपि क्षुद्यमानेऽनवधिकभेदप्रसङ्गेन क्वचिदेकं न सिध्येदिति शून्यवादप्रसङ्गः । देशभेदे स्वसन्निध्यसन्निधिभ्यामेव तदुपपत्तिरिति चेन्न; तयोरपि तद्वदेव विरुद्धयोर्भेदकत्वप्रसङ्गात् । परस्परविरुद्धपूर्वापरकालसंबन्ध एव एकस्य कथमिति चेन्न; स्वापेक्षया पूर्वापरत्वस्यासिद्धेः । न हि स्वप्रागभावप्रध्वंसावच्छिन्नकालसंबन्धित्वं वस्तुनो ब्रूमः । अन्यापेक्षया पूर्वापरयोरपि कालयोरेतदपेक्षया स्वकालत्वे विरोधाभावः क्षणेऽपि स्वीकार्यः । यथा परमाणुद्वयापेक्षया पूर्वाप[ र ]रीभूतस्यापि तन्मध्यदेशस्य परमाण्वन्तरं प्रति स्वदेशतया न तस्य तत्संबन्धविरोधः । अन्यथा पूर्ववत्क्षणोऽपि क्षुण्णः । तथाऽपि पूर्वापरकालयोस्तदुपाध्योर्वा विरुद्धयोस्तेजस्तमसोरिव कथमेकत्र समावेशः? अविरोधे तु यौगपद्यप्रसङ्ग इति चेन्न । यौगपद्ये हि तयोर्विरोधः न त्वेकवस्तुसंब [न्धादावपि] न्धे । अन्यथा एक-

ज्ञानसंबन्धेऽपि विरोधप्रसङ्गेन प्रत्यभिज्ञास्वरूपस्यानुत्पत्तिप्रसङ्गात् । यदि पुनः कालयोः स्वरूपभेदेन तादात्म्यविरोधो विवक्षितः ; तर्हि रूपरसयोरिव नैकवस्तुसंबन्धं प्रतिभन्त्स्यति । न चैकस्यानेकसंबन्धः क्वचिदपि नास्तीति वाच्यम् । क्षणिकर्निर्धर्मकपरमाणावपि पुञ्जदशायामनेकनैरन्तर्यादेरभ्युपेतत्वादिति । एतेन वर्तमानत्वप्रत्ययात्क्षणभङ्गसिद्धिरिति वदन्तोऽपि निरस्ताः । न हि तेन पूर्वापरकालसंबन्धाभावो गृह्यते । न चाक्षिप्यते । तद्विरोध्यवर्तमानत्वमात्रनिषेधात् । तस्य च तदानीं प्रागभावप्रध्वंसाभावनिषेधात्मकत्वेन पूर्वापरकालसंबन्धाविरोधित्वात् । प्रत्यक्षेणेन्द्रियसंबन्धक्षणो गृहीतः ; क्षणान्तरं तु तस्य कुतः सिद्धमिति चेन्न ; प्रत्यभिज्ञानस्य तदबाधस्य चोक्तत्वात् । प्रत्यभिज्ञात्वादेव दीपप्रत्यभिज्ञावत् सर्वाऽपि प्रत्यभिज्ञा भ्रान्तिरिति चेत् पूर्वोक्तेनैव सोपाधिकत्वात् । एतदनुमानमात्रबाध्यत्वे प्रत्ययत्वादेव सर्वः प्रत्ययो भ्रान्तिरिति **माध्यमिकमत**समुत्थानस्य दुष्परिहरत्वात् । क्षणभङ्गपक्षे भ्रान्तिरूपाऽपि प्रत्यभिज्ञा स्मृतिमात्रमपि नोपपद्यत इत्यात्मनि वक्ष्यामः । ततश्च व्याप्तिप्रतिसन्धानाद्यनुपपत्तेः अनुमानमात्रमेव निर्मूलमिति कुतः क्षणभङ्गानुमानम् ? यत्सत् तत्क्षणिकम् , यथा घटः, सन्तश्चामी भावा इत्यपि न ; भावशब्देन विश्वपक्षीकारे पक्षहेतुदृष्टान्तभेदासिद्धिः । घटव्यतिरिक्तपक्षीकारेऽपि घटस्य क्षणिकत्वासंप्रतिपत्तेर्दृष्टान्तत्वायोगः, विरुद्धधर्माध्यासस्य च परिहृतत्वात् । अत एव प्रदीपादिदृष्टान्तोऽपि प्रत्युक्तः । तेषामपि त्रिचतुरक्षणस्थायित्वाभ्युपगमात् । अस्तु तर्हि क्षणोपाधिर्दृष्टान्तः । स हि न स्थिरः, तथात्वे क्षणावच्छेदकत्वायोगादिति चेन्न, स्थिरै रेव परस्परावच्छिन्नारम्भावसानैस्तदवच्छेदोपपत्तेः । परस्परावच्छेदश्च युगपद्विशिष्टबुद्धिविषयतया सिद्धः । यथा दीर्घयोरेव मानदण्डयोर्विरुद्धदिक्प्रसृतयोर्मध्ये किञ्चित्संयुक्तयोः परस्परसंयोगावच्छिन्नांशेन अल्पतरदेशावच्छेदः [कर्तुं] शक्यः । एवं कालेऽपीति न कश्चिद्दोषः । मा भूदन्वयः । यदक्षणिकं तदसत् ; यथा शशविषाणमिति व्यतिरेकः स्यात् । न स्यात् । त्वदभिमतक्षणिकत्वासिद्धेरेव तन्निरूपिताक्षणिकत्वासिद्धेस्तस्य व्याप्यत्वग्रहणायोगात् । चिरकालस्थायित्वविवक्षायां तु निःस्वभावे शशशृङ्गे तदयोगः । अथ शशशृङ्गाभावो दृष्टान्तः ; स तर्हि सन्नेव ; प्रामाणिकत्वात् । भावेतरत्वलक्षणमसत्त्वमस्तीति चेन्न ; भावान्तराभाववादे तस्याप्यसिद्धेः । अन्यत्राप्यभावस्येव भावस्यापि सुवचत्वात् । प्रत्यक्षत्वादिविरोधपरिहारकुसृष्टेश्चाविशिष्टत्वादिति ॥

केचित्तु नित्यमपि किञ्चित्तत्वं बुद्धोपदिष्टमिति सत्त्वाख्यसाधनमागमबाधितं कृत्वा ध्रुवभावित्वमेव हेतुमभिमन्यन्ते । तथा हि—यद्ध्रुवभावि न तत् हेतुसापेक्षम् । अन्यथा ध्रुवभावित्वविरोधात् । अतः कार्याणां ध्रुवभाविनः प्रध्वंसस्याहेतुकत्वसिद्धेर्विलम्बायोगादुदीयमानमेव वस्तु तेन ग्रस्यत इति । तत्र ध्रुवभावित्वशब्देन तत्समकालभावित्वतदनन्तरभावित्वनियमतन्मात्रजन्यत्वतदेकसामग्रीजन्यत्वाहेतुकत्वाद्यर्थविवक्षायां यथायथमसिद्धिव्याघातसाध्याविशेषादिदोषादेष्यत्त्वनियममात्रमवशिष्यते । तच्च भवतामपि विसभागसन्तानारम्भककपालक्षणतदविनाभूतप्रतिसङ्ख्यानिरोधादिनाऽनैकान्तिकमिति । अन्यथा सर्वेषामप्युत्तरक्षणानामेष्यत्त्वाविशेषात्प्रथमक्षण एव सर्वक्षणोत्पत्तौ विश्वविनिवृत्तिप्रसङ्गः । आस्थानिवृत्त्यर्थं क्षणिकत्वमुपदेष्टव्यमिति चेत् , अहो ! महाधार्मिकस्यानलीकवादिनो महानयमधर्मः प्रसज्येत । सूक्ष्मधियस्तत्रैवास्थानिवृत्तिप्रसङ्गाच्च । विश्वानित्यतामात्रोपदेशादपि च तत्सिद्धेः । अन्यथा शून्योपदेशस्यैव अवश्यकर्तव्यत्वप्रसङ्गादिति । प्रत्यनुमानानि च—विगीता प्रत्यभिज्ञा स्वविषये प्रमा, अबाधितबुद्धित्वात् , स्वलक्षणबुद्धिवत् । सा हि स्वविषये प्रमैवास्माकम् , वैभाषिकस्यापि । यत्सत् न तत्क्षणिकम् ; यथा संप्रतिपन्नं नित्यम् । सन्तश्चामी भावा इति । यत्प्रतीयते तदक्षणिकम् , यथा शशशृङ्गमिति भवद्व्यवहारेणापि प्रसज्यते । प्रध्वंसः सहेतुकः पूर्वावधिमत्त्वात् पटवदित्यादीनि च स्वयमुन्नेयानि । एवं द्रव्यस्य स्थिरत्वं सिद्धम् ॥

**द्रव्यविभागप्रकारः** ॥ तच्च—

द्वेधा जडाजडतया प्रत्यक्तदितरतयाऽपि वा द्रव्यम् । षोढा त्रिगुणानेहोजीवेश्वरभोगभूतिमतिभेदात् ॥
धीकालभोगभूतीरविवक्षित्वा गुणादिरूपत्वात् । देहात्मेशभिदार्थं त्रेधा तत्त्वं विविञ्चते केचित् ॥

परत एव भासमानं **जडम्** । तदन्यद**जडम्** । स्वस्मै भासमानं **प्रत्यक्** । परस्मै भासमानं **परागि**ति व्यवहरन्ति । तेनाजडाया अपि मतेः पराक्त्वं सिद्धम् । यत्तु **नीतिमालायां नारायणार्यै**रुक्तम्—*ज्ञानस्य तु पराक्त्वाभावमात्रमेव, न तु प्रत्यक्त्वमिति ; एतदपि पूर्वपक्षप्रोक्तदृग्विषयत्वमात्राधीनसिद्धि[क]त्वरूपेदन्त्वाभावाभ्युपगमादिति मन्तव्यम् । एवं हि तत्र पूर्वपक्षितम्—*तस्य नीलादिवदिदमित्यनवभासात्पराक्त्वाभावेन प्रत्यक्त्वं च विद्यते इति । तत्र रजोगुणकत्वतमोगुणकत्वमहदाद्यवस्थार्हत्वानि त्रिगुणलक्षणानि । अध्यक्षादिभिर्यथासंभवं नानावस्थस्य तस्य सिद्धेः । तच्च अधःप्रभृतिदेशेष्वनन्तम् । ऊर्ध्वं हि भोगविभूत्यवच्छिन्नम् । नित्यविभूतेस्तमःपरत्वश्रुतेः ; त्रिगुणस्य च *तदनन्तमसङ्ख्यातप्रमाणं चेति वचनात् । तच्च विचित्रसृष्ट्युपकरणत्वान्**माया** । विकारान्प्रकरोतीति **प्रकृतिः** । विद्याविरोधादिभिरविद्यादिश्चोच्यते । समविषमविकारसन्तानांश्च कालभागभेदाभ्यामारभते । इदं च परिस्पन्दादियोग्यभूतेन्द्रियपरिणामदशायामपि निश्छिद्रमेव । तत एव हि स्वकार्यव्यापकत्वम् । द्वयोरन्यतरस्य वा स्पर्शशून्यतया न सप्रतिघत्वविरोधः । वाय्वादिभूतचतुष्टयं हि स्पर्शवदस्पर्शेनाकाशेन व्याप्तम् । इदमेव त्रिगुणं पूर्वावस्थोपमर्दकावस्थाभेदात् **चतुर्विंशतितत्त्वानि**—मूलप्रकृतिर्महानहङ्कार इन्द्रियाण्येकादश पञ्चतन्मात्राणि पञ्चभूतानि चेति ।

नन्वेकस्य कथं बहुधावस्थितविश्वात्मना परिणामः ? एकस्यैव मृत्पिण्डस्य घटशरावादिरूपेणेवेति चेन्न ; निरवयवे तथाऽनुपपत्तेः । सावयवत्वे वा बहूनामेव बहुधा परिणामप्रसङ्गात् । तथा च गतमेकोपादानवादेन । एकमेव सदनेकभागात्मकमव्यक्ताख्यमुपादानमिति चेन्न ; विकल्पासहत्वात् । तथाहि—किमेकत्वमनेकत्वं च एकाश्रयमिति मन्यसे ? उत एकत्वमंशिनि अंशेषु चानेकत्वमिति ? यद्वा परिषद्वनसेनादिष्विव अनेकेषामेव सतामेकत्वमेकोपाधिसंबन्धायत्तमिति ? न प्रथमः ; व्याघातात् । अन्यथा भेदाभेदवादाय कथं कुप्येत् ? न द्वितीयः ; अवयव्यङ्गीकारप्रसङ्गात् । तदभ्युपगमेऽपि तस्मादेकस्माज्जगदुत्पत्त्यभावात् । तदंशा एव हि ततो भिन्ना बहुधा परिणमन्ति । ततो वरमनारूढनिरर्थकैकद्रव्यैः परमाणुभिरेव जगद्व्यारम्भः । अत एव न तृतीयः ; पृथक्पृथगारम्भकत्वे समुदायनिर्देशस्य निरर्थकत्वात् । वास्तविकस्य च एकत्वस्य वनादिष्वप्यसंभवात् । औपाधिकैक्यव्यपदेशस्य च वैशेषिकाद्यभिमतानन्तपरमाणूपादानवादेऽप्यविशेषात् । अतः एकमनेकधा परिणमतीति कल्पना विवर्तवादस्य प्राग्रूपमिति । अत्र ब्रूमः—

प्रदेशवर्तिसंयोगाद्याधाराणुविभुक्रमात् । निरंशस्यापि घटते प्रादेशिकविकारिता ॥

न तावत्सर्वमद्रव्यं स्वाश्रयव्यापि ; संयोगादेरन्यथोपलम्भात् । नापि सर्वमाश्रयैकदेशवर्ति ; स्वाभावसामानाधिकरण्यरहितधर्मोपलब्धेः ।

अतो विभुष्वणुषु च ग्राह्याः प्रादेशिका गुणाः । तथा चाभ्युपगम्यन्ते सर्वैर्वैशेषिकादिभिः ॥

अत्र यद्यपि विभुषु निमित्तभूतमूर्तद्रव्यसंयोगावच्छिन्ने प्रदेशे गुणान्तरोत्पत्तिरिष्यते ; तथाऽपि मूर्तद्रव्यसंयोगस्यैव प्रादेशिकत्वं कुतः सिद्धम् ? न हि विभुषु स्वतः प्रदेश[भेद]मिच्छथ । न च संयोगोपाधिके प्रदेशे संयोगस्योत्पत्तिः ; परस्पराश्रयप्रसङ्गात् । संयोगविशेषात्प्रदेशभेदसिद्धिः ; सिद्धे च तस्मिन्प्रादेशिकसंयोगोत्पत्तिरिति । अतएव मूर्तैर्घटादिभिर्विभुषु

स्वपरिमाणानुरूपप्रदेशावच्छेद इत्यपि वार्तम् । अणुद्वयसंयोगे तदनुपपत्तेश्च । अतः सामग्रीविशेषादुत्पद्यमान एव संयोगो निरवयवेऽपि परमाणौ परममहति वा वस्तुनि स्वाभावसामानाधिकरण्यमनुभवन् स्वाभावाभावात्मकस्वानुबन्धेन यथोपलम्भप्रतिनियतप्रदेशभेदधियमुपदधातीति प्रमाणबलादभ्युपगन्तव्यम् । एवमिहापि निरवयवेऽपि त्रिगुणे परमेश्वर-सङ्कल्पविशेषपर्यवसितैः सामग्रीभेदैः स्वाभाविकसंविभक्ताश्रयाः प्रतिनियतप्रदेशाः परिणतिभेदाः प्रादुष्षन्तीति । तत्र स्पर्शादिलक्षणप्रादेशिकपरिणतिदशायां छेदनभेदनपरिस्पन्दनादीनामपि सिद्धिरिति किं नोपपद्यते? स्पन्दस्पर्शादि-भेदाश्रयांशानामपि भेदाः त एव विलक्षणधर्माः । यथा निर्भिदाकाशवादे प्रदेशानां संयोगविशेषास्तीव्रतरशब्दादिधर्मा एव वा भेदाः; तद्वदत्रापि । नन्वेवमप्यनतिलङ्घनीयैव भेदाभेदवागुरेति चेन्न; ईदृशभेदाभेदप्रसङ्गस्य **वैनाशिक**मतेऽपि अविवादात्; अविरोधाच्च । तस्य च अतत्त्ववादे हि विरोधं ब्रूमः; न पुनस्तथाभूतस्यातथापरिणामे । अवस्थारूपयो-रेकत्वबहुत्वयोः कालभेदेन परिहारात् । तथा च **भाष्यम्**—* कपालत्वचूर्णत्वपिण्डत्वावस्थाप्रहाणेन घटत्वावस्थावदे-कत्वावस्थाप्रहाणेन बहुत्वावस्था; तत्प्रहाणेन एकत्वावस्थेति न कश्चिद्विरोधः इति । भवतु अवस्थारूपस्यैकत्वस्य पूर्वापर-भाविना बहुत्वेनाविरोधः । तद्द्रव्यस्वरूपैक्येन तु विरोधः स्यात् । न स्यात्; तद्द्रव्यस्य हि अतद्द्रव्यत्वं विरुद्धम् । न तु तस्यैव सतोऽनेकधर्मयोगोपाधिकं बहुत्वम् । स्मरति च भगवान्**पराशरः**—

* परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥ इति ॥

अस्तु वा स्वतः सांशत्वं पिण्डवदव्यक्तस्य । तथाऽपि पिण्डवदेव न भेदाभेदावयविवादप्रसङ्गः । नन्वेवं यथांशं स्वकार्यारम्भकत्वे किमेकीभावावस्थाकल्पनेन इति चेन्न; यदि वयं **कापिल**वत्कल्पयेमहि; तदैवमुपालभ्येमहि । कारण-श्रुतिसमधिगता तु एकत्वावस्था न कल्पनागौरवानुयोगविषयः । नच नैरर्थक्यम्; श्रुतिबाधपरिहाराय प्रयोजनकल्पनोप-पत्तेः । न चैकत्वमौपाधिकत्वादवास्तविकम्; संपिण्डितानामेकारम्भादेकत्वारम्भस्यैव लघुत्वात् । अवयविभङ्गे चैतत् स्थाप-यिष्यामः । न चैवमपि पराभिमतपरमाणुपुञ्जमात्रत्वमाशङ्कनीयम्; गन्धरसरूपस्पर्शादिरहितपरस्पराप्रतिघातकसत्त्वरज-स्तमोरूपगुणत्रयाश्रयपरस्परसुश्लिष्टपञ्चभूतसूक्ष्मद्रव्यरूपत्वेन श्रुत्यादिसिद्धे पराभिमतपरमाणुस्वभावगन्धाभावेनार्थान्तरत्व-सिद्धेः । यत्तु औपाधिकभेदाभेदवादिनं प्रति **भाष्ये** ब्रह्मण उपाधिसंसर्गादपि छेदनाद्यनुपपत्तिकथनम्, तद्ब्रह्मस्वरूपस्य निष्कलत्वाच्छेद्यत्वादिवचनबलमवलम्ब्य । अन्यथा ब्रह्मस्वरूप एव सविकारत्वापत्तौ निर्विकारत्वश्रुतेरनवकाशत्वप्रसङ्गात् । तत्र [च] सर्वज्ञत्वात्सर्वांशगतसुखदुःखादिप्रतिसन्धानप्रसङ्गो दुष्परिहरः । इह तु अंशभेदप्रतिनियतविकारेषु न स्वभाव-सङ्कर इति । एतेन परमाणुकारणवादो निरस्तः । जालालोकविलोकनीयत्रसरेणुशब्दवाच्यद्रव्यातिरिक्ताप्रत्यक्षाणुकल्पने प्रमाणाभावात् । तेष्वेव मात्रया भेदमवलम्ब्य परमाणुद्व्यणुकत्र्यणुकादिव्यपदेशः प्रमाणग्रन्थेषु । तेषामेव रूपाद्यनुद्भव-दशायां गृह्यमाणगन्धाश्रयगन्धवाहानीतसूक्ष्मद्रव्यवदचाक्षुषत्वादिसंभवात्परमाणोरप्रत्यक्षत्वव्यवहारः क्वचित्कृतोऽपि न वि-रुध्यते । न च पवनानीतगन्धाश्रयद्रव्येषु परमाणुत्वं भवतामपीष्टम्; परमाणूनां प्रत्यक्षगुणाश्रयत्वानभ्युपगमात् । अतः प्रत्यक्षादागमाद्वा न भवदभिमतपरमाणुसिद्धिः । अनुमानानि तु पश्यामः । अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तम्; परि-माणतारतम्यरूपत्वात् महत्परिमाणतारतम्यवदिति चेन्न; तारतम्यरूपत्वादित्येतावताऽपि व्यभिचाराभावेन परिमाणविशे-षणस्य व्यर्थत्वात् । पारिमाण्डल्यविवक्षया अणुशब्दप्रयोगे अन्योन्याश्रयणात् । महत्त्वापकर्षतारतम्यस्य त्रसरेणावेव पर्यवसितत्वाभ्युपगमात् । सामान्यतः परिमाणापकर्षतारतम्यविवक्षया प्रयोगेऽपि तद्विश्रान्तेरपि दृश्यमान एवोपपत्तेः ।

एवमवयवापकर्षतारतम्यविश्रान्तेरपि । अस्तु वा तस्याविश्रान्तिः; तथाऽपि आधिक्यन्यूनताभ्यां प्रमाणसिद्धाभ्यां सर्षपमहीधरादिपरिमाणाविशेषप्रसङ्गः परिहृतः । अनन्तत्वाविशेषेऽपि परापरजातीयेषु क्षणदिवसपक्षमाससंवत्सरचतुर्युगकल्पादिषु च आधिक्यन्यूनतयोर्भवद्भिरप्यभ्युपगतत्वात् । विप्रतिपन्नं कार्यद्रव्यारब्धम्; महत्त्वे सति चाक्षुषत्वात्, चाक्षुषद्रव्यत्वात् इत्यादीनां विपक्षे बाधकाभावादप्रयोजकत्वम् । द्रव्यचाक्षुषताप्रकर्षो महत्त्वावयवसङ्ख्याप्रकर्षानुविधायी दृष्टस्तद्धेतुक एव अतस्तदभावे चाक्षुषत्वं न स्यादिति चेन्न; यथोपलम्भं योग्यतास्वीकारात्, अन्यथा महावयवारब्धत्वस्यापि व्याप्तावनुप्रवेशप्रसङ्गात् । लाघवं चास्मन्मते । वायवीयतैजसाप्यपार्थिवत्रसरेण्वादेरपि पूर्वपूर्वभूतात्मककार्यद्रव्यारब्धत्वादस्मन्मतेन सिद्धसाधनत्वं च । कार्यावयवित्वसाधनेऽपि चाक्षुषतया अस्मदुपगतेन कालेनानैकान्त्यं दुष्परिहरम् । परिदृश्यमानमेव परमाणुमिच्छतां महत्त्वविशेषणमसिद्धं च । चाक्षुषद्रव्यत्वादेव महत्त्वसाधनमपि पूर्ववद्दूष्यम् । पृथिवीत्वं नित्यसमवेतवृत्ति; [पटवृत्ति] घटपटजातित्वात् सत्तावत् इत्यादिकुटिलानुमानान्यपि पूर्ववद्विपक्षे बाधकाभावात्, विषयनियमराहित्येनातिप्रसञ्जकत्वात्, पृथिवीत्वं नित्यवृत्ति न भवति; पृथिवीमात्रजातित्वाद्घटत्ववदित्यादिभिस्तादृशैरनुमानैः प्रतिपक्षयितुं शक्यत्वात्, अभिमतविशेषपर्यवसानासिद्धेश्च निरूपका नानुमानेषु गणयन्ति । घटादीनां सर्वेषां नित्येश्वराश्रितत्वाभ्युपगमादतिरिक्तसमवायानभ्युपगमाच्च सिद्धसाधनत्वं च । नित्यवृत्तीतिसाधनेऽपि घटादिरूपेण परिणतस्यापि त्रिगुणद्रव्यस्य स्वरूपतो नित्यत्वाभ्युपगमात् स एव दोषः ॥

एवमारम्भकाणामणूनां कृत्स्नैकदेशसंयोगविकल्पेन अधिकपरिमाणद्रव्यानारम्भकत्वसभागत्वादिचोद्यं परमाणुदूषकैः सर्वैरपि क्रियते । **भाष्यकारैश्च** * महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् इत्यस्मिन्नधिकरणे तदेव चोद्यं कृतम् । तदेतन्**माध्यमिकाना**मेवोपपद्यते; न त्वन्येषाम् । तथाहि—**सौत्रान्तिका**द्यैरपि पुञ्जदशायां परमाणूनां संयोगानभ्युपगमेऽपि परस्परमावृतत्वानावृतत्वादिकं दिगवच्छेदभेदेन स्वीकार्यम् । ज्ञानमात्रवादिनोऽपि ज्ञानस्यैकस्यानेकज्ञेयाकारसंबन्धे कृत्स्नैकदेशविकल्पस्तदवस्थ एव । ज्ञेयमिथ्यात्वं तु न तत्परिहारः; मिथ्याभूतेऽपि उल्लेखावश्यंभावात् । यस्तु प्रत्यक्षाण्येव सूक्ष्मद्रव्याणि निर्भागाण्यभ्युपगच्छति; तस्यापि विभूनां निरवयवानां संयोगे तदेव चोद्यं स्थितम् । यस्तु विभुद्रव्यमपि नैच्छत्, तस्यापि सामान्ये स्यात् । तस्याप्यनभ्युपगमे संयोगसमवायादावनेकनिष्ठे स्यात् । न हि द्रव्य एवेदं चोद्यमिति नियमोऽस्ति । द्रव्याणामेव भागवत्त्वयोग्यतेति चेत्; तर्हि अणुविभुव्यतिरिक्तद्रव्याणामित्यपि ग्राह्यम् । सत्यम्; कथं तर्हि **भाष्यम्**? दृश्यमानातिरिक्तकल्पना [निरासा] भिप्रायम् । निर्भागतया उपलभ्यमानस्यापि यः सावयवतां कल्पयति, तस्य सर्वं द्रव्यं द्रव्यारम्भकमवयवतः संयुज्यैवारभते; दिगवच्छेदभेदोऽप्यवयवत एवेति व्याप्तिः स्यात्, ततः पराभिमतप्रतिष्ठिता[ एव ]सिद्धिरिति प्रत्यक्षागमसिद्धाण्वीश्वरादिषु यथाप्रमाणमङ्गीकार्यम् । अत एव * कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा इति सूत्रे * श्रुतेस्तु शब्दमूलत्वात् इत्यादि च परिहारसूत्रम् । अस्तु तर्हि प्रत्यक्षसिद्धैरेव सूक्ष्मद्रव्यैर्जगदारम्भः । मैवम्; स्वतन्त्रारम्भे शास्त्रविरोधात् । परतन्त्रारम्भाभ्युपगमे च यथागमं प्रकृतेरपि स्वीकार्यत्वात् । भूतचतुष्टयपूर्वभाविनश्च प्रपञ्चस्य तदारम्भणीयत्वविरोधात् । महाभूतचतुष्टयावयवानामाकाशशब्देनाभिधानमिति हास्यम् । भूतानामन्योन्योपादानोपादेयत्वविशिष्टसृष्टिक्रमप्रक्रियाविरोधश्च । भूतचतुष्टयातिरिक्तं नास्तीति चेन्न; आगमविरोधात् । तथा त्रसरेणूनामेव गन्धादिरहितावस्थाऽस्त्विति स्वीकारे तद्वदविभागापत्तिः स्वीकार्येति सैव मूलप्रकृतिरिति सिद्धम् । सा च समत्रैगुण्या मूलप्रकृतिः । तस्यामपि मात्रया भेदमवलम्ब्य अव्यक्ताक्षरविभक्ताविभक्त-

तमोरूपावस्थाचतुष्टयमामनन्ति । उक्तं च **न्यायसुदर्शने वरदनारायणभट्टारकैः**—* द्विविधाः स्मृतिकाराः—केचिदव्यक्तकारणवादिनः, केचित् तमःकारणवादिनः । अव्यक्तस्यैव सूक्ष्मावस्थाभेदोऽक्षरं तमश्च नातीव भेदः इत्यव्यक्ते पर्यवस्यतामभिप्रायः । तमपि भेदमुररीकृत्य तमसि पर्यवस्यताम् । तस्मादुभयेषामविरोधः इति । यत्तु **भाष्यादिषु** अव्यक्तसहपठिताक्षरशब्दस्य चेतनविषयतया बहुश उपादानम्; तत् परव्याख्यानप्रकारमनुरुध्य वा, स्वरूपतो निर्विकारे जावे सृज्यत्ववचनाच्चिद्रूपविकारवत्त्वेऽपि यथाऽक्षरशब्दप्रवृत्तिः, तथा परब्रह्मेतरविषयस्याक्षरशब्दस्याचिदवस्थाविशेषेऽपि शक्तिकल्पनोपपद्यत इति प्रतिपादयितुं वा, क्वचित्क्षरे प्रकृतिविशेषे अक्षरशब्दप्रयोगस्य मुख्यत्वायोगात् परब्रह्मरूपाक्षरसंबन्धेन लक्षणायां प्रयोजनाभावात्, जीवसंबन्धेनाजहल्लक्षणायां लयविशेषादिप्रतिपादनौचित्यात्, * उभावेतौ लीयेते परमात्मनि इत्यादिना द्वयोरपि लयाभिधानाच्च अत्राजहल्लक्षणैव युक्तेत्यभिप्रायेण वेति न कश्चिद्विरोधः इति ॥

**महदहङ्कारौ** ॥ अव्यक्ताहङ्कारावस्थाव्यवहितोत्तरपूर्वावस्थाविशिष्टं त्रिगुणं महान् । तच्छब्दवाच्यत्वमेव वा तल्लक्षणम् । एवमहङ्कारादिष्वपि भाव्यम् । अध्यवसायरूपवृत्तिर्महानिति साङ्ख्याः । यथाऽऽहुः * अध्यवसायो बुद्धिः इति । तदसत्; अध्यवसायस्यात्मधर्मत्वात् । यदि परं तन्निमित्तत्वमात्रं महतः; तावतैव बुद्ध्यध्यवसायादिप्रयोगविषयत्वम्; न च तन्निमित्तत्वमात्रं लक्षणम्; अतिव्याप्तेः, अवान्तरविशेषस्याप्यनवधारणात् । अवधारयतां तु तदपि लक्षणम् । एवं धर्माधर्मादिकारणत्वादिकमपि लक्षणं निरसनीयम् । स त्रिधा सात्त्विको राजसस्तामसश्चेति । तत्र तत्तद्गुणोन्मेषवशादंशभेदात्तत्तद्व्यपदेशः । इन्द्रियाव्यवहितपूर्वावस्थाविशिष्टं त्रिगुणमहङ्कारः । अत्रापि पूर्ववत् * अभिमानोऽहङ्कार इति साङ्ख्यलक्षणं दूषणीयम् । स च अनात्मनि देहे अहंभावकरणहेतुत्वमात्रादहङ्कारशब्दवाच्यः । न त्वहमर्थत्वात् । प्रतीच आत्मन एव तत्त्वात् । न चैवं त्याज्यत्ववचनविरोधः; अहङ्कार[कार्य]स्य उत्कृष्टजनावमानहेतोर्गर्वापरपर्यायस्याभिमानस्य तथोक्तेः । सोऽपि पूर्ववत् त्रिविधः । तत्र सात्त्विकादिन्द्रियाणि । तामसात् शब्दतन्मात्रम् । राजसः उभयानुग्राहकः । राजसतामसयोरपीन्द्रियाव्यवहितपूर्वभावित्वमात्रं सिद्धमिति नाव्याप्तिः । त्रयाणां प्रत्येकप्रत्येकलक्षणमपि यथास्वं कार्यकारणप्रकाराः । यत्तूक्तं **भोजराजेन**—

* स्यात्त्रिविधोऽहङ्कारो जीवनसंरम्भगर्वरूपोऽयम् । संभेदादस्य सतो विषयो व्यवहार्यतामेति ॥
सात्त्विकराजसतामसभेदात्संजायते पुनस्त्रेधा । स च तैजसवैकारिकभूतादिकनामभिः समुच्छ्वसिति ॥
तैजसतस्तत्र मनो वैकारिकतो भवन्ति चाक्षाणि । भूतादेस्तन्मात्राण्येषां सर्गोऽयमेतस्मात् ॥ इति ।

तत्र विरुद्धांशो बाह्यशैवागममूलत्वेनानादरणीयः । एवं **भगवत्पराशरा**द्युक्तप्रमाणतमपुराणाद्यानुगुण्येन पुराणान्तरादिवचनादीनि निर्वाह्याणि । अत्यन्तविरुद्धानि त्वनादेयानि ॥

**इन्द्रियाणि तद्विभागाश्च** ॥ प्राणाद्यन्यत्वे सति हृत्कर्णचक्षुरादिशरीरप्रदेशविशेषावच्छिन्नव्यापारतया तत्तत्कार्यविशेषशक्तमिन्द्रियम् । * अशरीरं प्राणधार्यमेव यद्द्रव्यं पुरुषोपकारकं तदिन्द्रियम् इति **वरदविष्णुमिश्रै**रुक्तम् । * सात्त्विकाहङ्कारोपादानकमिन्द्रियम् इति **साङ्ख्यादि**लक्षणमप्राकृतेन्द्रियाव्याप्तेरयुक्तम् । * शरीरसंयोगे सत्येव साक्षात्प्रमितिसाधनमप्रत्यक्षम्, साक्षात्कारसाधनम् इत्यादि **वैशेषिका**द्युक्तं तु कर्मेन्द्रियाव्याप्त्यादेरनुपपन्नम् । वक्ष्यते च वागादीनामिन्द्रियत्वम् । द्विधेन्द्रियं प्राकृतमप्राकृतमिति । शुद्धाशुद्धसत्त्वयोगादेस्तद्भेदः । अव्यक्तमहदहङ्कारेष्वपि प्राकृताप्राकृतविभागोऽस्तीति केचिदाचार्याः । शब्दतन्मात्रसहभवत्वसात्त्विकाहङ्कारोपादानद्रव्यत्वादि प्राकृतेन्द्रियलक्षणम् । पुनश्च

इन्द्रियं द्विविधं ज्ञानेन्द्रियं कर्मेन्द्रियमिति । ज्ञानप्रसरणशक्तमिन्द्रियं ज्ञानेन्द्रियम् । तत् षोढा—मनःश्रोत्रादिभेदात् । उक्तश्चैवंविभागस्तत्त्वरत्नाकरे **भट्टपराशरपादैः**—* तच्च षोढा इत्युपक्रम्य, *आन्तरं मनः इत्यन्तेन । मनःपूर्वकत्वात्सर्वप्रवृत्तीनां मनः कर्मेन्द्रियमिति **साङ्ख्यादयः** । यदाहुः—

*बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनात्वगाख्यानि । वाक्पाणिपादपायूपस्थं कर्मेन्द्रियं ह्याहुः ॥

उभयात्मकमत्र मन इति, तदसत्; तस्य च ज्ञानद्वारैव कर्महेतुत्वात् । तावता च तथात्वे चक्षुरादावपि प्रसङ्गात् । क्वचित्कर्मेन्द्रियत्वव्यवहारस्तु औपचारिकः । मानसवाचिककायिककर्मविभागस्तु कर्मशब्दस्य शुभाशुभसङ्कल्पादिरूपज्ञानेऽपि प्रयोगात् । अतः षडपि ज्ञानेन्द्रियाणि । तत्र प्राकृतविभागं प्रत्युच्यते ॥

**प्राकृतमनश्श्रोत्रे** ॥ अशुद्धसत्त्वे सति पञ्चविषयसाधारणेन्द्रियत्वम्, स्मृतिकरणेन्द्रियत्वम् इत्यादि प्राकृतमनोलक्षणम् । तच्च हृत्प्रदेशमात्राधिष्ठानम् । इन्द्रियान्तराणामपि हृत्प्रदेश एव कन्दस्थानम् । स्थानान्तरेष्वपि यथासंभवं वृत्तिः । आत्मनोऽपि त[त्र]त्रैव भूयसा वृत्तिः । तथा च **भाष्यम्**—*सर्वेन्द्रियकन्दभूतस्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम् इति । मन एकमेव अन्तःकरणम्, सङ्कल्पाध्यवसायादयस्तद्व्यापारभेदादेव जायन्ते इति नान्तःकरणवैविध्यम् । तथा च **भाष्यम्**—* अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यते इति । उदाहृतं चैतत् **प्राणे** सूत्रकारैः *पञ्चवृत्तिर्मनोवद्व्यपदिश्यते इति । अतः अन्तःकरणं त्रिविधम् इत्यादिवादिनः **साङ्ख्यादयो** निरस्ताः । शब्दादिपञ्चके शब्दमात्रग्रहणशक्तमिन्द्रियं प्राकृतश्रोत्रम् । तन्मनुष्यादीनां कर्णशष्कुल्यवच्छिन्नवृत्ति । द्विजिह्वानां नयनवृत्ति । तदुक्तं **न्यायतत्त्वे करणपादाष्टमाधिकरणे**—*चक्षुषा श्रवणं सर्पाणामेवेति नियम्यते इत्यादि । यत्तूक्तं **तत्त्वरत्नाकरे**—*कर्णशष्कुलीशरीरनयनगोलकरसनानासिकाधिष्ठानानि च तानि इति, तत्प्रायिकं मन्तव्यम् । एतस्य नाभसत्वदिगुपादानत्ववादानामनन्यथासिद्धाहङ्कारिकत्ववचनबलादाप्यायितत्वादिभिर्निर्वाहः । यत्तु **करणपादपञ्चमाधिकरणे** नेत्रश्रोत्रादिशक्तीनामालोकशब्दाद्यात्मकत्वमुक्तम्, यच्च तथैव **सप्तमाधिकरणे** *अन्नस्य अतिसूक्ष्मपरिणाममिन्द्रियम् इत्यादिना, *कर्मेन्द्रियाणामप्यन्नपरिणामत्वात् इत्यादिना च इन्द्रियाणां भौतिकत्वं प्र[तिपादि]तोतम्; तदप्यखिलमाप्यायनाभिप्रायेण निर्वाह्यम् । तथैव हि स्मृतिवचनमपि **वेदार्थसंग्रहे** निर्व्यूढम् । यथा—*वैकारिकाहङ्कारादेकादशेन्द्रियाणि जायन्ते इति हि वैदिकाः इत्युपक्रम्य, *एवमाहङ्कारिकाणामिन्द्रियाणां भूतैश्चाप्यायनं **महाभारत** उच्यते इति । श्रोत्रं भौतिकं बाह्येन्द्रियत्वात्, आकाशः इन्द्रियारम्भको भूतत्वात्, शब्दः स्वसमानजातीयगुणवता इन्द्रियेण गृह्यते बहिरिन्द्रियव्यवस्थाहेतुगुणत्वात्, श्रोत्रं स्वग्राह्यगुणसजातीयगुणवत् बहिरिन्द्रियत्वात् इत्यादीनां चक्षुराद्यभौतिकत्वस्य वक्ष्यमाणत्वात् साध्यविकलत्वश्रुतिबाधादिदूषणानि वाच्यानि ।

शब्दस्य भूतधर्मत्वात् श्रुतेर्वैकारिकत्वतः । संयुक्तनिलयो योग्यः स तया संप्रतीयते ॥

शब्दस्य द्रव्याद्रव्यत्वश्रोत्रगमनशब्दागमनादिविवादमद्रव्ये शमयिष्यामः ॥

**त्वगादीन्द्रियाणि** ॥ त्वगादीनामपीन्द्रियाणां पूर्वोक्तश्रोत्रलक्षणे शब्दमात्रपदस्थाने क्रमात् स्पर्शमात्रादिपदन्यासेन लक्षणमूह्यम् । तत्र त्वगाश्रयः कृत्स्नं वपुः । प्रदेशभेदेन स्पर्शोपलम्भतारतम्यम् । नखदन्तकेशादिषु स्पर्शानुपलम्भश्च प्राणमान्द्यतारतम्यादिति **करणपादाष्टमाधिकरणे** प्रोक्तम् । यथायोग्यं वाय्वादिचतुष्टयं संयोगेन तया गृह्यते । स्पर्शादयस्तु संयुक्तनिष्ठतया । चक्षुरादीनामाश्रयाः नयनगोलकतालुनासाः । तत्र गजानां नासा हस्त इति पाणिघ्राणयो-

